Government Oriental Library Series

*Edited by Pandits under the supervision of the Curator, Govt Oriental Library, Mysore*

BIBLIOTHECA SANSKRITA—No




# बोधायनधर्मसूत्रम्

श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम्.

---

# THE BODHÂYANA-DHARMA-SÛTRA

WITH THE COMMENTARY OF

GÔVINDASVÂMIN

EDITED BY


L. S'RINIVÂSÂCHÂRYA,

*Assistant Pandit Government Oriental Library, Mysore*



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF MYSORE

1907

# भूमिका.



अथास्यां प्रबन्धावल्यां प्राक्प्रकटीकृतं आपस्तम्बीयं गृह्यसूत्र धर्मसूत्रं च सव्याख्यानं, बोधायनीयं च गृह्यसूत्रम्। अधुना पुनः बोधायनीयं धर्मसूत्रं श्रीमता गोविन्दस्वामिना प्रणीतेन विवरणेन सार्धं सममुद्र्यत। इदं विवरणमल्पग्रन्थमतिगभीरं च। अतो विज्ञायते सोऽयं गोविन्दस्वामी प्राचीनः पण्डितप्रवरश्चेति॥

यद्यपि न शक्यतेऽस्य देशः कालो वा विशिष्य निर्णेतुम्। तथाऽपि तदुदाहृतप्रबन्धप्रणेतॄणपेक्षया तस्यार्वाक्त्वं सिद्ध्यति हि यथा—

अस्मिन् विवरणे तत्र तत्र समुदाहृतवचननिचये आपस्तम्बगौतमवसिष्ठानां धर्मसूत्रवचनं, बोधायनीयमेव गृह्यगृह्यपरिभाषापितृमेधमहाप्रवरवचनं, मनुदक्षयाज्ञवल्क्यनारदपराशरव्यासप्रमुखानां स्मृतिवचनं च दृश्यते॥

तथा प्रथमप्रश्नतृतीयाध्यायारम्भे—"आहुश्च न्यायविदः अज्ञानादिनियमस्य पर्यवसानं वेदाध्ययनसमकालमाहुः" इत्यनेन वाक्येन "अज्ञानादिनियमस्य" इत्यादि शबरस्वामिभाष्यवाक्यमुदाहृतम्। तथा प्रथमाध्याये एकविंशतितमसूत्रव्याख्यायां "स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति, तथा—अहिच्छत्रब्राह्मण्यस्सुरां पिबन्ति" इत्येतत् भट्टकुमारिलवाक्यमुदाहृतमवलोक्यते॥

तथा—द्वितीयप्रश्ने तृतीयाध्याये "पूज्यान् पूजयेत्" इति सूत्रव्याख्यानं महाकविकालिदासविरचितरघुवंशमहाकाव्ये प्रथमसर्गे पठितं "प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" इत्येकोनाशीतितमस्य श्लोकस्य उत्तरार्धम् ॥

अपिच—द्वितीये द्वितीयाध्याये एकपञ्चाशत्तमसूत्रव्याख्याने "चान्द्रायणे वा चान्द्रायणानीति गुरुलघुभावे वर्णविशेषेऽभ्यासविशेषे च" इति यज्ञस्वामिप्रणीतवासिष्ठधर्मसूत्रविवरणवचनमुदाहृतम् । संभाव्यते चासौ यज्ञस्वामी यादवभास्करकालानन्तरकालिकः यामुनाचार्यरामानुजाचार्यप्राकालिकश्चेति. यत श्रीमद्रामानुजीयभगवद्गीताभाष्यटीकायां - तात्पर्यचन्द्रिकायां श्रीवेदान्ताचार्यविरचितायां क्रमेण भगवद्गीताभाष्यप्रणेतृपरिगणनपरः "पिशाच रन्तिदेव गुप्त शङ्कर यादवप्रकाश भास्कर नारायणार्य यज्ञस्वामिप्रभृतिभि स्वंस्वं मतमास्थितैः परदशतैर्भाष्यकृद्भिरस्मत्सिद्धान्ततीर्थकरैश्च भगवद्यामुनाचार्यभाष्यकारादिभिरविगीतपरिगृहीतोऽयमत्र सारार्थः" इति ग्रन्थः पठ्यते. तत्रोल्लिखितो गीताभाष्यप्रणेता यज्ञस्वाम्यसावेव-स्यात्। इति ॥

अयं चापरो विशेष—अत्र विवरणे भूयांस्युदाहृतानि मनुवचनानि वासिष्ठधर्मसूत्रवचनानि च. बह्वृचानामेवेदं वासिष्ठं धर्मसूत्रं, तस्मादनुमीयते बह्वृचस्स्यादेष गोविन्दस्वामीति । आस्तां विस्तरः ॥

——❋——

# आदर्शपुस्तकानि.

———o———

तत्रैतत्कोशागारस्थाः कोशा एव पञ्च.

| | | | | | | |
|---|---|---|---|---|---|---|
| 1 | मूलं | तालपत्रं. | नागराक्षरं. | 405 नं. | अनतिशुद्धं. | समग्रम्. |
| 2 | ,, | ,, | ग्रन्थाक्षरं | 515 ,, | ,, | ,, |
| 3 | विवरणम् | ,, | ,, | 930 ,, | ,, | ,, |
| 4 | ,, | कागदमयम् | आन्ध्राक्षरं | A138 ,, | ,, | ,, |
| 5 | ,, | ,, | ,, | A144 ,, | ,, | ,, |
| 6 | ,, | तालपत्रं | ग्रन्थाक्षरं तंजावूरुजिल्ला कादिरमङ्गलाग्रहारस्थित ब्रह्मश्री ॥ सुब्रह्मण्यशास्त्रिणां पुस्तकम्. | | | |
| 7 | ,, | ,, | ग्रन्थाक्षरं श्रीमन्महीशूर महाराजमन्दिरस्थितसरस्वतीभाण्डागारे संगृहीतं पुस्तकं च समग्रं शुद्धं चेति. | | | |

एतानि पञ्च विवरणपुस्तकान्यादर्शीकृत्य परिशोधितोऽयं प्रबन्धः यद्यपीमानि पुस्तकान्येतद्देशीयान्येव अशुद्धिस्थलेऽक्षरलोपस्थले च सर्वत्रैकरूप्यस्यैव दर्शनात् । विदेशीयं च पुस्तकं नाद्यावधि समासादितम् । तथाऽपि समुपलब्धस्याप्यप्रकाशे आत्यन्तिकं विलोपं संभाव्य स्थितस्य प्रकाशः श्रेयानिति निश्चित्य प्रकटीकृतमिदं श्रीमद्भगवद्बोधायनधर्मसूत्रं सविवरणमिति सुमङ्गलम् ॥

—※◎※—

# विषयानुक्रमणिका.



प्रथमप्रश्ने—

# शुद्धिपत्रम्.

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम्. |
| --- | --- | --- | --- |
| 2 | 12 | ततः | तत्र |
| 3 | ,, | अह | अत्र |
| 15 | 18 | वाणि | पाणि |
| 33 | 5 | आश्माना | प्रमाना |
| 49 | 15 | वप्तुरि | वप्तुर्दिरि |
| 51 | 13 | . | उग्विष्ट |
| 85 | 12 | प्रयण | प्रयाणा |
| ,, | 15 | मन्तान | मन्तेन |
| 193 | 17 | वान्दाल्यां | वान्दाभ्यां |
| 212 | 13 | हृषती | वृषली |
| 216 | 19 | तृतीय | द्वितीय |
| 262 | 2 | आनानि | आनाति |
| 3[illegible]4 | 8 | विराज | स्थिराज |
| 318 | 6 | वहिष्य | वहिष्य |
| 365 | 11 | दव | देव |
| 379 | 19 | म्याहत | म्याहत |




श्रीः

# बोधायनधर्मसूत्रं

## गोविन्दस्वामिप्रणीतव्याख्यासमेतम्.

---

### उपदिष्टो धर्मः प्रतिवेदम् ॥ १ ॥

प्रतिशाखमतीन्द्रियार्थप्रतिपादको नित्यो ग्रन्थराशिर्वेदः । तत्प्रतिपाद्यो धर्मः । यद्यप्येकैकस्यां शाखायां परिपूर्णान्यङ्गानि । तथाऽपि कल्पसूत्रान्तरैश्शाखान्तरोक्तांशो[1]पसंहार क्रियन्त एव ॥ १ ॥

### तस्यानु व्याख्यास्यामः ॥ २ ॥

अन्विति । पश्चादित्यर्थः ॥ २ ॥

### स्मार्तो द्वितीयः ॥ ३ ॥

अनुभूतविषयासम्प्रमोषः स्मृतिः । तदभिव्यञ्जको ग्रन्थः स्मृतिशब्देनोपचर्यते । स्मार्तः स्मृत्युपदिष्टः । अनुव्याख्याग्रहणं स्मार्तस्य धर्मस्य कल्पविधिमन्त्रार्थवादमूलत्वप्रदर्शनार्थम् । तच्च 'धन्वन्निव प्रपा असि'[2] 'तस्माच्छ्रेयांसं पापीयान् पश्चादन्वेति'[3] इत्यत एव प्रपागुर्वनुगमादीनां कर्तव्यतामवगम्य तत्कर्तव्यता स्मृतिशास्त्रकारैरुपदिश्यते । अत एव द्वितीयः । एवं तस्य श्रौतधर्मविवेक

---

[1] ग. रोजाशो.   [2] तै. सं. २-५-१२.   [3] तै. सं. ६-६-३.

इति धर्मदौर्बल्यं द्रष्टव्यम् । स च स्मार्तो धर्मः पञ्चविधो भवति— वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मश्चेति । तत्रापि साधारणविशिष्टभेदेन द्वैविध्यं द्रष्टव्यम्—'द्विजातीनामध्ययनम्' इत्यादिः साधारणो वर्णधर्मः । 'ब्राह्मणस्याधिकारः प्रवचनयाजनप्रतिग्रहाः' इत्यादिर्विशिष्टः । तथा—आश्रमधर्मो दयादिस्साधारणः । अग्नीन्धनादिर्विशिष्टः । तथा—वर्णाश्रमधर्मोऽप्यग्नीन्धनादिस्साधारणः । बैल्वदण्डधारणादिर्विशिष्टः । अभिषेकादिगुणयुक्तस्य राज्ञो रक्षणं वर्णधर्मः । हिंसादिर्निमित्तधर्मः । उपादेयानुपादेयतास्तौ गुणनिमित्तयोर्विशेषः ॥ ३ ॥

## तृतीयश्शिष्टागमः ॥ ४ ॥

धर्म इत्यनुषज्यते । शिष्टैरागम्यत इति शिष्टागमः । शिष्टैराचरित इत्यर्थः । ततः प्रत्यक्षश्रुतिविहितः प्रथमो धर्मः । प्रकीर्णमन्त्रार्थवादमूलो द्वितीयः । तृतीयस्तु प्रलीनशाखामूलः । सर्वेषां वेदमूलत्वेऽपि दौर्बल्यमर्थवादप्रसङ्गा[1]द्वेदितव्यम् ॥ ४ ॥

अथ शिष्टानाह—

**शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः ॥ ५ ॥**

खल्विति वाक्यालङ्कारार्थो निपातः । मात्सर्यं परगुणाक्षमता । अहङ्कारः अभिजनविद्यानिमित्तो गर्वः । कुम्भीधान्याः दशाहं

[1] ग. प्रकर्षो.

जीवनोपयिकधान्या । अनेन सन्तुष्टतोपलक्ष्यते । अलोलुपता वैतृष्ण्यम् । दम्भो लोकप्रत्ययार्थं धर्मध्वजोच्छ्राय । दर्पो धर्मातिरेकान्मतिहर्ष । लोभ प्रसिद्ध । मोह कृत्याकृत्यविवेकशून्यता । दम्भादिविवर्जिताः ॥ ५ ॥

किञ्च—

धर्मेणाधिगतो येषां वेदस्सपरिबृंहणः ।
शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतव
इति ॥ ६ ॥

येषामिति कृद्योगे षष्ठी 'कर्तृकर्मणो कृति' इति । इतिहासपुराणाभ्या सहितो वेदो अन्यतोऽप्येतश्च यैरवगत इत्यर्थ । बृहणग्रहण श्रुतिस्मृतिसदाचारशास्त्राणामप्युपलक्षणार्थम् । श्रुतिप्रत्यक्षहेतवश्च श्रुतिरेव प्रत्यक्ष कारणमस्य धर्मस्येति येषा दर्शनमिति विग्रह । अनेन मीमासका कीर्तिता । अतएव तदनुमानज्ञाः ते भवन्ति स्मार्तशिष्टागमयोरश्रुत्यनुमानविद इत्यर्थ । एव च शास्त्राधिगतो यो धर्मस्सोऽनुष्ठेय इत्यभिप्राय ॥ ६ ॥

तदभावे दशावरा परिषत् ॥ ७ ॥

उक्तलक्षणशिष्टाभावे दशावरा परिषत् तया यो विधीयते सोऽनुष्ठेय इत्यर्थ ॥ ७ ॥

ता च परकीयमतेन प्रदर्शयितुमाह—

अथाप्युदाहरन्ति—

चातुर्वैद्यं[1] विकल्पी च अङ्गविद्धर्मपाठकः ।

[1] चातुर्वेद्य

**आश्रमस्थास्त्रयो विप्राः पर्षदेषा[1] दशावरा ॥ ८ ॥**

चतस्र एव विद्याश्चातुर्वैद्य तेन तद्विदो लक्ष्यन्ते । विकल्पी मीमासक । अङ्गं व्याकरणादि तज्ज्ञ । धर्मपाठक तन्मूलिका तदर्थावगतिरिति पाठग्रहणम् । तदभिज्ञ इत्यर्थ । तान् विशिनष्टि— आश्रमस्थास्त्रयो विप्राः अवानप्रस्थास्त्रयो गृह्यन्ते । वानप्रस्थाना पुनर्वनाधिवासत्वादनधिकारो धर्मोपदेशस्य । परिव्राजकोऽपि भिक्षार्थी ग्राममीयादेव । तथा च गौतम —'प्रागुत्तमात्त्रय आश्रमिण'[2] इति । विप्रा इति क्षत्रियवैश्ययोर्धर्मोपदेशानधिकारप्रदर्शनार्थं विप्रग्रहणम् । 'ब्राह्मणो धर्मान् प्रब्रूयात्'[3] इति वसिष्ठवचनाच्च । 'आश्रमस्थास्त्रयो मुख्या' इति पाठे नैष्ठिकब्रह्मचारी गृह्यते । यथा धर्मस्कन्धब्राह्मणेताननुक्रम्य 'सर्वे एते पुण्यलोका भवन्ति'[4] इत्याह । एवंगुणास्त्रय आश्रमिणो दशावरा परिषद्भवति ॥ ८ ॥

अथानुकल्पमाह—

**पञ्च वा स्युस्त्रयो वा स्युरेको वा स्यादनिन्दितः ।**
**प्रतिवक्ता तु धर्मस्य नेतरे तु सहस्रशः ॥ ९ ॥**

सम्भवापेक्षो विकल्प । अनिन्दितः पक्षपातादिदोषरहित । तृतीयो वाशब्दोऽपिशब्दस्यार्थे द्रष्टव्य । आह च—

एकोऽपि वेदविद्धर्मं य व्यवस्येद्विचक्षण । इति ॥[5]

---

[1] परिषदेषा [2] गौ ध २८-४९. [3] वा. ध १-४०.
[4] छा. उ २-२३-२. [5] मनु १२-११३.

अपिशब्दादेकेन न वाच्यम्। वक्ष्यति च 'बहुद्वारस्य धर्मस्य'[1] इति। तुशब्दोऽवधारणार्थः ॥ ९ ॥

**अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। सहस्रशस्समेतानां परिषत्त्वं न विद्यत इति ॥ १० ॥**

'नेतरे तु सहस्रशः' इति सामर्थ्ये सत्यारम्भादत्यन्तापद्यव्रतादीननुगृह्णाति। आह च—

जातिमात्रोपजीवी च कामं स्याद्ब्राह्मणब्रुवः।
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥ इति ॥[2]

'नेतरे तु सहस्रशः' इत्युक्तम्, तत्रैव निन्दामाह—

**यथा दारुमयो हस्ती यथा चर्ममयो मृगः।**
**ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥ ११ ॥**

स्पष्टम् ॥ ११ ॥

अत्यन्तापद्यपि एकोद्दिष्टवक्तृणा दोषोऽस्तीति दर्शयितुमाह—

**यद्वदन्ति तमोमूढा मूर्खा धर्ममजानतः। तत्पापं शतधा भूत्वा वक्तॄन् समधिगच्छति ॥ १२ ॥**

---

[1] १-१३. [2] मनु. ८-२०.

व्यवहारं प्रायश्चित्तादिक यद्वदन्ति तमसा अन्धकारेणाविष्टा अजानत अजानन्त यस्मिन् पापकर्मणि यभि प्रायश्चित्तं विहितमिति शेप ॥ १२ ॥

'एको वा स्यादनिन्दितः'[1] इति यदुक, तत्राह—

बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः।
तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशये ॥ १३ ॥

अनेकश्रुतिस्मृतिसदाचारप्रमाणत्वाद्धर्मस्य बहुद्वारत्वम् । अत एव चास्य सूक्ष्मत्व दुरनुगत्व च । तथाहि—

शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः ।
नानाप्रकरणस्थत्वात्सूक्ष्मा दुरनुगा गति ॥

तस्मात् इत्युपसहार ॥ १३ ॥

बहव पुन —

धर्मशास्त्ररथारूढाः वेदखड्गधरा द्विजाः ।
क्रीडार्थमपि यद्ब्रूयुस्स धर्मः परमस्स्मृतः ॥

शिष्टाना प्राबल्य प्रदर्शयितु धर्मशास्त्राणि वेदाश्च रथायुधैरुपमीयन्ते ॥ १४ ॥

शिष्टैर्हि वर्णाश्रमादयो व्यवस्थापिता । तेषु पाप न लिप्यत इत्याह—

[1] १-६

यथाऽश्मनि स्थितं तोयं मारुतार्कौ प्रणाशयेत् । तद्वत्कर्तरि यत्पापं जलवत्संप्रलीयते ॥ १५ ॥

अथैनामविनोऽप्यवस्थां परिज्ञाय प्रायश्चित्तं विधीयत इत्याह—

शरीरं बलमायुश्च वयः कालं च कर्म च ।
समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तानि निर्दिशेत् ॥ १६ ॥ १ ॥

शरीरं वातप्रकृतिकं पित्तप्रकृतिकमित्यादि वा । आयुः ज्ञानं, अयतेर्गत्यर्थाद्दोणादिक उण्प्रत्ययः । वयः बाल्यादिलक्षणम् । कालः शीतोष्णादिलक्षणः । कर्म प्रायश्चित्तस्य निमित्तभूतं सानुबन्धं हिंसादि ॥ १६ ॥

श्रौतस्मार्तशिष्टागम इति त्रिविधो धर्मो व्याख्येयः । तत्र व्यवस्थितशिष्टाचरितानां धर्माणाम्—

पञ्चधा विप्रतिपत्तिः दक्षिणतस्तथोत्तरतः ॥

दक्षिणेन नर्मदामुत्तरेण कन्यातीर्थम् । उत्तरतस्तु दक्षिणेन हिमवन्तमुदग्विन्ध्यस्य । एकदेशप्रसूताना शिष्टाना परस्परं पञ्चधा विप्रतिपत्ति विसंवाद 'यान् पदार्थान् दाक्षिणात्याः' इत्यादि॥

तत्र प्रथमम्—

यानि दक्षिणतस्तानि व्याख्यास्यामः ॥ १८

निगदव्याख्यातमेतत् ॥ १८ ॥

तत्रेमान्युदाहरणानि—

यथैतदनुपेतेन[1] सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति ॥ १९ ॥

गमनमिति सम्बन्धः ॥ १९ ॥

अथोत्तरतः ऊर्णाविक्रयः शीधुपानं उभयतोदद्भिर्व्यवहारः आयुधीयकं समुद्रसंयानमिति ॥ २० ॥

ऊर्णायास्तद्विकारस्य च कम्बलादेर्विक्रयः । उभयतो दन्ता अश्वादय । व्यवहारः विक्रयादि । आयुधीयकं शस्त्रधारणम् । समुद्रसंयान नावा द्वीपान्तरगमनम ॥ २० ॥

इतरदितरस्मिन् कुर्वन् दुष्यतीतरदितरस्मिन्॥

अनुपेतेन सह भोजनादीनुत्तरापथे कुर्वन् दुष्यति तत्रत्यैर्शिष्टैः दूष्यत इत्यर्थ. । एवमूर्णाविक्रयादीनि कुर्वन्नितरत्र । तस्मादनुपेतेन सह भोजनादीनि दाक्षिणात्यैर्शिष्टैराचर्यमाणत्वात् दोषाभावाच्च तैरेव कर्तव्यानि । ऊर्णाविक्रयादीनि चोदीच्यैरेव । तदेतद्भट्टकुमारिलैर्निरूपितम्—

स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति ॥ इति ॥

तथा हि—अहिच्छत्रब्राह्मण्यस्सुरा पिबन्ति ॥ इति च ॥ २१ ॥

[1]अनुपनीतेन.

ननु किमिति व्यवस्था ? यावता मूलश्रुतिरेषां विशेषेण कल्प्यते यथा होळकादीनाम् । यथा वा बोधायनीयं धर्मशास्त्रं कैश्चिदेव पठ्यमानं सर्वाधिकारं भवति । तथा गौतमीयगोभिलीये छन्दोगैरेव पठ्येते, वासिष्ठं तु बह्वृचैः, अथ च सर्वाधिकाराणि । यथा वा गृह्यशास्त्राणि सर्वाधिकाराणि, तद्वदनुपनीतसहभोजनादीन्यपि समानि भवन्तीत्याशङ्क्याह—

## तत्रतत्र देशप्रामाण्यमेव स्यात् ॥ २२ ॥

एवं व्यवस्थितविषयैव मूलश्रुतिः कल्प्यते । किन्त्विवमामनुपपत्तिं न कल्पयतीत्यभिप्रायः । तस्माद्व्यवस्थितविषयमेवानुष्ठानं तद्वर्जनं च ॥

## मिथ्यैतदिति गौतमः ॥ २३ ॥

गौतमग्रहणमादरार्थम् । नात्मीयं मतं पर्युदासितुम् । स ह्येवमाह—' देशकालजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम् '[1] तद्विरुद्धो देशादिधर्मो न कर्तव्यः । तद्विरुद्धश्चायम् । आह च गृत्समदः—' अनुपनीतसहभोजने द्वादशरात्राणि । उच्छिष्टभोजने द्विगुणम् ' इति । प्रायश्चित्तविधानान्निषेधः कल्प्यते । तथा ' स्त्रिया सहभोजने त्रिरात्रोपवासः घृतप्राशनं च ' । तथा ' पर्युषितभोजने अहोरात्रोपवासः ' इति संवर्तः । मातुलदुहितृगमनेऽप्याह—

सखिभार्यां समारुह्य मातुलस्यात्मजां तथा ।
चान्द्रायणं द्विजः कुर्यात्क्षुत्रमपि तथैव च ॥

[1] गौ-ध-११-२०.

तथा विवाहेऽपि—

पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुतः ॥ इति ॥[1]

आह च—

पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च ।

मातुश्च भ्रातुराप्तां च गत्वा चान्द्रायणं चरेत् ॥[2]

एवमूर्णाविक्रयादिष्वपि आम्नायविरोधः प्रसिद्धः । ऊर्णा तावदपण्येषु पठिता । शीधुपाने गौतमः—'नित्यं मद्यमपेयं ब्राह्मणस्य'[3]. इति । तथोभयदन्तव्यवहारे वसिष्ठः—'अश्वो लवणमपण्यम्' इति प्रकृत्य 'ग्राम्यपशूनामेकशफाः केशिनश्च'[4] इत्याह । तथा च श्रुतिः—'उभयादत्प्रतिगृह्याश्वं वा पुरुषं वा वैश्वानरं द्वादशकपालं निर्वपेत्'[5] इति प्रायश्चित्तम् । तथा आयुधीयकेऽपि 'परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत' इति । स्वयमेव पतनीयेषु समुद्रसंयानं वक्ष्यति । एवमादीन्यालोच्याम्नायैरविरुद्धाः प्रमाणमित्युक्तम् । अतो 'मिथ्यैतदिति गौतमः' इत्युपपन्नं भवति ॥ २३ ॥

एतदेव स्वमतमित्याह—

## उभयंचैव नाद्रियेत शिष्टागमविरोधदर्शनात् शिष्टस्मृतिविरोधदर्शनाच्च ॥ २४ ॥

शिष्टागमविरोधस्तावत्स्वयमुदितः 'पञ्चधा विप्रतिपत्तिः' इत्यत्र । स्मृतिविरोधश्च शिष्टस्मृतिविरोधः, सोऽपि दर्शित एव । एकसूत्रतां

---

[1] वा–ध. ८-२.  [2] मनु–११—१७२.  [3] २—२०.
[4] २—२८.  [5] तै. सं. २-२-६.

त्वेके मन्यन्ते । यथा होळकादयो व्यवस्थितदेशविषया व्यवस्थिताः कर्तव्याः इत्थमिमेऽपीत्यस्य चोद्यस्य व्यवस्थितदेशश्रुत्यनुमानमुक्तं 'तत्रतत्र देशप्रामाण्यमेव स्यात्' इति । तत्राह— 'उभयं चैव नाद्रियेत शिष्टस्मृतिविरोधदर्शनात्' इति । स च विरोध उक्तः । तस्माद्विरुद्धत्वाद्धोळकाद्यनुष्ठानं सर्वाधिकारकम् । इह विरोधादनुपनीतसहभोजनादिवर्जनं सर्वाधिकारमिति शेषः । आहुश्च न्यायविदः 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति ॥ २४ ॥

अथ शिष्टदेशानाह—

प्रागदर्शना[1]त्प्रत्यक्कालकवनाद्दक्षिणेन हिमवन्तमुदक्पारिपात्रमेतदार्यावर्तं तस्मिन् य आचारस्स प्रमाणम् ॥ ॥ २५ ॥

तत्रापि शिष्टस्मृतिविरोधेऽनपेक्ष्यमेव ॥ २५ ॥

गङ्गायमुनयोरन्तरमित्येके ॥ २६ ॥

आर्यावर्तत्वे विकल्पः ॥ २६ ॥

अथाप्यत्र भाल्लविनो गाथामुदाहरन्ति ॥

आर्यावर्तान्तरप्रदर्शनार्थं भाल्लविनः छन्दोगविशेषाः गाथा श्लोकम् ॥ २७ ॥

---

[1] प्राग्दर्शना.

तमाह—

पश्चात्सिन्धुर्विसरणी[1]सूर्यस्योदयनं पुरः ।
यावत्कृष्णा विधावन्ति तावद्धि ब्रह्म-
वर्चसमिति ॥ २८ ॥

कृष्णः कृष्णमृगः । ब्रह्मवर्चसं अध्ययनविज्ञानानुष्ठानसम्पत् । म्लेच्छदेशस्त्वतः परम् ॥ २८ ॥

तदाह—

आवन्तयोऽङ्गमगधाः सुराष्ट्रा दक्षिणापथाः ।
उपावृत्सिन्धुसौवीरा एते सङ्कीर्णयो-
नयः ॥ २९ ॥

स्त्रीषु व्यवस्था नास्तीति यावत् । अवन्त्यादिषु कल्याणाचारो नास्ति ॥ २९ ॥

किञ्च—केचिद्देशाः प्रवेशार्हा न भवन्ति । तत्प्रवेशे प्रायश्चित्तविधानात् । तत्र दूरोत्सारितमाचारग्रहणमित्याह—

आरट्टान् कारस्करान् पुण्ड्रान् सौवीरान्
वङ्गान् कलिङ्गान् प्रानूनानिति च
गत्वा पुनस्तोमेन यजेत सर्वपृष्ठया
वा ॥ ३० ॥

---

[1] सिन्धुविभरणी. [2] सायाद्विप्रे.

पुनस्तोमो नाम एकाहः । इष्टप्रथमसोमस्यैव प्रायश्चित्तमेकाहो(कं) द्रष्टव्यम् । 'यदि पद्भ्यामेव विशेषं कुर्वीतेष ह वै पद्भ्यां पापं करोत्यारट्टान् कारस्करान् पुण्ड्रान् सौवीरान् वा गच्छति' इति । सर्वपृष्ठेष्टिस्त्वाहिताग्निमात्रस्य । सा च 'य इन्द्रियकामो वीर्यकामस्स्यात्'* इत्यत्र विहिता । अनाहिताग्नेस्तु वक्ष्यति—'प्रतिषिद्धदेशगमने' इति ॥ ३० ॥

पुनरप्याहिताग्नेरेव देशान्तरगमने प्रायश्चित्तमाह—

अथाप्युदाहरन्ति—

पद्भ्यां स कुरुते पापं यः कलिङ्गान् प्रपद्यते । ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः ॥ ३१ ॥

वैश्वानरीयेष्टिः । एषा च कलिङ्गगमने सर्वपृष्ठया सह विकल्प्यते । अथ वा—आरट्टादिषु न गमनादेव प्रायश्चित्तं, किं तर्हि सम्भाषणसहासनादिभिरपि । कलिङ्गे पुनर्गमनमात्रमिति विशेषः ॥ ३१ ॥

अथाप्याह—

बहूनामपि दोषाणां कृतानां दोषनिर्णये । पवित्रेष्टिं प्रशंसन्ति सा हि पावनमुत्तममिति ॥ ३२ ॥

निर्णये नितरां नये अपनोदने । पवित्रेष्टिश्च यज्ञप्रायश्चित्तेषु प्रसिद्धा ॥ ३२ ॥

---

* तै. सं. २-३-७.

अथैतत्प्रसङ्गादाह—

वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च ।
ऋतावृतौ प्रयुञ्जानः पापेभ्यो विप्रमुच्यते॥
पापेभ्यो विप्रमुच्यत इति ॥ ३३ ॥ २॥

पवित्रेष्ट्याः पूर्वत्रग्रहणं प्रशंसार्थम्, इह तु ऋतावृतावीयति कालविधानार्थम्, आसामेकैकस्यामे[कैकश एव] प्रयोगः । द्विरुच्चारणमादरार्थं विशेषज्ञापनार्थम् ॥ ३३ ॥

इति बोधायनीयधर्मविवरणे गोविन्दस्वामिकृते
प्रथमप्रश्ने प्रथमोऽध्यायः.

—o—

ब्रह्मचर्यमुपयच्छेत् गुरुशुश्रूषणं तथा ।
समिद्भैक्षागुरूक्तीनां प्रायश्चित्तं विधीयते ॥

अथ ब्रह्मचर्यं प्रस्तूयते—तच्च समिदाधानं भिक्षाचरणमाचार्योक्तिकरणं स्वाध्यायाध्ययनं चेति । तच्चैतत् 'ब्राह्मणो वै ब्रह्मचर्यमुपयच्छेतामूतानि' इत्यत्र स्पष्टीकरिष्यति । तत्कियन्तं कालं चरितव्यमित्याह—

अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यम् ॥ १ ॥

पुरातनं पुराणं पौराणं कृतयुगपुरुषचरितम् । किं तत्?

वेदस्वीकरणार्थं ब्रह्मचर्यं उपनयनात् प्रभृत्यष्टाचत्वारिंशद्वर्षपरिमितं च । तदिदानीं-तनैरपि कर्तव्यमिति वाक्यशेषः । यद्वा— पौराणं पुराणैर्मन्वादिभिर्दृष्टमाचरितं च । अथ वा—अनादित्वात् पुराणो वेदः तत्र भवं पौराणम् । यद्वा—प्रसिद्धेतिहासपुराणप्रभवम् ॥ १ ॥

तस्यैव परिमाणान्तरमाह—

**चतुर्विंशतिं द्वादश वा प्रतिवेदम् ॥ २ ॥**

वर्षाणीत्यनुवर्तते । वाशब्दश्च प्रत्येकमभिसम्बध्यते ॥ २ ॥

**संवत्सरावमं वा प्रतिकाण्डम् ॥ ३ ॥**

प्राजापत्यादीनां पञ्चानामपि काण्डानामेकैकस्मिन् काण्डे संवत्सरावमं वा संवत्सराधिकमित्यर्थः । प्रतिशब्दो वीप्सार्थः ॥३॥

**ग्रहणान्तं वा ॥ ४ ॥**

यावता कालेन वेदस्वीकरणं भवति तावन्तं कालम् । एते च विकल्पाः सामर्थ्यापेक्षया द्रष्टव्याः । एतदुक्तं भवति—यावद्वेदस्वीकरणं तदर्थावबोधश्च न जायते तावन्नाश्रमान्तरप्रवेशाधिकार इति । तावदधीतवेदैराश्रमान्तरप्रवेशः कार्यः, स त्वधीतवेदाविप्लुतब्रह्मचर्येण न कार्यः । आह च—

वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥ इति ॥[1]

---

[1] मनु ३ २.

तथा च श्रुतिः—'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे'[1] इत्यादि ॥ ॥ ४ ॥

अधुना ग्रहणान्तापेक्षमेव स्थापयन् हेतुमाह—

## जीवितस्यास्थिरत्वात् ॥ ५ ॥

पौराणिकादिब्रह्मचरणं कार्यम् ॥ ५ ॥

श्रौतस्य कर्मणोऽग्निहोत्रादेर्विच्छेदः प्रसङ्गाद्युक्त इत्याशङ्क्य श्रुतिविरोधमेव दर्शयति—

## कृष्णकेशो ग्नीनादधीतेति श्रुतिः ॥ ६ ॥

अनया श्रुत्या विरोधात्स्मार्तानां पूर्वेषां पक्षाणां त्यागः ॥ ६ ॥

अथेदानीं ब्रह्मचर्यस्य उपनयनानन्तरारम्भं दर्शयितुमनुपनीतस्य शास्त्रचोदितकर्मानधिकारमाह—

## नास्य कर्म नियच्छन्ति किञ्चिदा मौञ्जिबन्धनात् । वृत्त्या शूद्रसमो ह्येष यावद्वेदेषु[2] जायत इति ॥ ७ ॥

प्रायशो नियमरूपत्वाद्विधिना नियच्छन्तीत्युक्तम् । तथा च गौतमः—'यथोपपातमूत्रपुरीषो भवति'[3] इति । ननु किमिति तस्य धर्मानधिकारः ? यावता सोऽपि त्रैवर्णिक एव । सत्यम्, तथाऽपि वृत्त्या शूद्रसमो ह्येषः । वृत्तिर्वर्तनमाचारः । तथा च

1 छा. उ. ८-१५-१. 2 वेदेन. 3 गौध. २-१.

गौतमः—'प्रागुपनयनात्कामचारवादभक्षः'[1] इति । वेदजननमस्योपनयनम् । ननु प्रागुपनयनाच्छूद्रसाम्ये पानादिष्वप्यदोषस्स्यात् । नैतदेवम्, शूद्रसम इत्यतिदेशान्न स्वयं शूद्रः, ततश्च न स्वजात्याश्रयधर्मनिवृत्तिर्भवति, जात्याश्रयश्च मधुपानादिप्रतिषेधः 'मद्यं नित्यं ब्राह्मणः'[2] इत्यादिस्मृतेः । अत्र पूर्वेणार्धेन विध्यभावमाह । इतरेण च प्रतिषेधाभावम् ॥ ७ ॥

उपनयनस्य कालमाह—

**गर्भादिसङ्ख्या वर्षाणां तदष्टमेषु ब्राह्मणमुपनयेत् ॥ ८ ॥**

गर्भाष्टमेष्वित्यर्थः । 'छन्दोवत्सूत्राणि' इतिव्यत्ययेन परस्मैपदम् । यद्यपि गर्भादिस्सर्वोऽप्युपनयनस्य कालः । तथापि प्राक्पञ्चमादसामर्थ्यान्निवृत्तिः । पञ्चमप्रभृतिष्वतएव 'पञ्चमे ब्रह्मवर्चसकामः' इत्यादिश्रुतिस्तदादिरेव गृह्यते ॥ ८ ॥

**त्र्यधिकेषु राजन्यमुपनयीत ॥ ९ ॥**

गर्भैकादशेष्विति यावत् ॥ ९ ॥

**तस्मादेकाधिकेषु वैश्यम् ॥ १० ॥**

गर्भद्वादशेष्वित्यर्थः ॥ १० ॥

अत्रापि विशेषमाह—

**वसन्तो ग्रीष्मश्शरदिति ऋतवो वर्णानुपूर्व्येण ॥ ११ ॥**

---

1 गौ. ध. २-१.

2 गौ. ध. २-२०.

. उदगयनमात्रेऽपि केचिदिच्छन्ति । आह चाश्वलायनः—'उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः'[1] इति । तस्मादुदगयनेऽपि योग्यं नक्षत्रमारभ्य । तदुपनयने कर्तव्यम् । अथ- कस्माद्वसन्तादिरुपनयनेनोपसंहारो न भवति ! । उच्यते—उदगयनशब्दानर्थक्यप्रसङ्गाच्चोपसंहारो युक्तः । उदगयन एव हि वसन्तो नान्यत्र, तस्माद्वसन्तेऽप्युपनयनं कर्तव्यम् । वसन्तादिश्रुतिः किमर्था ? प्रशंसाज्ञापनार्था । अतश्च शुक्रास्तमयादिविरोधेऽपि वसन्ते कर्तव्यमिति वाक्यार्थः ॥ ११ ॥

## गायत्रीत्रिष्टुब्जगतीभिर्यथाक्रमम् ॥ १२॥

उपनयीतेति शेषः ॥ १२ ॥

## आषोडशादाद्वाविंशादाचतुर्विंशादित्यनात्यय एषां क्रमेण ॥ १३ ॥

अनात्ययः अनतिक्रमः उपनयनकालस्य ॥ १३ ॥

## मौञ्जी धनुर्ज्या शाणीति मेखलाः ॥ १४ ॥

एषां क्रमेणेत्यनुषज्यते । मौञ्जी ब्राह्मणस्य मेखलेत्यादि ॥ १४ ॥

## कृष्णरुरुवस्ताजिनान्यजिनानि ॥ १५ ॥

एषां क्रमेण । अजिनशब्दः प्रत्येकमभिसम्बध्यते । कृष्णाजिनं ब्राह्मणस्येत्यादि । पुनरजिनग्रहणात् कुशशरजातिकं वा उत्तरीयं स्मृत्यन्तराद्वेदितव्यम् । न त्वेवानुत्तरीयस्यादित्यभिप्रायः ॥

---

[1] आश्व. गृ.

मूर्धललाटनासाग्रप्रमाणा याज्ञिकस्य वृक्षस्य दण्डाः[1] ॥ १६ ॥

एषां क्रमेणेत्यनुपज्यते । याज्ञिकवृक्षविशेषाः पालाशादयो गृह्य एवोक्ताः ॥ १६ ॥

तेषां मध्ये प्रतिगृह्येप्सितं दण्डं भिक्षाचरणे कर्तव्ये ब्राह्मणस्य तावन्मन्त्रोच्चारमाह—

भवत्पूर्वां भिक्षामध्यां याच्ञान्तां चरेत् सप्ताक्षरां क्षां च भिं[2]च न वर्धयेत्॥१७॥

भिक्षामन्त्रं व्यक्तमेवोच्चरेत् भवच्छब्दपूर्वां भिक्षाशब्दमध्यां याच्ञाप्रतिपादकशब्दान्तां सप्ताक्षरां च । एवं हि भवति भिक्षां देहीति सम्पन्नो भवति । तत्र च क्षाभिशब्दौ न वर्धयेत् नोच्चैराचक्षीतेत्यर्थः । वचने अवचने कण्वनिपातः । उच्चैराचक्षीतेति विधिर्गम्यते । यद्वा—ओदनादिः यद्द्रव्यभेदोऽत्र च भेदे न वर्धयेत् द्विवचनबहुवचनप्रयोगो न कर्तव्य इत्यर्थः । एवमुच्चारणमदृष्टार्थं भवति ॥ १७ ॥

अथ वर्णानुपूर्व्येण भिक्षामन्त्रोच्चारणवेलायां भवच्छब्दप्रयोगदेशमाह—

भवत्पूर्वां ब्राह्मणो भिक्षेत भवन्मध्यां राजन्यो भवदन्त्यां वैश्यस्सर्वेषु वर्णेषु ॥

[1] 'विशेषाः पूर्वोक्ताः' इत्यधिकपाठः. [2] 'हि'

ब्राह्मणग्रहणं वर्णान्तरार्थमनुवादः । वर्णग्रहणेनैव सार्ववर्णिकभैक्षाचरणे सिद्धे सर्वग्रहणात् प्रकृतविषयमिति गम्यते । प्रकृताश्च त्रैवर्णिकास्ततश्च पर्युदस्तश्शूद्रः । ननु प्रतिलोमपर्युदासार्थः किमिति न भवति ? भवतु, यदि शूद्रान्नभोजनप्रतिषेधपराणि वाक्यानि न स्युः, सन्ति हि तानि ॥ १८ ॥

## ते ब्राह्मणाद्यास्स्वकर्मस्थाः ॥ १९ ॥

स्वकर्मसु प्रसिद्धा. । तथा च गौतमः—'सार्ववर्णिकं भैक्षाचरणमभिशस्तपतितवर्जम्'[1] इति । ननु 'द्विजातिषु स्वकर्मस्थेषु' इति सूत्रयितव्ये किमिति सूत्रद्वयारम्भः ? सत्यं, अयं ह्याचार्यो नातीव ग्रन्थलाघवाभिप्रायो भवति । अथवा आरम्भसामर्थ्यादेव प्रशस्ताभावे सति अप्रशस्तद्विजातिष्विति न दोष इति गम्यते ॥

आह च मनुः—

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥
सर्वं हि विचरेद्ग्रामं पूर्वोक्तानामसम्भवे ॥[2]

गौतमीयेऽपि सर्ववर्णग्रहणमप्रशस्तपरिग्रहार्थमेव ॥ १९ ॥

उक्तं भिक्षाचरणं ब्रह्मचर्ये । अथ समिदाधानमाह—

## सदाऽऽरण्यात्समिध आहृत्यादध्यात् ॥ २० ॥

अग्नौ इति शेषः । आरण्यग्रहणं ससमित्कदेशप्रदर्शनार्थम् ॥ २० ॥

---

[1] गौ. ध. २-३५.  [2] मनु. २-१८३-१८५.

सत्यवादी ह्रीमाननहङ्कारः ॥ २१ ॥

स्यादिति शेषः ॥ २१ ॥

पूर्वोत्थायी जघन्यसंवेशी ॥ २२ ॥

गुरोस्स्यादिति शेषः ॥ २२ ॥

सर्वत्राप्रतिहतगुरुवाक्योऽन्यत्र पातकात् ॥

गुरोर्वाक्यप्रतिघातः तदर्थाकरणं विलम्बनं वा । सोऽत्र दृष्टादृष्टार्थेषु कर्मसु । यथा—विद्याग्रहणात् मधुरवचनं च । अन्यत्र पातकात् पतनीयात् यस्मिन् गुरुकर्मणि कृते ब्रह्महत्यादिना पतितो भवति तद्वर्जयेदित्यभिप्रायः ॥ २३ ॥

यावदर्थसम्भाषी स्त्रीभिः ॥ २४ ॥

तद्भाषणादतिप्रसङ्गस्सम्भवेदिति ॥ २४ ॥

नृत्तगीतवादित्रगन्धमाल्योपानच्छत्रधारणा-
ञ्जनाभ्यञ्जनवर्जी ॥ २५ ॥

वादित्रं पटहादि गन्धं चन्दनादि माल्यं पुष्पादि गन्धादिषु च त्रिषु धारणशब्दः प्रत्येकमभिसम्बध्यते । गन्धधारणमित्यादि । उपानद्ग्रहणं पादुकायाः अप्युपलक्षणार्थम् । अञ्जनमक्ष्णोः । अभ्यञ्जनं शिरसि ॥ २६ ॥

दक्षिणं दक्षिणेन सव्यं सव्येन चोपसंगृह्णीयाद्दीर्घमायुः स्वर्गं चेप्सन् ॥ २६ ॥

दक्षिणेन पाणिना गृह्णीत । इतरं चेतरेण । तदभिमुख एव । आह च—

'व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः ॥'[1] इति ॥

दीर्घमायुर्ध्यायन् स्वर्गं च ॥ २६ ॥

असावहं भो इति श्रोत्रे संस्पृश्य मनस्समाधानार्थम् ॥ २७ ॥

उपसङ्ग्रहणवेलायां च स्वश्रोत्रसंस्पर्शः कर्तव्यः चित्तसमाधानार्थम् । तत्र मन्त्रः—'असावहं भोः' इति । अस्मीति वाक्यसमाप्तिः । असावित्यात्मीयनामग्रहणम् । गोविन्दशर्मा नामाऽस्मीति प्रतिवचनयोगः ॥ २७ ॥

पादयोः कियान् देश उपसङ्ग्राह्य इत्यत आह—

अधस्ताज्जान्वोरा पद्भ्याम् ॥ २८ ॥

उपसंगृह्णीयादिति शेषः ॥ २८ ॥

तत्रापवादमाह—

नासीनो नासीनाय न शयानो न शयानाय नाप्रयतो नाप्रयताय ॥ २९ ॥

---

[1] मनु. २-७२.

उपसंगृह्णीयादित्यनुवर्तते । अप्रयतोऽशुचिः ॥ २९ ॥

काममन्यस्मै साधुवृत्ताय गुरुणाऽनुज्ञातः ॥

गुरोरन्यस्मै साधुवृत्ताय अनुष्ठानपराय विदुषे गुर्वनुज्ञया तत्सन्निधावप्युपसंगृह्णीयात् । कामग्रहणान्निवृत्तिरपि प्रतीयते । असन्निधौ तु विनाऽप्यनुज्ञया कुर्यादेव ॥ ३० ॥

शक्तिविषये मुहूर्तमपि नाप्रयतस्स्यात् ॥

शक्ताविति वक्तव्ये विषयग्रहणं ब्रह्मचारिणो वाऽप्यार्थे स्नाननिमित्ते स्नायादेव । आचमननिमित्तेऽप्याचामेदिति ॥ ३१ ॥

अथ पर्युदस्यति—

समिद्धार्युदकुम्भपुष्पान्नहस्तो नाभिवादयेद्यच्चान्यदप्येवं युक्तम् ॥ ३२ ॥

**समिद्धारी** समित्पाणिः । उदकुम्भादिषु हस्तशब्दः प्रत्येकमभिसम्बध्यते एवंयुक्तं पितृदेवताग्निकार्यादिषु व्याप्तो व्यापृतमपि नाभिवादयेत् ॥ ३२ ॥

न समवायेऽभिवादनमत्यन्तशः ॥ ३३ ॥

अत्यन्तशस्समवायेऽत्यन्तसमीपे स्थित्वेत्यर्थः ॥ ३३ ॥

भ्रातृपत्नीनां युवतीनां च गुरुपत्नीनां जातवीर्यः ॥ ३४ ॥

'न समवायेऽत्यन्तशः' इति वर्तते । जातवीर्यो जातशुक्रः ।

---

1क्ष प्राप्यें,

चशब्दात्पितृव्यादिपत्नीनामपि युवतीनाम् । स्थविराणां बालानां च न दोषः ॥ ३४ ॥

नौशिलाफलककुञ्जरप्रासादकटकेषु चक्रवत्सु चादोषं सहासनम् ॥ ३५ ॥

चक्रवन्तो रथशकटादयः । इतरे प्रसिद्धाः । एषु गुरुणा तत्पत्नीभिर्वा सहासनं अदोषं दोषावहं न भवति । अन्यत्र सदोषं सहासनमिति गम्यते ॥ ३५ ॥

प्रसाधनाच्छादनस्नापनोच्छिष्टभोजनानीति गुरोः ॥ ३६ ॥

शिष्येण कार्याणीति शेषः । प्रसाधनं मण्डनम् । आच्छादनं छत्रधारणम् । गात्रमलापकर्षणं वा । इतिकरणात् पादमर्दनपृष्ठधावनादयो गृह्यन्ते ॥ ३६ ॥

उच्छिष्टवर्जनं तत्पुत्रेऽनूचाने वा ॥ ३७ ॥

गुरुपुत्रेऽनूचाने वाऽप्युच्छिष्टभोजनवर्जनं कार्यम् । अनूचाने वा गुरुपुत्रेऽप्यनूचान एव शाखयासहाङ्गाध्यायिनि । वाशब्दोऽवधारणार्थः, अनूचान एवेति ॥ ३७ ॥

प्रसाधनाच्छादनस्नापनोच्छिष्टवर्जनं च तत्पत्न्याम् ॥ ३८ ॥

युवत्यामिति शेषः । स्थविराया आच्छादनादिप्राप्त्यर्थोऽयमारम्भः ॥ ३८ ॥

**धावन्तमनुधावेत् गच्छन्तमनुगच्छेत्तिष्ठन्तमनुतिष्ठेत् ॥ ३९ ॥**

ऋज्वेतत् ॥ ३९ ॥

**नाप्सु श्लाघमानस्स्नायात् ॥ ४० ॥**

श्लाघनं विकत्थनं तच्च क्रीडनं करताडनादिः । तथा च वसिष्ठः—'न पादेन पाणिना वा जलमभिहन्यान्न जलेन जलम्'[1] इति ॥ ४० ॥

**दण्ड इव प्लवेत् ॥ ४१ ॥**

अप्सूद्वर्तनप्रतिषेधोऽयम् ॥ ४१ ॥

**अब्राह्मणादध्ययनमापदि ॥ ४२ ॥**

अब्राह्मणात् क्षत्रियादेः । अध्ययने विशेषः—आपदि ब्राह्मणाभावे । अध्ययनं श्रवणस्यापि प्रदर्शनार्थम् ॥ ४२ ॥

**शुश्रूषाऽनुव्रज्या च यावदध्ययनम् ॥ ४३॥**

शुश्रूषा प्रसाधनादि । अनुव्रज्या अनुगमनम् । अयुक्तमेतादिति केचित् ॥ ४३ ॥

**तयोस्तदेव पावनम् ॥ ४४ ॥**

---

[1] वा. ध. ६-१६, १७.

पावनं शुचिहेतुः । एवं कृतेऽपि शिष्योपाध्याययोर्वर्णधर्मव्यतिक्रमदोषो नास्तीत्यभिप्रायः ॥ ४४ ॥

भ्रातृपुत्रशिष्येषु चैवम् ॥ ४५ ॥

शुश्रूषाऽतिदिश्यते यावदध्ययनम् । यवीयसामित्युपरितनसूत्रात् प्रतिकर्षो द्रष्टव्यः ॥ ४५ ॥

ऋत्विक्छ्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थायाभिभाषणम् ॥ ४६ ॥

अयमपि नियमोऽध्यापकानामेवमृत्विगादीनाम् । अभिभाषणं स्वागतादिशब्दप्रयोगः ॥ ४६ ॥

प्रत्यभिवाद इति कात्यः ॥ ४७ ॥

कतस्यापत्यं कात्यः स एवं मन्यते स्म ऋत्विगादिभिः प्रत्यभिवादः कर्तव्य इति । एषां प्रत्यभिवादनविधानादितैरभिवादनं कर्तव्यमिति गम्यते ॥ ४७ ॥

तत्र हेतुमाह—

शिशावाङ्गिरसे दर्शनात् ॥ ४८ ॥ ३ ॥

शिशुः किलाङ्गिरसः पितॄनध्यापयामास । तान् 'पुत्रकाः' इत्यामन्त्रयामास । तच्च न्याय्यमेवेति देवा ऊचुः । अनेनापि प्रकारेण ज्ञानत एव ज्येष्ठाः न वयस्त इति दर्शयति ॥ ४८॥

अनर्हाय विद्या न दातव्येत्याह—

**धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा । विद्यया सह मर्तव्यं न चैनामूषरे वपेत् ॥ ४९ ॥**

यथा कृषीवलश्शुभं बीजमूषरे न वपति । तथा च शुश्रूषादिवर्जिते विद्या न दातव्येत्यर्थः ॥ ४९ ॥

अयोग्याध्यापने दोषमाह—

**अग्निरिव कक्षं दहति ब्रह्मपृष्टमनादृतम् । तस्माद्वै शक्यं न ब्रूयात् ब्रह्ममानमकुर्वतामिति ॥ ५० ॥**

शक्यं मानमिति सम्बन्धः । वैशब्दः पादपूरणः । ब्रह्म विद्या मानं पूजा ॥ ५० ॥

ब्रह्मचर्यविधावेवेतिहासमाह—

**एवास्मै वचो वेदयन्ते ॥ ५१ ॥**

एवेत्येवमित्येतस्मिन्नर्थे । एवमस्य ब्रह्मचारिण इतिहासरूपं वचो वेदयन्ते वाजसनेयिनः । तच्च वक्ष्यमाणम् ॥ ५१ ॥

तदाह—

**ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् तस्मै ब्र-**

ह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन् भाग इति यामेव रात्रिं समिधं नाहराता इति ॥ ५२ ॥

ब्रह्मशब्देन जगत्कारणरूपमुच्यते, वेदसम्बन्धात । तत् मृत्यवे प्रजाः । किमर्थं? मारयितुं प्रायच्छदपि तस्मै ब्रह्मचारिणमेव न प्रायच्छत् आत्मसान्निकर्षात् । अथ मृत्युराह— सोऽब्रवीदस्तु मह्यमप्येतस्मिन् भाग इति । ब्रह्मचारिण्यपि मरणधर्मप्रवेशोऽस्त्वित्यर्थः । ततो ब्रह्माब्रवीत्सा रात्रिस्स वासरः यामेव रात्रिं समिधं नाहराता इति । लिङर्थे लेड्भवति । समिदाहरणमग्नीन्धनं तच्च भिक्षाचरणवेदाध्ययनगुरुशुश्रूषादीनामपि प्रदर्शनार्थम् ॥ १२ ॥

उपसंहरति—

तस्माद्ब्रह्मचारी यां रात्रिं समिधं नाहरति आयुष एव तामवदाय वसति ॥५३॥

आयुषः खण्डमिति शेषः । द्वितीयार्थे वा षष्ठी । 'द्विरैन्द्रवायवस्य भक्षयति' इतिवत् ॥ ९३ ॥

अथाग्नीन्धनादिचतुष्टयमपि विदधाति—

तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ ५४ ॥

न्येत्येव उदित्येतेन सम्प्रयुज्यते परिगाधे गम्यमाने । यथा— 'अग्नेर्मे वाक्प्राणैरनुपक्ता सन्' इति । आयुषोऽवदाय न वसानीति परिभाविनाग्नीन्धनादिचतुष्टयं कुर्यादित्यर्थः ॥ ६४ ॥

अथ दीर्घसंस्तवेन ब्रह्मचर्यप्रशंसा—

दीर्घसत्रं ह वा एष उपैति यो ब्रह्मचर्यमुपैति ॥ ५५ ॥

दीर्घसत्रं शाक्यानामयनादि सत्रस्य हि प्रायणीयोदयनीयावतिरात्रौ स्तः । उभयतोऽतिरात्रत्वात् सत्राणाम् ॥ ६५ ॥

तन्मध्ये यान्यहानि तदिह कथमित्याह—

स यामुपनयन् समिध आदधाति सा प्रायणीयाऽथ यां स्नास्यन् सोदयनीयाऽथ या अन्तरेण सत्या एवास्य ताः ॥

यां रात्रिमुपनयन्नुपनीयमानस्समिध आदधाति 'आयुर्दा देव जरसम्'[1] इति । यां च स्नास्यन् 'इमं स्तोममर्हते'[2] इति । तदिह प्रायणीयोदयनीयौ रात्रिप्रधानत्वात् निर्देशस्य प्रायणीयोदयनीयशब्दाभ्यां न स्त्रीलिङ्गदोषः । याश्च ते अन्तरेण रात्रयस्तासु यास्सायंप्रातस्समिध अधीयन्ते तानि त्रीण्यहानीत्युपमीयन्ते ॥ ६६ ॥

[1] एकाग्निकाण्डे २-२-१. [2] एकाग्निकाण्डे १-७-१.

ब्राह्मणो वै ब्रह्मचर्यमुपयंश्चतुर्धा भूतानि प्रविशत्यग्निं पदा मृत्युं पदाऽऽचार्यं पदाऽऽत्मन्येव चतुर्थः पादः परिशिंष्यते स यदग्नौ समिधमादधाति य एवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशत्यथ यदात्मानं दरिद्रीकृत्याह्रीर्भूत्वा भिक्षते ब्रह्मचर्यं चरति य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशत्यथ यदाचार्यवचः करोति य एवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशत्यथ यत्स्वाध्यायमधीते य एवास्यात्मनि पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशति न ह वै स्नात्वा भिक्षेतापि ह वै स्नात्वा भिक्षां चरत्यपि ज्ञातीनामशनायाऽपि पितृणामन्याभ्यः क्रियाभ्यः स यदन्यां भिक्षितव्यां न

विन्देतापि वा स्वामेवाचार्यजायां भिक्षेताथो स्वां मातरं नैनं सप्तम्यभिक्षिताऽतीयात् ॥

भैक्षस्याचरणे दोषः पावकस्यासमिन्धने ।
सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत् ॥
तमेवं विद्वांसमेवं चरन्तं सर्वे वेदा आविशन्ति ॥ ५७ ॥

ब्राह्मणग्रहणं त्रैवर्णिकोपलक्षणार्थम् । भूतशब्देनाग्निं मृत्युमाचार्यमात्मानं चाह । पादश्च तेज आयुः प्रज्ञा बलमिति तत्राद्यैस्त्रिभिः पादैरग्न्यादीन् प्रविशति । अतस्स्वात्मन्येवास्य चतुर्थः परिशिष्यते । भूतविशस्सर्वे वेदा आविशन्ति, न केवलं ब्रह्मचर्यानुष्ठाने ब्रह्मचारिणो वेदग्रहणमेव फलम् ॥ ५७ ॥

तर्हि स्नातकावस्थायामप्यविशेष इत्याह—

यथा ह वा अग्निस्समिद्धो रोचत एवं ह वा एष स्नात्वा रोचते य एवं विद्वान् ब्रह्मचर्यं चरतीति ब्राह्मणमिति ब्राह्मणम् ॥ ५८ ॥

ब्राह्मणं 'यथा ह वा' इत्यादि 'चरति' इत्येतदन्तं ब्राह्मणम् ।

अन्यत्राप्येवंजातीयकनिपातप्रयोगे ब्राह्मणपाठ इति द्रष्टव्यम्
रोचते दीप्यते ॥ ९८ ॥

इति बोधायनीयधर्मविवरणे गोविन्दस्वामिकृते
द्वितीयोऽध्यायः

---

'स्नात्वा रोचते' इति स्नानप्रयोगधर्मानत आह—

अथ स्नातकस्य ॥ १ ॥

प्राक्पाणिग्रहणाद्धर्मा वक्ष्यन्त इति शेषः । त्रयो हि स्नातका भवन्ति—वेदस्नातको व्रतस्नातको वेदव्रतस्नातक इति । ननु समावर्तनानन्तरमेव भार्यामधिगच्छेत, न तु तूष्णीं स्थातव्यम् । तथाहि—

अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते नरः ॥
जपे होमे तथा दाने स्वाध्याये विप्रभोजने ।
नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमच्युतः ॥[1] इति ॥

चत्वार एवाश्रमधर्मास्सूत्रकारैस्समाम्नाताः, न च स्नातको नाम तेषां मध्ये कश्चिदाश्रमी विद्यते । आचार्येणाप्युक्तम्—'यत्र कामयते तदेतीत्येतत्समावर्तनम्' इति । एवं ब्रुवता समावर्तनानन्तरं आश्रमप्राप्तिरेव दर्शिता । नैष दोषः—भार्याऽधिगमने यत-

[1] दक्ष. स्मृतिः. १-११-१२.

मानस्यापि कदाचिद्भार्याग्रहणं न सम्भाव्येत । परचित्ताधीनत्वात्तस्य । तस्यामवस्थायामिमे वक्ष्यमाणा धर्मा वेदितव्याः । किञ्च— यावद्वेदस्वीकरणं ब्रह्मचारिणो नियमानुपालनं, अत ऊर्ध्वं धर्मजिज्ञासाऽवस्थायां स्नातकधर्मावसरः । तस्मादूर्ध्वं दारसङ्ग्रही इत्यविरोधः । आहुश्च न्यायविदः—'आस्नानादि नियमस्य पर्यवसानं वेदाध्ययनसमकालमाहुः'[1] इति । तथा तस्माद्गुरुकुले तिष्ठन् मधुमांसाद्यं वर्जयन् जिज्ञासेताविरुद्धत्वाद्धर्ममित्यवगम्यते इति ॥ १ ॥

सोऽयं स्नातकः—

## अन्तर्वास्युत्तरीयवान्[2] ॥ २ ॥

स्यादिति शेषः । अन्तर्वासः कटिसूत्रम् । तद्वद्वाससा चोत्तरीयवान् स्यादित्यर्थः ॥ २ ॥

## वैणवदण्डं धारयेत् ॥ ३ ॥

अङ्गुष्ठप्रमाणा मूर्धपरिमिता यष्टिर्दण्डः ॥ ३ ॥

## सोदकं च कमण्डलुम् ॥ ४ ॥

धारयेदित्यनुवर्तते ॥ ४ ॥

## द्वियज्ञोपवीती ॥ ५ ॥

स्यादिति शेषः । द्वे यज्ञोपवीते अस्येति विग्रहः ॥ ५ ॥

---

[1]शाबरभाष्ये. १-१-१.

[2]अन्तर्वास उत्तरीयम्.

उष्णीषमजिनमुत्तरीयमुपानहौ छत्रं चौपासनं दर्शपूर्णमासौ च ॥ ६ ॥

एतेऽप्यस्य भवेयुरिति शेषः। उष्णीषं शिरोवेष्टनं, अजिनमुत्तरीयं, औपासनं एकाग्निपरिचरणं, तदेवौपासनशब्देनाह। दर्शपूर्णमासौ स्थालीपाकेन कर्तव्यौ ॥ ६ ॥

पर्वसु केशश्मश्रुलोमनखवापनम् ॥ ७ ॥

कर्तव्यमिति शेषः। केशा मूर्धजाः। श्मश्रु मुखजम्। लोम गुह्यदेशजम्। नखाः करपादजाः ॥ ७ ॥

तस्य वृत्तिः ॥ ८ ॥

तस्य स्नातकस्य वृत्तिः यात्रा जीवनोपायो वक्ष्यते। प्रकृतेऽपि स्नातके तस्य ग्रहणं वृत्तिर्व्यतिरिक्तधर्माणां गृहस्थस्यापि प्रवेशार्थम् ॥ ८ ॥

ब्राह्मणराजन्यवैश्यरथकारेष्वामं लिप्सेत ॥ ९ ॥

आमग्रहणात् पक्वप्रतिषेधः। आमाभावे पक्वयाचनं नानुज्ञायते। तथा च वसिष्ठः—'क्षुधा परीतस्तु किञ्चिदेव याचेत' इति प्रक्रम्य 'धान्यमन्नं वा न तु स्नातकः क्षुधाऽवसीदेदित्युपदेशः'[1] इति ॥ ९ ॥

---

[1] वा. ध. १२-२.

क्षुन्निवृत्तिसमर्थस्यालाभे—

**भैक्षं वा ॥ १० ॥**

भिक्षाणां समूहो भैक्षं, आपदि बहुभ्यो याचेतेत्यर्थः ॥ १० ॥

याच्ञाऽवस्थायाम्—

**वाग्यतस्तिष्ठेत् ॥ ११ ॥**

स्वस्तिवचनमपि न कुर्यादित्यभिप्रायः। 'न ह वै स्नात्वा भिक्षेत' इत्यस्यैवायमनुवादः ॥ ११ ॥

**सर्वाणि चास्य देवपितृसंयुक्तानि पाकयज्ञिकसंस्थानि भूतिकर्माणि कुर्वितेति॥**

देवपितृभ्यां संयुक्तशब्दः प्रत्येकमभिसम्बध्यते । ते च पञ्च महायज्ञाः । पाकयज्ञिकसंस्थानि अष्टकाहोमादयः । भूतिकर्माणि आयुष्यचरुरित्यादयः । इतिशब्दः प्रकारवचनः । एवंप्रकारा अस्य भैक्षात् चरुहोमाः कर्तव्याः। प्राणिनो [अप्राणिनो] हि षष्ठी पञ्चम्यर्थे भवति 'आपस्तम्बं [अपःमयं] करोति' इति यथा ॥ १२ ॥

अथ फलार्थवादः—

**एतेन विधिना प्रजापतेः परमेष्ठिनः परमर्षयः परमां काष्ठां गच्छन्तीति बोधायनः ॥ १३ ॥ ५ ॥**

परमे स्थाने तिष्ठतीति परमेष्ठी । तस्य स्थानं परमा काष्ठा । परमर्षयो वसिष्ठादयः । बोधायनः काण्वायनः । आहेति शेषः । आत्मानमेवाभिवदन्त्याचार्याः । आत्मनो वा आचार्याः । यद्वा—मनोः भृगुवत्तस्य शिष्यो ग्रन्थकर्ता । विचलितशाखा वा काचिद्बोधायनसंज्ञिता ॥ १३ ॥

इति बोधायनीयधर्मविवरणे गोविन्दस्वामिकृते
तृतीयोऽध्यायः.

---

'सोदकं च कमण्डलुम्' इत्युक्तम् । तत्राह—

**अथ कमण्डलुचर्यामुपदिशन्ति वेदविदः ॥**

चर्या चरणं धारणादि । मृण्मयो हि कमण्डलुः । तमधोपपाते¹ हि दाहश्शुद्धिहेतुराम्नातः । अतः पुनः कमण्डलोश्शुद्ध्यन्तरविधित्सयेदमारभ्यते ॥ १ ॥

**छागस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे । अप्सु चैव कुशस्तम्बे पावकः परिपठ्यते ॥ तस्माच्छौचं कृत्वा पाणिना परिमृजीत पर्यग्निकरणं हि तत् । उद्दीप्यस्व जातवेद इति पुनर्दाहाद्विशिष्यते ॥ २ ॥**

---

1 अस्थ्याद्युपसंसर्गे.

अत्र छाग । स्तम्बरसङ्घात । एतेषु चतुर्ष्वग्निः पठ्यते वेदेषु आधाने—'आग्नेयी वा एषा यदजा'[1] इत्येवमादिषु । तस्माद्ब्राह्मणस्यापि दक्षिणे हस्तेऽग्निर्विद्यते । हेतुराम्नात । अत पुन कमण्डलोरशुचित्वविधित्सयेदमाह । छागस्याप्यशुचिभावे प्राप्ते तद्दक्षिणेन पाणिना परिमृजेत् 'उद्दीप्यस्व'[2] इतिमन्त्रेण । पर्यग्निकरण तद्भवति । तच्च पुनर्दाहाद्विशिष्टतर शौचमापादयतीत्यर्थ ॥ २ ॥

अत्रापि किंचित्संस्पृष्टं मनसि मन्येत कुशैर्वा तृणैर्वा प्रज्वाल्य प्रदक्षिणं परिदहनम् ॥ ३ ॥

कमण्डलोरेवाशुचिसंस्पर्शाशङ्कायां कुशैर्वा विश्वामित्रतृणैर्वाऽग्नौ प्रदीप्ते प्रदक्षिणतः परिदहनं कर्तव्यम् । परितो दहन परिदहनम् ॥ ३ ॥

अत ऊर्ध्वं श्ववायसप्रभृत्युपहतानामग्निवर्ण इत्युपदिशन्ति ॥ ४ ॥

श्वादिभिरुपघाते पर्यग्निकरण कृत्वा अत ऊर्ध्वं, यथाऽग्निवर्णो भवति तथा दग्धव्य इत्युपदिशन्ति आचार्या इति शेष ॥४॥

मूत्रपुरीषरोहितरेतःप्रभृत्युपहतानामुत्सर्गः॥

एतैरुपहतानां कमण्डलूनामुत्सर्गस्त्याग । व्यक्त्यपेक्षया बहुवचनम् ॥ ५ ॥

---

[1] तै. स २-१-४.  [2] याशिकी. १.

यदा कमण्डलुर्भग्नस्स्यात् तदा किं कुर्यादित्यत्राह—

**भग्ने कमण्डलौ व्याहृतिभिश्शतं जुहुयात् जपेद्वा ॥ ६ ॥**

आज्येनेति शेषः । जपेद्वा व्याहृतीरेव ॥ ६ ॥

**भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ॥ कपालानि संहृत्याप्सु प्रक्षिप्य सावित्रीं दशावरां कृत्वा पुनरेवान्यं गृह्णीयात् ॥ ७ ॥**

वामदेव ऋषिः । अनुष्टुप्छन्दः । भिन्नानि मृण्मयानि प्रतिपाद्यानि । भूमिविकाराणां प्रकृतिलयविज्ञानं क्रियते । प्रथमान्तो भूमिशब्दः विकारानाह । द्वितीयान्त प्रकृतिम् । कपालानि स्वप्रकृतौ लीनानि । माता मातरमप्यगात् य एवमन्तर्हृदय आकाशो मृत्पिण्ड कमण्डलुः वियदादिरूपेण निर्मितोऽसावपि स्वप्रकृतिमगात् । ततः किमायातमस्माकम् ?. वय तु पुत्रैः पशुभिर्भूयास्म । आशिषि लिङ् । अस्मान् द्वेष्टि यः स एव हि भिद्यतामिति । अनेन मन्त्रेण कमण्डलुकपालानामप्सु संक्षेपणं प्रतिपत्तिः । अथान्यं गृह्णन् सावित्रीं दशावरां कृत्वा जपित्वा गृह्णीयात् ॥ ७ ॥

किञ्च—

वरुणमाश्रित्य एतत्ते वरुण पुनरेव मामो-
मित्यक्षरं ध्यायेत् ॥ ८ ॥

वरुणमाश्रित्य वरुणं शरणं प्रतिपद्य इत्युक्त्वा 'एतत्ते वरुण पुनरेव मामोम्' इति ग्रहणमन्त्रः । तस्यायमर्थः—यदेतत्कपालं मयाऽप्सु संक्षिप्तं तत्तव वरुण भवतु अपरं कमण्डलुद्रव्यं पुनर्मामेहि कमण्डलुस्वामी ओमित्यक्षरं ध्यायेत् । ओमोमिति ब्राह्मणानां, तेन हि सर्वमोतं प्रोतं च भवति । अक्षरमपि तदेव न क्षरति न विनश्यतीति ध्यायेत् अनुस्मरेत् ॥८॥

अथ कमण्डलुग्रहणवेळायामपादानकारकवर्गविशेषात् प्रायश्चित्तविशेषः—

शूद्राद्गृह्य शतं कुर्याद्वैश्यादर्धशतं स्मृतम् ।
क्षत्रियात्पञ्चविंशत्तु[1] ब्राह्मणाद्दश कीर्ति-
ताः ॥ ९ ॥

प्रणवो गायत्री वा सङ्ख्याविषया ॥ ९ ॥

रात्रावुदकग्रहणमीमांसा—

अस्तमित आदित्य उदकं गृह्णीयान्न गृह्णी-
यादिति मीमांसन्ते ब्रह्मवादिनः ॥१०॥

---

[1] पञ्च विंशत्तु पञ्चविंशतिस्तु.

संवादार्था प्रकृतप्लुतिः । तत्राग्रहणपक्षश्श्रेयान् । कुतः? पौराणिकवचनात् । तथाहि—

कर्मयोग्यो जनो नैव नैवापश्शुद्धिकारणम् ।
यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते ॥ इति ॥

श्रुतेः 'अपो निशि न गृह्णीयात्' इति ॥ १० ॥

## गृह्णीयादित्येतदपरम् ॥ ११ ॥

अपरं दर्शनं न विद्यते परं दर्शनं यस्मात्तदपरं सिद्धान्त इत्यर्थः । अनियतकालत्वान्मूत्रपुरीषादेरप्यवश्यकर्तव्यत्वाच्चोदकसाध्यशौचानां 'शक्तिविषये मुहूर्तमपि नाप्रयतस्स्यात्' इति वचनाच्च ग्रहणमेव साधीय ॥ ११ ॥

यत्तु पुराणश्रुतिवचनानि 'अपो निशि न गृह्णीयात्' इति । तत्र परिहारमाह—

## यावदुदकं गृह्णीयात्तावत्प्राणमायच्छेत्॥ १२॥

कथमुदकग्रहणवेलायां प्राणायामेन परिहार इत्याशङ्क्याह ॥१२॥

## अग्निर्हि वै ह्युदकं गृह्णाति ॥ १३ ॥

कथं प्राणायामे सत्युदकं गृह्णाति? कथं वा तेनादित्यसांनिधिर्भवति? इति चेत् उच्यते—निरोधे सति वायुर्बलवान् जायते, ततोऽग्निः । तथाच वक्ष्यति 'निरोधाज्जायते वह्निः' इति । अनुभवोऽपि तथैव दृश्यते । अग्नौ सत्यादित्यसंनिधि-

भेरतीति ग्रहीतुमुदकं शक्यते । तथा च श्रुतिः—'आदित्योवाऽस्तमयेऽग्निं प्रविशति स तद्धीयेत' इति । तथा च—'रात्रावग्निर्ददृशे न सूर्यः' इति दूरभूयस्त्वानुमवोपि तथैव भवति ॥१३॥

कमण्डलूदकं पुनरात्मन एव शुचिकारणं, न पितृसंयुक्तादिकर्मभ्य इत्याह—

कमण्डलूदकेनाभिषिक्तपाणिपादो यावदार्द्रं तावदशुचिः परेषामात्मानमेव पूतं करोति नान्यत्कर्म कुर्वीतेति विज्ञायते॥

अत्र विज्ञायते इत्युक्तेः श्रुतिपाठ इत्यवगन्तव्यम् ॥ १४ ॥

अपि वा यतः प्रतिशौचं जलान्तरेणामणिबन्धाच्छुद्धिरिति बोधायनः॥१५॥ ॥६॥

अथाप्युदाहरन्ति—

कमण्डलुर्द्विजातीनां शौचार्थं विहितः पुरा। ब्रह्मणा मुनिमुख्यैश्च तस्मात्तं धारयेत्सदा॥ ततश्शौचं ततः पानं सन्ध्योपासनमेव च । निर्विशङ्केन कर्तव्यं य इच्छेच्छ्रेय आत्मनः ॥ १६ ॥

कमण्डलूदकेन शौचं अपानादेशमलनिर्हरणादिकम् । स्नानसन्ध्योपासने दृष्टादृष्टकार्योपलक्षणार्थे ॥ १६ ॥

कथमनेनाह । अन्तःकरणेन देवतापूजादि कुर्यादित्याशङ्क्याह—

कुर्याच्छुद्धेन मनसा न चित्तं दूषयेद्बुधः । सह कमण्डलुनोत्पन्नस्स्वयंभूस्तस्मात्कमण्डलुना चरेत् ॥ १७ ॥

शास्त्रलक्षणेष्वर्थेषु सामान्यतो दृष्टा भ्रान्तिर्न कार्या । विशिष्टोत्पत्त्या च कमण्डलुप्रशंसैव । चरेत् आचरेत् अनुतिष्ठेत् ॥१७॥

मूत्रपुरीषे कुर्वन् दक्षिणे हस्ते गृह्णाति सव्ये आचमनीयम् ॥ १८ ॥

जलकार्ये मूत्रपुरीषे आचमने च नियमः । अनुपयोगकाले यथासौकर्यं भवति तथा गृह्णीयादित्यर्थः ॥ १८ ॥

एतत्सिध्यति साधूनाम् ॥ १९ ॥

एतस्मिन् कमण्डलौ ये धर्मा अभिहितास्ते साधूनां सिध्यति नेतरेषाम् । साधवश्च निर्विशङ्कितशास्त्रार्थाः ॥ १९ ॥

अमुमेव दृष्टान्तेन द्रढयन्नाह—

यथा हि सोमसंयोगाच्चमसो मेध्य उच्यते । अपां तथैव संयोगान्नित्यो मेध्यः कमण्डलुः ॥ २० ॥

मेधो यज्ञः, तदर्हो मेध्यः ॥ २० ॥

पितृदेवाग्निकार्येषु तस्मात्तं परिवर्जयेत् ॥

यस्मात् 'कमण्डलूदकेनाभिषिक्तपाणिपादो यावदार्द्रं तावदशुचिः परेषाम्' इत्युक्तं, पितृदेवाग्निकार्येषु तस्मात्तं परिवर्जयेत् ॥ २१ ॥

तस्माद्विना कमण्डलुना नाध्वानं व्रजेन्न सीमान्तं न गृहाद्गृहम् ॥ २२ ॥

कमण्डलूदकं यस्माच्छुद्धिकारणं तस्माद्विना कमण्डलुना नाध्वानं व्रजेत् न सीमान्तं न गृहाद्गृहम् ॥ २२ ॥

पदमपि न गच्छेदिषुमात्रादित्येके ॥ २३ ॥

मूत्रोत्सर्गादेरनियतकालत्वात् पदमपि न गच्छेत् । इषुमात्रादित्येके ॥ २३ ॥

यदिच्छेद्धर्मसन्ततिमिति बोधायनः ॥२४॥

यतः सन्ततिरविच्छेदः ॥ २४ ॥

ऋग्विधमृग्विधानं[1] वाग्वदति ऋग्विधमृग्विधानं वाग्वदति ॥ २५ ॥ ॥७॥

वागिति ब्राह्मणमुच्यते । तस्मिन्नर्थे ऋगप्यस्तीति ब्राह्मणमाहेत्यर्थः । स यथा—'तस्यैषा भवति । यत्ते शिल्पं कश्यपरोचनावत्'[2] इति ॥ २५ ॥

इति बोधायनीयधर्मव्याख्याने गोविन्दस्वामिकृते प्रथमप्रश्ने चतुर्थोऽध्यायः.

[1] ऋग्विधेन, ऋग्विधानेन. [2] तै. आ. १-७.

कमण्डलुशौचप्रसङ्गेन अन्यद्रव्यविषयमपि शौचमारभ्यते—

## अथातश्शौचाधिष्ठानम् ॥ १ ॥

अधिष्ठानं निधानं कारणमित्यनर्थान्तरम् । शोध्यद्रव्यं वा ॥ १ ॥

## अद्भिश्शुद्ध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुद्ध्यति । अहिंसया च भूतात्मा मनस्सत्येन शुद्ध्यतीति ॥ २ ॥

अब्ग्रहणं मृदादीनामप्युपलक्षणार्थम् । गात्रग्रहणं द्रव्यान्तरप्रदर्शनार्थम् । बुद्धिरन्तरात्मिका सा च व्यवसायात्मिका । ज्ञानं तत्त्वावबोधनं तस्मिन् सति रागापायादन्तरात्मा शुद्धो भवति । वाङ्मनःकायैर्भूतानां दुःखस्यानुत्पादनं अहिंसा तया च भूतात्मा शुध्यति । भूतात्मा पुनः कर्मणां कर्ता । आह मनुः—

यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ।[1]

इति ॥

सङ्कल्पात्मकं मन इत्युच्यते । सत्यं तु यथाभूतार्थवचनम् ॥ २ ॥

एवं च सति—

## मनश्शुद्धिरन्तश्शौचम् ॥ ३ ॥

तत्र ज्ञानेन सत्येन या शुद्धिरुक्ता तदन्तश्शौचमिति वेदितव्यम् । तदेव तावदेव ॥ ३ ॥

---

[1] मनु. १२-१२.

## बहिश्शौचं व्याख्यास्यामः ॥ ४ ॥

विविधमाख्या विस्तार इत्यर्थः ॥ ४ ॥

बाह्यस्याचेतनस्य गात्रादेरशुचिभावे पुरुषस्याप्यशुचित्वं भवतीति तदर्थं बाह्यशौचमारभ्यते । अद्भिरेवाचमनं क्रियते तदेवा प्रथममारभ्यते—

## कौशं सौत्रं वा त्रिस्त्रिवृद्यज्ञोपवीतमानाभेः दक्षिणं बाहुमुद्धृत्य सव्यमवधाय शिरोऽवदध्यात् ॥ ५ ॥

कुशविकार कौशं सूत्रस्य विकार सौत्रम् । तच्च सूत्रं कार्पासमय त्रिस्त्रिवृदिति क्रियाभ्यावृत्तिगणने भवतीति त्रिवृदिति च त्रिगुण भवति । एतदुक्त भवति—नवतन्तुसमपादयेदिति । यज्ञार्थमुपवीतं उपव्यान च विन्यासविशेष यज्ञग्रहणं गुरूपसदनादेरपि प्रदर्शनार्थम् । तथा चापस्तम्ब —'उपासने गुरूणां वृद्धानामतिथीना होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात्'[1] इति । आनाभेः आङ्मर्यादायाम्, ऊर्ध्वं नाभेरित्यर्थः । दक्षिण बाहुमवधाय बाहोरधस्तात्कृत्वा शिरोऽवदध्यात दक्षिणं बाहु शिरश्च सगृह्णीयादित्यर्थः । तथा च श्रुति —'दक्षिण बाहुमुद्धरतेऽवधत्त सव्यमिति यज्ञोपवीतम्'[2] इति च ॥ ५ ॥

## विपरीतं पितृभ्यः ॥ ६ ॥

[1] आ. ध. ध. १-१५-१. [2] तै. आ. २-१.

सव्यं बाहुमवधाय शिरोऽवदध्यात् । श्रुतिरपि 'एतदेव विपरीतं प्राचीनावीतम्'[1] इति । पितॄनुद्दिश्य यत्क्रियते तत्रैतद्भवति ॥ ६ ॥

**कण्ठेऽवसक्तं निवीतम् ॥ ७ ॥**

मनुष्याणां भवति । ऋषीणामित्येतदेवमुक्तं भवति ॥ ७ ॥

**अधोऽवसक्तमधोवीतम् ॥ ८ ॥**

नाभेरधोऽवसक्तमधः क्षिप्तमधोवीतं भवति । एतदेव 'संवीतं मानुषम्'[1] इति चोच्यते । मनुष्यकार्याणि कर्तव्यानि तानि चाञ्जनाभ्यञ्जनोद्वर्तनान्यवमल्लानि ॥ ८ ॥

शौचाङ्गतया यज्ञोपवीतमुक्तम् । इदानीं तदेव शौचमाह—

**प्राङ्मुख उदङ्मुखो वाऽऽसीनश्शौचमारभेत। शुचौ देशे दक्षिणं बाहुं जान्वन्तरा कृत्वा प्रक्षाल्य पादौ पाणी चामणिबन्धात् ॥ ९ ॥**

शौचमिहाचमनमभिप्रेतम् । शुचाविवेत सिद्धे देशग्रहणं पादुकादावारूढेनाचमनं न कर्तव्यमिति बोधयितुम् । अनेकपुरुषोलाप्येदं । आसीनग्रहणं शयनादिनिवृत्त्यर्थम् । प्रक्षाल्य पाणी पादौ चेति चशब्दान्मूत्राद्युपहतं गात्रान्तरमपि प्रक्षाल्येति गम्यते ॥ ९ ॥

**पादप्रक्षाळनोच्छेषणेन नाचामेद्यद्याचामेद्भूमौ स्रावयित्वाऽऽचामेत् ॥ १० ॥**

---

[1] तै. आ. २-१.

यत्पात्रस्थोदकेन पादप्रक्षाळनं कृतं तदवशिष्टं पादप्रक्षाळनोच्छेषणं तेनाचमन न कार्यम् । अन्यस्यासम्भवे तेनापि यथाचामेद्भूमौ स्रावयित्वाऽऽचामेत् तस्माद्भूमौ किञ्चिदुदकं विस्राव्य आचमनं कार्यम् ॥ १० ॥

आचमन एव पाण्यवयवविशेषविधित्सयाऽऽह—

ब्राह्मेण तीर्थेनाचामेत् ॥ ११ ॥

किं तद्ब्राह्मतीर्थम्—

अङ्गुष्ठमूलं ब्राह्मं तीर्थम् ॥ १२ ॥

अङ्गुष्ठमूलस्योत्तरतो मेखला ॥ १२ ॥

एतत्प्रसङ्गात्पितृतर्पणाद्यर्थमन्यान्यप्याह—

अङ्गुष्ठाग्रचं पित्र्यमङ्गुल्यग्रं दैवमङ्गुलिमूलमार्षमङ्गुल्यङ्गुष्ठयोर्वा मध्यं पित्र्यम् ॥

तथा च वसिष्ठः—'प्रदेशिन्यङ्गुष्ठयोरन्तरे पित्र्यम्'[1] इति । स्पष्टमन्यत् ॥ १३ ॥

इदानीमाचमन एव किञ्चित्पर्युदस्यति—

नाङ्गुलीभिर्न सबुद्बुदाभिः न फेनाभिर्नोष्णाभिर्न क्षाराभिर्न लवणाभिर्न कलुषाभिर्न विवर्णाभिर्न दुर्गन्धरसाभिः ॥ १४ ॥

---

[1] वा. ध. ३-६८.

**अङ्गुलीभिः** स्राविताभिः अद्भिर्नाचामेत् इति सम्बन्धः । **बुद्बुदः** स्फोटः । **सफेनाः** सडिण्डीराः । **उष्णः** अग्निना, नादित्यरश्मिभिः । **क्षाराश्च** द्रव्यान्तरसङ्क्रमणात्, न स्वभावतः । कालुष्यमपि कारणान्तरेण, न वर्षादिना । विवर्णत्वमपि तथा, न तु भूगुणेन ॥ १४ ॥

अथाचमन एव कर्तुरवस्थाः पर्युदस्यन्ते—

**न हसन्न जल्पन्न तिष्ठन्न विलोकयन्न प्रह्वः न प्रणतो न मुक्तशिखो न प्रावृतकण्ठो न वेष्टितशिरा न त्वरमाणो नायज्ञोपवीती न प्रसारितपादो न बद्धकक्ष्यो न बहिर्जानुः शब्दमकुर्वन्न् त्रिरपो हृदयंगमाः पिबेत् ॥ १५ ॥**

**प्रह्वः** अधोमुखः । **प्रणतो** वक्रकायः । ननु 'आसीनस्त्रौचमारभेत' इत्युक्तम् । किमिति तिष्ठतः प्रतिषेधः. उच्यते—तत्र उपवीतमाहन्मर्यादासक्तेर्योगविकारः त्रैवर्णिकाधिकारः स्यात् । ततश्च स्त्रीशूद्राणां स्थानादियोगिनामप्याचमनं प्राप्येत तन्मा भूदिति पुनर्ग्रहणम् । अथ वा—अत्यापदि तत्प्रह्वताऽभ्यनुज्ञा । यद्वा—गमनजल्पनादिप्रतिषेधार्थं दृष्टान्तत्वेनोपन्यामः । **बद्धकक्ष्यः** कृतनिबन्धः **बहिर्जानुः** जान्वोर्बहिर्गतदक्षिणबाहुः । तथा च गौतमः 'दक्षिणं बाहुं जान्वन्तरा कृत्वा"[1] इति । त्रिःपाने क्रियमाणे एकसमावेशेन हृदयंगमाभिरद्भिर्भवितव्यम्, ततश्चाप्रमणिपूरणोदकेन पानं कार्यम् । अन्यदतिरोहितम् ॥ १६ ॥

---

1 गौ. ध. १-३६.

त्रिः परिमृजेद्विरित्येके ॥ १६ ॥

बहिर्भूतमुदकं त्रिः परिमृजेद्विरित्येके । परिमार्जन एव द्विरभ्यासो न पानेऽपि । उत्तरत उभयग्रहणात् ॥ १६ ॥

सकृदुभयं स्त्रियाश्शूद्रस्य च ॥ १७ ॥

उभयं पानं मार्जनं च स्त्रीशूद्रयोरसकृत्सकृत् ॥ १७ ॥

अथाप्युदाहरन्ति—

गताभिर्हृदयं विप्रः कण्ठ्याभिः क्षत्रियश्शुचिः । वैश्योऽद्भिः प्राशिताभिस्स्यात् स्त्रीशूद्रौ स्पृश्य चान्तत इति ॥ १८ ॥

वर्णान्तरस्योदकपरिमाणान्तरविधानादेव हृदयगमविधिर्विप्रस्येति प्राप्ते पुनर्विप्रग्रहणमितरवर्णार्थमनुवादः । हृदयादुपरि कण्ठः । तस्मादुपरि कण्ठ्यम् । तस्मादुपरि ओष्ठमिति प्रतिवर्णं स्थाननिर्देशः । स्त्रीशूद्रयोरप्यास्यप्रक्षेप उदकस्य द्रष्टव्यो न स्पर्शनमात्रम् ॥ १८ ॥

दन्तवद्दन्तसक्तेषु दन्तवत्तेषु धारणा । स्रस्तेषु तेषु नाचामेत्तेषां संस्रावयच्छुचिरिति ॥

दन्तवद्दन्तसक्तेषु उदकबिन्दुषु । निर्मुक्तं भवति । दन्तवत्तेषु धारणा कार्या । बहिर्गतमलस्य परिमार्जनविधानादन्तर्गतस्य दोषाभाव इत्यभिप्रायः । संस्रावः लाला ॥ १९ ॥

अमुमेवार्थं परकीयमतेन द्रढयितुमाह—

अथाप्युदाहरन्ति—

दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् ।
आचान्तस्यावशिष्टं स्यान्निगिरन्नेव त-
च्छुचिरिति ॥ २० ॥

आचमनोत्तरकालं यदास्येऽवशिष्टमुपलभ्यते अलावशिष्टमित्य-भ्यवहार्यं द्रव्यं तन्निगिरन् प्रवेशयन्नेव तच्छुचिर्भवतीति शेषः ॥२०॥

तथाऽऽचमने किंचिद्विधित्सयाऽऽह—

खान्यद्भिस्संस्पृश्य पादौ नाभिं शिरः सव्यं
पाणिमन्ततः ॥ २१ ॥

खानि चक्षुरादीनि इन्द्रियाणि । कुतः ? स्मृत्यन्तरदर्शनात् 'ऊर्ध्वं वै पुरुषस्य नाभ्यै'[1] इति । वक्ष्यति—

अङ्गुष्ठानामिकाभ्यां तु चक्षुषी समुपस्पृशेत् ।

उभाभ्यां प्रत्येकमिति शेषः । एवमुत्तरत्रापि योज्यम् ॥

प्रदेशिन्यङ्गुष्ठाभ्यां तु नासिके समुपस्पृशेत् ॥

कनिष्ठिकाङ्गुष्ठाभ्यां तु श्रवणे समुपस्पृशेत् ।
पादावभ्युक्ष्य सर्वाभिः नाभिमङ्गुष्ठकेन तु ॥
दद्यात्तन्मूर्ध्नि सर्वाभिस्सव्ये पाणौ ततो ज म् ॥ इति ॥२१॥

---

[1] तै. सं. ६-१-३.

गात्राणां शौचमुक्तम् । सम्प्रति तत्सम्बन्धिनो द्रव्यस्याह । तत्र यद्द्रव्यहस्तश्चेदुच्छिष्टो भवति तस्य द्रव्यस्य किं शौचमित्याह—

**तैजसं चेदादायोच्छिष्टस्स्यात्तदुदस्याचम्यादास्यन्नद्भिः प्रोक्षेत् ॥ २२ ॥**

तेजसा हेतुभूतेन यत्क्रियते तत्तैजसं तद्धस्तस्तु उच्छिष्टो भवति निधाय च तद्द्रव्यमाचम्यादास्यन् तद्द्रव्यं अद्भिः प्रोक्षेत् । स च तद्द्रव्यं प्रयतं भवति ॥ २२ ॥

**अथ चेदन्नेनोच्छिष्टी स्यात् तदुदस्याचम्यादास्यन्नद्भिः प्रोक्षेत् ॥ २३ ॥**

पृथगारम्भस्तैजसेनान्नस्य वैलक्षण्यदर्शनार्थम् । पूर्वत्र तैजसहस्तस्याप्रायत्ये संजाते शौचमुक्तम् । इह तु पात्रान्तरादन्नहस्तस्य शौचमिति शेषः । तथाच वसिष्ठः—

चरन्नभ्यवहार्येषु उच्छिष्टं यदि संस्पृशेत् ।
भूमौ निधाय तत्पात्रमाचम्य प्रचरेत्पुनः ॥[1] इति ॥ २३ ॥

**एतदेव विपरीतममत्रे ॥ २४ ॥**

अमत्रं मृण्मयपात्रमिहाभिप्रेतम् । तस्यात्यन्तोपहतेऽस्योदसनमात्रमेव नादानमित्यर्थः । इतरस्य पुनर्दाह एव ॥ २४ ॥

**वानस्पत्ये विकल्पः ॥ २५ ॥**

---

1 वा. ध. ३-४३.

वानस्पत्ये वार्क्षे पात्रेऽप्रयते सति आदानस्य विकल्पः उपहतिविशेषापेक्षया । आचमनं तु स्थितमिव ॥ २५ ॥

पुरुषेण संयुक्तद्रव्यस्याप्रायत्ये शौचमुक्तम् । अधुना वियुक्तावस्थायामाह—

**तैजसानामुच्छिष्टानां गोशकृद्भस्मभिः परिमार्जनमन्यतमेन वा ॥ २६ ॥**

उपघातापेक्षया द्रव्याणां समुच्चयविकल्पौ । उदकं पुनस्सर्वत्रानुवर्तते ॥ २६ ॥

अथ विशिष्टानां तैजसानां शौचान्तरमाह—

**ताम्ररजतसुवर्णानामम्लैः ॥ २७ ॥**

परिमार्जनमित्यनुवर्तते । सलेपानामेतत् । निर्लेपानां तु पूर्वोक्तानामन्यतमेनैव । तथा च वसिष्ठः—"अद्भिरेव काञ्चनं पूयते तथा रजतम्"[1] इति ॥ २७ ॥

**अमत्राणां दहनम् ॥ २८ ॥**

स्पर्शमात्रादुच्छिष्टानां मृण्मयानां पुनर्दाहः शौचमाम्नातम् । अनर्हाप्रायत्ययुक्तस्पर्शे तु प्रोक्षणमेव ॥ २८ ॥

**दारवाणां तक्षणम् ॥ २९ ॥**

शौचमित्यनुवर्तते ॥ २९ ॥

---

[1] वा. ध. ३-५९.

## वैणवानां गोमयेन ॥ ३० ॥

परिमार्जनमिति शेषः । विदलादीनामशुचिस्पृष्टानामेतत् ॥ ३०॥

## फलमयानां गोवालरज्ज्वा ॥ ३१ ॥

बिल्वनालिकेरादिफलविकाराणां गोवालरज्ज्वा । परिमार्जनमिति शेषः । रज्जुग्रहणं वालबहुत्वोपलक्षणार्थम् । तथा च वसिष्ठः— 'गोवालैः परिमार्जनं फलमयानाम्'[1] ॥ इति ॥ ३१ ॥

## कृष्णाजिनानां बिल्वतण्डुलैः ॥ ३२ ॥

बिल्वतण्डुलान् पिष्ट्वाऽवलेपनं कार्यमित्यर्थः ॥ ३२ ॥

## कुतपानामरिष्टैः ॥ ३३ ॥

कुतपा नाम पार्वतीयच्छागरोमनिर्मिताः कम्बळा उच्यन्ते । अरिष्टैः पूयवृक्षफलैः ॥ ३३ ॥

## ऊर्णानामादित्येन ॥ ३४ ॥

ऊर्णा अविलोमानि । तद्विकाराणां प्रावरणादीनामादित्यातपेन शुद्धिः ॥ ३४ ॥

## क्षौमाणां गौरसर्षपकल्केन ॥ ३५ ॥

क्षुमा अतसी तद्विकाराणाम् ॥ ३५ ॥

## मृदा चेलानाम् ॥ ३६ ॥

कार्पासमयानां मृदा शुद्धिः ॥ ३६ ॥

---

[1] वा. ध. ३-५४.

**चेलवत् चर्मणाम् ॥ ३७ ॥**

कृष्णाजिनव्यतिरिक्तानामिति शेषः ॥ ३७ ॥

**तैजसवदुपलमणीनाम् ॥ ३८ ॥**

उपलानां मणीनां च शकृदादिभिश्शुद्धिः ॥ ३८ ॥

**दारुवदस्थ्नाम् ॥ ३९ ॥**

तक्षणामित्यर्थः ॥ ३९ ॥

**क्षौमवच्छङ्खशृङ्गशुक्तिदन्तानाम् ॥ ४० ॥**

गौरसर्षपकल्केन शौचं कार्यम् ॥ ४० ॥

**पयसा वा ॥ ४१ ॥**

प्रक्षाळनमिति शेषः ॥ ४१ ॥

**[1]मूत्रपुरीषासृक्शुक्लकुणपस्पृष्टानां पूर्वोक्तानामन्यतमेन त्रिस्सप्तकृत्वः परिमार्जनम् ॥ ४२ ॥**

मूत्रादिग्रहणं द्वादशमलप्रदर्शनार्थम् । तानि च मनुना प्रदर्शितानि—

वसाशुक्लमसृङ्मज्जामूत्रविट्कर्णविण्नखाः ।
श्लेष्माश्रुदूषिकास्स्वेदो द्वादशैते नृणां मलाः ॥[2].

---

1 'चक्षुर्मांस' इत्यधिकम्. 2 ५.१३५.

पूर्वोक्तानां गोशकृदादीनामन्यतमेन शौचम् । एतच्च परिमार्जन तैजसा ना उच्छिष्टमात्रदुष्टाना वेदितव्यम् । परिमार्जनमुल्लेखन पुनः-करणमितियथोपघात कर्तव्यम् । तथाच शङ्ख —'कुणपरेतोमूत्र-पुरीषोपहताना आवर्तनमुल्लेखन भस्मना परिमार्जनमुत्सर्ग ' ॥ इति । अत्रावर्तनशब्देन पुन करणमुच्यते । तत्रैव व्यवस्था— स्पृष्टमात्राणा त्रिसप्तकृत्व परिमार्जनम् । अल्पकालोपहतानामुल्ले खनम् । चिरकालोपहतानामावर्तनम् । अत्यन्तोपहताना त्याग इति ॥

अतैजसानामेवंभूतानामुत्सर्गः ॥ ४३ ॥

एवंभूतानामित्यत्यन्तमलिनाना त्याग । तेषामेव 'यथासम्भव-मुल्लेखन तन्मात्रच्छेदश्च' इति शङ्खवचन त् ॥ ४३ ॥

वचनाद्यज्ञे चमसपात्राणाम् ॥ ४४ ॥

चमसाना पात्राणामुच्छिष्टस्पर्शदोषो नास्तीति शेष । मूत्राद्युपह ताना तु त्याग एव ॥ ४४ ॥

किं तद्वचनमित्यत आह—

न सोमेनोच्छिष्टा भवन्तीति श्रुतिः ॥४५॥

सोमेन नोच्छिष्टा पुरपाससोमाश्चमसाश्चान्यानि च पात्राणि उच्छिष्टानि न भवन्तीत्यर्थः ॥ ४५ ॥

इदानीं संक्षिप्याह—

कालोऽग्निर्मनसश्शुद्धिरुदकाद्युपलेपनम् ।

अविज्ञातं च भूतानां षड्विधं शौचमुच्यत इति ॥ ४६ ॥

कालश्शावाशौचादिशुद्धिसाधनं भवति । अथान्यत्रापि तैजसानां पात्राणां मूत्राद्युपहतानां. गोमूत्रे सप्तरात्रं परिशोधनमिति । अग्निरपि मृण्मयस्य शुद्धिहेतुः । मनसश्शुद्धिरनाङ्कः परितोष इत्यादि । तदपि प्रायश्चित्तादौ सहकरोति । तथा च मनुः—

यस्मिन् कर्मण्यस्य कृते मनसस्स्यादलाघवम् ।
तस्मिन् तावत्ततः कुर्याद्यावत्तुष्टिकरं भवेत् ॥ इति ॥[1]

तयोदकैस्स्वर्णरजतादि शुद्ध्यति । अन्यान्यपि यानि प्रातिस्विकानि शोधकानि कालगोवालबिल्वतण्डुलादीनि तेषामपि स्नानप्रोक्षणप्रक्षाळनादिषु यथाद्रव्यं योजनीयम् । तथा भूमेरुपलेपनादि वक्ष्यते । अविज्ञातं च प्रत्यक्षादिना प्रमाणेनानवगतदोषमपि शुद्ध्यति । एवं षड्विधं शौचं भवति ॥ ४६ ॥

अधुनाऽन्यदपि शौचविधौ परकीयमतेन कारणमाह—

अथाप्युदाहरन्ति—

कालं देशं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च विज्ञाय शौचं शौचज्ञः कुशलो धर्मेप्सुः समाचरेत् ॥ ४७ ॥ ॥ ८ ॥

---

[1] ११-२३४.

किञ्च—

अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः। तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च ॥ ५१ ॥

वृक्षग्रहणं पुष्पग्रहणं चौषधिशाखादीनामप्युपलक्षणार्थम् ॥ ५१ ॥

किञ्च—

चैत्यवृक्षं चितिं यूपं चण्डालं वेदविक्रयम्। एतानि ब्राह्मणस्स्पृष्ट्वा सचेलो जलमाविशेत् ॥ ५२ ॥

ऋज्वेतत् ॥ ५२ ॥

किञ्च—

आत्मशय्याऽऽसनं वस्त्रं जायाऽपत्यं कमण्डलुः। शुचीन्यात्मन एतानि परेषामशुचीनि तु ॥ ५३ ॥

स्पष्टमेतत् ॥ ५३ ॥

आसनं शयनं यानं नौः पन्थाश्च तृणानि च। चण्डालपतितस्पृष्टं मारुतेनैव शुद्ध्यति ॥ ५४ ॥

पन्थानो भूमिविषयाः। नौः दारुमयी फलका। आन्दो-

निजग्धस्य भक्षणे दोषः । रतिसंसर्गग्रहणात् अन्यत्र स्त्रीणां श्वासलालास्वादने दोषः । तत्रापि स्वभार्याणां एव । तथा मृगयाया अन्यत्र श्वलीढस्य दोषः । तथा च वसिष्ठः—

श्वहताश्च मृगा वन्याः पतितं च खगैः फलम् ।
बालैरनुपरिक्रान्तं स्त्रीभिराचरितं च यत् ॥

प्रसारितं च यत्पण्यं ये दोषाः स्त्रीमुखेषु च ।
मशकैर्मक्षिकाभिश्च लीढं चेन्नावहन्यते ॥

क्षितिस्थाश्चैव या आपो गवां तृप्तिकराश्च याः ।
परिसङ्ख्याय तान् सर्वान् शुचीनाह प्रजापतिः ॥[1]

इति ॥४९॥

आकराश्शुचयस्सर्वे वर्जयित्वा सुराकरम् ।
अदूष्यास्सन्तता धाराः वातोद्धूताश्च
रेणवः ॥ ५० ॥

आकरा उत्पत्तिस्थानानि । गुल्मसौद्रादीनां दृष्टदोषाणां न तत्र शङ्का कार्येत्यभिप्रायः । सुराकरं तु वर्जयेत् स्पर्शनगन्धग्रहणादीनां प्रतिषेधात् । अदूष्यास्सन्तता धारा अशुचिस्पृष्टा अपि जलप्रस्रवणादयः अदूष्याः । अत एतद्गम्यते विच्छिन्नया करकादिधारया नाचामेदिति । वायूत्थापिताश्चाश्वखरादिदेहादुत्थापिता, अप्यदूष्या एव रेणवः ॥ ५० ॥

---

[1] वसि. ४ १-४७.

किञ्च—

अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः।
तेषामपि न दुष्यन्ति पुष्पाणि च फ-
लानि च ॥ ५१ ॥

वृक्षग्रहणं पुष्पग्रहणं चौषधिशाखादीनामप्युपलक्षणार्थम् ॥५१॥

किञ्च—

चैत्यवृक्षं चितिं यूपं चण्डालं वेदविक्रयम्।
एतानि ब्राह्मणस्स्पृष्ट्वा सचेलो जलमा-
विशेत् ॥ ५२ ॥

स्पष्टमेतत् ॥ ५२ ॥

किञ्च—

आत्मशय्याऽऽसनं वस्त्रं जायाऽपत्यं कम-
ण्डलुः। शुचीन्यात्मन एतानि परेषा-
मशुचीनि तु ॥ ५३ ॥

स्पष्टमेतत् ॥ ५३ ॥

आसनं शयनं यानं नौः पन्थाश्च तृणानि
च। चण्डालपतितस्पृष्टं मारुतेनैव शु-
द्ध्यति ॥ ५४ ॥

पन्थानो भूमिविषयाः। नौः दारुमयी फलका। आन्दो-

ळिकादीन्यपि द्रव्याणीति केचित् । एषामन्यतमानीत्यध्याहारः । तत्रापि स्पर्शनमात्रेऽदोषः । एतदध्यासनादिषु यथादोषं शौचं कर्तव्यम् ॥ ५४ ॥

किञ्च—

खलक्षेत्रेषु यद्धान्यं कूपवापीषु यज्जलम् । अभोज्यादपि तद्भोज्यं यच्च गोष्ठगतं पयः ॥ ५५ ॥

अभोज्यानैः पुरुषैर्निष्पादितेषु खलक्षेत्रधान्यादिषु पुनश्च साधारणत्वेन च सर्वसाधारणत्वेन सङ्कल्प्यते तेष्वेतद्द्रष्टव्यम् । तत्रापि पतितचण्डालपरिगृहीतं दुष्टमेव । गोदोहनवेलायामेव परिगृहीतं पयो भोज्यं गोष्ठगतम् ॥ ५५ ॥

किञ्च—

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् । अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ ५६ ॥

ब्राह्मणग्रहणं प्रदर्शनार्थम्, पुरावल्पप्रशंसेषा । अदृष्टं प्रत्यक्षादिभिरनवगतदोषम्, उपहतानुपहताशङ्कायामद्भिर्निर्णिक्तम् प्रक्षालितम्, तथा वाचा प्रशस्तं च । आह च वसिष्ठः—'वाचा प्रशस्तमुपयुञ्जीत' इति यावत्प्रशस्तान्यनुक्त्य उपयुञ्जीतेति ॥

आपः पवित्रं भूमिगताः गोतृप्तिर्यासु जा-

**यते । अव्याप्ताश्चेदमेध्येन गन्धवर्णर-
सान्विताः ॥ ५७ ॥**

अमेध्येन पुरीषादिना अव्याप्ताः भूगुणव्यतिरिक्तगन्धवर्णरसा-
न्विता वर्ज्या इत्यर्थः ॥ ५७ ॥

भूमिगता इत्युक्तं, तत्प्रसङ्गादाह—

**भूमेस्तु संमार्जनप्रोक्षणोपलेपनावस्तरणो-
ल्लेखनैर्यथास्थानं दोषविशेषात् प्राय-
त्यम् ॥ ५८ ॥**

भूमेस्तु सम्मार्जनं प्रायत्यं भवेदिति शेषः । सम्मार्जनं स
मूहन्या । प्रोक्षणं त्वद्भिः । उपलेपनं गोमयादिना । अव-
स्तरणं ताभिरेव । उल्लेखनं खनित्रैः । आह च मनुः—

सम्मार्जनेनाञ्जनेन सेचनोल्लेखनेन च ।
गवां च परिवासेन भूमिश्शुद्ध्यति पञ्चभिः[1] ॥ इति॥

यथास्थानं दोषविशेषात् दोषगुरुलघुतापेक्षया सम्मार्जनादीनां
व्यस्तसमस्तापेक्षया प्रायत्यं शुचित्वं भवति । तत्रैकेन कचि-
च्छुद्धिः, क्वचिद्द्वाभ्याम्, क्वचित्त्रिभिः, क्वचित्समस्तैरिति द्रष्ट-
व्यम् ॥ ५८ ॥

तत्र क्वचित्प्रोक्षणस्यैव शुद्धिहेतुतामाह—

**अथाप्युदाहरन्ति—॥१॥
गोचर्ममात्रमब्बिन्दुः भूमेश्शुद्ध्यति पातितः**

[1] मनु ५ १२४

समूढमसमूढं वा यत्रामेध्यं न लक्ष्यत इति ॥ ५९ ॥

अब्बिन्दुः जललवः शुध्यतीति अन्तर्नीतणिजर्थो द्रष्टव्यः। समूढं सम्मार्जन्या । असंमूढं स्पर्शादिदुष्टं देशं गोचर्मप्रमाणं शोधयति । तमाविष्टयति—यत्र अमेध्ययुक्तममेध्यं पुरीषादि न लक्ष्यते तमिति शेषः ॥ ५९ ॥

परोक्षमधिश्रितस्यान्नस्यावद्योत्याभ्युक्षणम्॥

परोक्षं भोक्तुरसमक्षमधिश्रित्य पक्कस्यान्नस्याग्निनाऽवद्योत्याभ्युक्षणं शङ्कापदमापन्नस्य शुद्धिर्भवति । अनाशङ्कितस्य तु 'त्रीणि देवाः पवित्राणि' इत्युक्तम् ॥ ६० ॥

तथाऽऽपणेयानां च भक्ष्याणाम् ॥ ६१ ॥

आपणं वणिजां पण्यस्थानम् । क्रयविक्रयस्थानमित्यर्थः । तत्र भवा आपणेया भक्ष्या मण्डकापूपसक्तुमोदकादयः उत्तरापथवासिनः प्रसिद्धाः । तेषामवद्योत्याभ्युक्षणम् । तथा च शङ्खः—'आकरजानामभ्युक्षितानां घृतेनाभिघारितानामभ्यवहरणीयानां पुनःपचनमेव समानम्' इत्यादिना ॥ ६१ ॥

न केवलमवद्योतनाद्येव शौचकारणम् । किं तर्हि ? दातुश्श्रद्धाऽपि । तां च पुराकल्परूपेण प्रशंसति—

भीभत्सवः शुचिकामा हि देवा नाश्रद्दधानाय हविर्जुषन्त इति ॥ ६२ ॥

भीभत्सवः आविहिंसन्तः अश्रद्धधानात् पुरुषाद्धविर्न जुपन्ते । तस्मान्नूनं श्रद्धाऽपि शुचिकारणमित्यवगम्यते ॥ ६२ ॥

किञ्च—

शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः । मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥ प्रजापतिस्तु तानाह न समं विषमं हि तत् । हतमश्रद्दधानस्य श्रद्धापूतं विशिष्यते ॥ ६३ ॥

दीर्घकालं मीमांसित्वा विचार्य शुचेरश्रद्दधानस्य अशुचेश्श्रद्दधानस्य च तयोस्समीकरणे कृते देवान् प्रजापतिरब्रवीत् विषमसमीकरणमेतद्युष्माभिः कृतं कष्टमिति । किं तत्र कारणमित्याह—हतमश्रद्दधानस्य । तस्मात् श्रद्धापूतमेव विशिष्यते इति ॥ ६३ ॥

किञ्च—

अथाप्युदाहरन्ति—

अश्रद्धा परमः पाप्मा श्रद्धा हि परमं तपः । तस्मादश्रद्धया दत्तं हविर्नाश्नन्ति देवताः ॥ ६४ ॥

श्रद्धा आदरः कौतूहलं आस्तिक्यम् । यस्मात् श्रद्धैवं भूता

तस्मादश्रद्धया दत्तं नादातव्यमिति शेषः। आह च कृष्णो धनंजयाय—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह[1] ॥ ६४ ॥

श्रद्धारहितः पुनः—

**इष्ट्वा दत्वाऽपि वा मूर्खः स्वर्गं न हि स गच्छति ॥ ६५ ॥**

मूर्ख इत्युक्तं, कोऽसावित्यत आह—

**शङ्काविहतचारित्रो यस्स्वाभिप्रायमाश्रितः। शास्त्रातिगः स्मृतो मूर्खो धर्मतन्त्रोपरोधनादिति ॥ ६६ ॥**

शङ्का कृत्याकृत्यविवेकशून्यता। तया संशयात् विहतं चारित्रमनुष्ठानं यस्य स तथोक्तः। ततश्च शास्त्रतो निश्चित्य हेयोपादेयौ चाविश्य विवेकाभावे स्वाभिप्रायमाश्रित्य यः स्वेच्छाचारी भवतीत्यर्थः। एतस्मादेव शास्त्रातिगश्च भवति शास्त्रार्थमतीत्य गच्छति। तच्चायुक्तम्, यतो भगवद्गीतासूक्तम्—

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ[2] ॥ इति।

एवंविधोयः पुरुषः स मूर्खस्स्मृतः। को हेतुः? धर्मतन्त्रोपरोधनादिति। धर्मस्य तन्त्रमनुष्ठानं तस्योपरोधो भवति ॥ ६६॥

श्रद्धा यथा द्रव्याणां शुद्धिहेतुः एवं प्रक्षालनमपीत्येतद्दर्शयन्नाह—

---

[1] भगवद्गीता. १७-२८. [2] १६-२४.

**शाकपुष्पफलमूलौपधीनां तु प्रक्षाळनम् ॥**

तुशब्दो विशेषप्रायत्यदर्शनार्थं । तच्चास्पृश्यप्रदर्शनार्थम् । तत्र चैतद्विधानम् । एतेषां पुन मूत्राद्युपहतानामल्पानां त्याग, बहूनां तन्मात्रत्याग, शिष्टानां प्रक्षाळनमभ्युक्षणं वा ॥ ६७ ॥

मूत्रपुरीषोपहतस्य शौच वक्तु मूत्रपुरीषकरण तावदाह—

**शुष्कं तृणमयाज्ञिकं काष्ठं लोष्टं वा तिरस्कृत्याहोरात्रयोरुदग्दक्षिणामुखः प्रावृत्य शिर उच्चरेदवमेहेद्वा॥ ६८ ॥**

अयाज्ञिकं शुष्कं तृणमिति तिरस्कृत्यान्तर्धाय भूमिं अहरुदङ्मुखो रात्रौ दक्षिणामुख प्रावृत्य शिर उच्चरेदवमेहेद्वा मूत्रपुरीषे च । तथा च वसिष्ठ—'भूमिमयज्ञमयैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्यात्' इति ॥ ६८ ॥

**मूत्रे मृदाऽद्भिः प्रक्षाळनम् ॥ ६९ ॥**

कार्यमिति शेष । सकृदिति च ॥ ६९ ॥

**त्रिः पाणेः ॥ ७० ॥**

मृदाऽद्भि प्रक्षाळनमित्यनुवर्तते । तत्र त्रि सव्यस्य सकृत् । उभयोर्द्विर्द्विरिति विनिर्देश कल्प्य ॥ ७० ॥

**तद्वत्पुरीषे ॥ ७१ ॥**

मृद्वाऽद्भिः प्रक्षाळनमतिदिश्यते । 'तद्व पुरीषे च' इति वक्तव्ये 'तद्वत्' इति अतिदेशो विशेषविवक्षया ॥ ७१ ॥

तमाह—

पर्यायास्त्रिस्त्रिः पायोः पाणेश्च ॥ ७२ ॥

पायुरपानप्रदेशः । मूत्रे यदुक्तं तेन पुरीषे त्रिरावृत्तेन भवितव्यम् । पूर्वं पायोस्सकृत् मृद्दातव्या सकृच्च पाणेः । एवं त्रिरावर्तते । तत्रैवं मानवम्—

एका लिङ्गे गुदे तिस्रः तथैकस्मिन् करे दश ।
उभयोस्सप्त दातव्या मृदश्शुद्धिमभीप्सता ॥ इति ॥[1]

तथाऽपरं वासिष्ठमतम्—

एका लिङ्गे तिस्रो वाम उभाभ्यां द्वे च मृत्तिके ।
पञ्चापाने दशैकस्मिन्नुभयोस्सप्त मृत्तिकाः ॥ इति ॥[2]

दक्षस्तु मृत्तिकापरिमाणमुपदिशति—

अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्धार्धा प्रकीर्तिता ॥[3]

तत्र विरुद्धेषु विकल्पः, अविरुद्धेषु समुच्चयो द्रष्टव्यः । 'मल्लापकर्षणेऽमेध्यस्य' इत्येतत्तु सर्वत्र सममित्युच्यते ॥ ७२ ॥

मूत्रवद्रेतस उत्सर्गे ॥ ७३ ॥

शुक्रस्योत्सर्गे मूत्रवच्छौचमेव ॥ ७३ ॥

नीवीं विस्रस्य परिधायाप उपस्पृशेत् ।

---

[1] ५-१३६. [2] वा. ध. ६-१८. [3] दक्ष. ५-७.

**आर्द्रं तृणं गोमयं भूमिं वा समुपस्पृशेत् ॥ ७४ ॥**

परिहितस्य वाससो बन्धो नीवी । अपामुपस्पर्शनं प्रक्षाळनम् । वा सम्भवापेक्षो विकल्पः ॥ ७४ ॥

**नाभेरधस्स्पर्शनं कर्मयुक्तो वर्जयेत् ॥**

देवपितृसंयुक्तं कर्म कुर्वाण इत्यर्थः ॥ ७५ ॥

तत्र कारणमाह—

**ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यमिति श्रुतिः । शूद्राणामार्याधिष्ठितानामर्धमासि मासि वा वपनमार्यवदाचमनकल्पः ॥ ७६ ॥**

कल्पः प्रयोगः । 'आसीनस्स्थित्वा' इत्यादि । एवं च 'स्त्रीशूद्रौ तु सकृत्' इत्येतदनार्याधिष्ठितशूद्रविषयं द्रष्टव्यम् । ननु सर्व एव शूद्रा आर्याधिष्ठिताः । तथा च वक्ष्यति—'शूद्रस्तु पूर्वेषां परिचर्यां करोति' इति । सत्यम्—तथाऽपि परिचर्यासमतिक्रमस्सम्भाव्यते । सन्ति हि केचिच्छूद्राः स्वतन्त्रा एव शिल्पजीविनश्च, तस्मादनवद्यम् । यद्वा—आर्यो ब्राह्मणोऽभिप्रेतो न क्षत्रियवैश्यौ, तत्रैनत्स्यात् । आर्यवदिति वतिप्रत्ययेनाचमनधर्माणां मन्त्रेषामतिदेशे सत्युपवीतादीनामपि प्राप्तिस्स्यात् । नेत्याह—त्रैवर्णिकप्रधानत्वादुपनयनस्य, तत्प्रयुक्तत्वाच्चोपवीतस्य, न शूद्रस्य

प्राप्तिः । तस्मादुपवीतादिवर्जितस्यातिदेशोऽयम् ॥ ७६ ॥

वर्णधर्मप्रसङ्गादिदमन्यदुच्यते मा भूत्तत्साधारणमिति—

वैश्यः कुसीदमुपजीवेत् ॥ ७७ ॥

कुसीदो वृद्ध्यर्थं द्रव्यस्य प्रयोगः ॥ ७७ ॥

तं विस्तारयति—

पञ्चविंशतिस्त्वेव पञ्चमापकी स्यात् ॥ ७८ ॥

माषो नाम कर्षापण । 'विंशो भाग' पणस्य परिकीर्तितः' इति स्मृत्यन्तरदर्शनात् । पञ्चविंशतिसङ्ख्यानां कर्षापणानां प्रतिमासं पञ्च माषा वृद्धिरित्यर्थः ॥ ७८ ॥

अत्र यः परेणोपयोजितं द्रव्यं पूर्वसूत्रोक्तपरिमाणात् भूयस्यै वृद्ध्यै प्रयच्छति । तमधिकृत्याह—

अथाप्युदाहरन्ति—

यस्समर्घमृणं गृह्य महार्घं सम्प्रयोजयेत् ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः॥
वृद्धिं च ब्रह्महत्यां च तुलया समतो-
लयत् । अतिष्ठद्भ्रूणहा कोट्यां वार्धु-
षिस्समकम्पतेति ॥ ७९ ॥

अधमर्णो द्वितीयेन यच्छब्देन लभ्यते । तत्र निन्दा—ब्रह्मया-

दिपु गर्हित इत्यादि । योऽयं वीप्सा[1] ब्राह्मणादन्येषां निषेधो द्रष्टव्यः ॥ ७९ ॥

**गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् । प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥ ८० ॥**

गोरक्षकान् विप्रानधीतवेदानपि । एतेन क्षत्रियवैश्यावपि व्याख्यातौ । शूद्रवदाचरेत् । गोरक्षकादिब्राह्मणहिंसायामपि ब्रह्महत्या भवत्येव । साक्षिशपथे तावत्—

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ इति ॥[2]

तथा दिव्येऽपि 'अग्निं जलं वा शूद्रस्य' इति ॥ ८० ॥

वृद्धिप्रयोगे तु स्वयमेव वक्ष्यति—

**कामं तु परिलुप्तकृत्याय कदर्याय नास्तिकाय पापीयसे पूर्वौ दद्याताम् ॥ ८१ ॥**

परिलुप्तकृत्यो विच्छिन्नाचारः । कदर्यः सत्यपि द्रव्ये द्रव्यार्जनस्वभावः । नास्तिको वेदब्राह्मणनिन्दकः । पापीयान् शूद्रः । एतेभ्यो यथाकामं भूयस्यै वृद्ध्यै पूर्वौ वर्णौ ब्राह्मणक्षत्रियौ दद्याताम् । यः पुनस्स्मृतिषु ब्राह्मणस्य वार्धुष्यप्रतिषेधस्स कृतकृत्यविषयो द्रष्टव्यः ॥ ८१ ॥

---

[1] अयं मदीयसा.   [2] मनु ८-११३

परिलुप्तकृत्यप्रसङ्गादन्यदुच्यते—

अयज्ञेनाविवाहेन वेदस्योत्सादने न च ।
कुलान्यकुलतां यान्ति ब्राह्मणाति-
क्रमेण च ॥ ८२ ॥

विवाहश्शास्त्रलक्षणभार्यापरिग्रहलाभः । वेदस्योत्सादनमनध्ययनम् । किं पुनस्स्मृतिषु । ब्राह्मणातिक्रमं तु शातातप आह—

अत्यासन्नमधीयानं ब्राह्मणं यस्त्वतिक्रमेत् ।
भोजनाचैव दानाच दहत्यासप्तमं कुलम् ॥ इति ॥

कुलान्युत्कृष्टान्यपि निकृष्टतां यान्तीत्यर्थः ॥ ८२ ॥

इदानीं मूर्खब्राह्मणातिक्रमे दोषो नास्तीत्याह—

ब्राह्मणातिक्रमो नास्ति मूर्खे मन्त्रविवर्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि
हूयते ॥ ८३ ॥

मूर्खलक्षणमुक्तं 'शास्त्रातिगस्स्मृतो मूर्खः' इत्यत्र । तथा च वसिष्ठः—

यस्य चैव गृहे मूर्खो दूरे च स्याद्बहुश्रुतः ।
बहुश्रुताय दातव्यं मूर्खे नास्ति व्यतिक्रमः ॥ इति[1] ॥८३

किंच—

गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ।

---

[1] वा. ध. ३-९.

कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥ मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि। कुलसङ्ख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥ ८४ ॥

गोभिरश्वैश्चेत्यत्र संव्यवहारेणेत्यध्याहार्यम् ॥ ८४ ॥

अधुना नानाविधानां पुरुषार्थानां परस्परविरोधं दर्शयित्वा हेयोपादेयविवेकायाह—

वेदः कृषिविनाशाय कृषिर्वेदविनाशिनी ।
शक्तिमानुभयं कुर्यादशक्तस्तु कृषिं त्यजेत् ॥ ८५ ॥

कृषिग्रहणं वेदतदर्थज्ञानविरोधिप्रदर्शनार्थम् । आह च मनुः—

सर्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः ॥[1] इति ॥

वेदोत्सादनप्रसङ्गादिदमन्यदुच्यते—

न वै देवान् पीवरोऽसंयतात्मा
रोरूयमाणः ककुदी समश्नुते ।
चलत्तुन्दी रभसः कामवादी
कृशास इत्यणवस्तत्र यान्ति ॥ ८६ ॥

पीवरोऽतिपीन परमांसेन स्वमांसं वर्धयन् । आह च मनुः—

[1] मनु. ४-१७.

स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
अनभ्यर्च्य पितॄन् देवान्न ततोऽन्योऽस्त्यपुण्यकृत् ॥ इति ॥[1]

प्यायतेर्वृद्धिकर्मण औणादिकः क्रच्प्रत्ययः । असंयतात्मा असंयतबुद्धिः निषिद्धकर्माभिमुखीं निरोद्धुमक्षम इत्यर्थः । रोरूयमाणः रौतेश्शब्दकर्मणः क्रियासमभिव्याहारे यङ्प्रत्ययो द्रष्टव्यः । नरगानप्रिय गान्धर्वादिष्वासक्तमना इत्यर्थः । ककुद्मी ककुद्मान् स च बलीवर्दः, तदुपजीवीत्यर्थः । चलत्तुन्दी चलतः प्राणिनो यस्तु हिनस्ति प्राणिघातक इति यावत् । यो वा चलत्तुन्दी स चलत्तुन्दीत्युदाहृतः । उदरपूरणपरायण । रभसस्तीक्ष्णो वाक्कायकर्मभिः क्रौर्येनरो च । कामवादी यथेष्टवादी निर्विशङ्कमसङ्दिग्ध च यो भाषते । कृशासः दृशान् दुर्बलानशक्तानस्यति नाधने इति दृशासः । इतिशब्दः प्रकारवचनः । अणवः क्षुद्राः क्षुद्रा इत्यर्थः । एते देवान्न समश्नुवते । किं तर्हि कुर्वन्ति? तत्र यान्ति यत्र जाता इहैव परिभ्रमन्तीत्यर्थः ॥८६॥

असंयतात्मेत्युक्तं, तत्रापवादमाह—

यद्यौवने चरति विभ्रमेण सद्वाऽसद्वा यादृशं वा यदा वा । उत्तरे चेद्वयसि साधुवृत्तस्तदेवास्य भवति नेतराणि ॥ ८७ ॥

उत्तरं वयः पश्चाद्वर्षाः, एतेभ्य ऊर्ध्वम् । आचार्याभिमतं वा 'ऊनषष्टैश्च वर्षेभ्यो ह्यष्टाभ्यश्च मासेभ्य' एतस्माद्वर्षाद्यौवनम् । सद्वाऽसद्वेति विहितप्रतिषिद्धोभयाभावः । यादृशं वेति प्रकारानियमः । यदा वेति कालानियमः । अयमत्रार्थः—यौवनोद्धत

[1] मनु ५-५२

पुरुषो व्यामोहात्पूर्वस्मिन् वयसि साध्वसाधु वाऽत्यन्तनिकृष्टमपि कर्मपद्धतौ आचरति, स चेदुत्तरस्मिन् वयसि साधुवृत्तः कल्याणाचारो भवति प्रतिषिद्धं परिहाप्य स्वविहितमनुतिष्ठति तदेव तस्यैवास्य फलं भवति नेतराणि दुष्कृतानि पूर्ववयोऽनुष्ठितानि। अनेन च प्रायश्चित्तात्मत्वं ख्यापितम् । न पुनरकरणमेव प्रायश्चित्तस्य ॥ ८७॥

तदाह—

शोचेत मनसा नित्यं दुष्कृतान्यनुचिन्तयन् । तपस्वी चाप्रमादी च ततः पापात्प्रमुच्यते ॥८८॥

इत्थंशोचेन शोचेत मनसा—अहो कष्टं मया कृतं, धिङ्मां कामचारमदीर्घदर्शिनं, का मे गतिः का मे त्राणभूमिरिति, अत ऊर्ध्वं ईदृशं कर्म न करिष्यामीति दुष्कृतान्यनुचिन्तयन् अनुस्मरन्नित्यर्थः । तपस्वी कृच्छ्रादिकृत् । अप्रमादी पापस्य कर्मणः पुनरसेविता । तस्माद्यौवनकृतात्पापात् प्रमुच्यते नैतत्कुर्यां पुनरिति निवृत्त्या पूयते तत इति । तथा च वसिष्ठः—

ख्यापनेनानुतापेन तपसाऽध्ययनेन च ।

पापकृन्मुच्यते पापाद्दानाद्वाऽपि प्रमुच्यते ॥[1] इति ॥८८

स्थाविरे सुवृत्तस्य पुरुषस्य यौवने विभ्रमकृतानि पापानि दोषांशकल्पादनल्पता न लभन्ते इत्युक्तम्, तत्प्रसङ्गादिदमन्यदनाशङ्कनीयमुच्यते—

[1] मनु-११—२२८.

**स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् । न तैरुच्छिष्टभावस्याःतुल्यास्ते भूमिगैस्सहेति ॥ ८९ ॥१०॥**

भूमौ पतिताः पुनरुत्थाय बिन्दवः परानाचामयतः पादौ स्पृशन्ति ते पुरुषं नोच्छिष्टं कुर्वन्ति भूमिगैस्तुल्या इत्यभिधानात् अन्यत्रापि भूमिगतजलमदोषमिति गम्यते । पादग्रहणादन्यत्रोच्छिष्टभावो भवत्येव ॥ ८९ ॥१०॥

स्पर्शनिमित्ताशौचमभिधायाधुना तदभावेऽप्याशौचप्रतिपिपादयिषयाऽऽह—

**सपिण्डेष्वादशाहमाशौचमिति जननमरणयोरधिकृत्य वदत्यृत्विग्दीक्षितब्रह्मचारिवर्जम् ॥ ९० ॥**

समानः पिण्डो येषां ते सपिण्डाः तेषु स्मृतिशास्त्रकारिणां यद्दशाहाशौचवचनं तदेव जननं मरणं चाधिकृत्य वदति । न सर्वं त्र्यहाद्याशौचवचनमपि । तथा च स्मृत्यन्तरे यदाशौचवचनम् 'जननेऽप्येवमेव स्यात्'[1] इति तद्दशाहस्यैवातिदेशकमिति मन्तव्यम्॥

आशौचे सति सम्प्राप्ते दानादिर्न विधीयते ।

तथा च वृद्धमनुः—

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ॥

---

[1] गौ. ध. १४. १४.

कुमारजन्मदिवसमेकं कुर्यात्प्रतिग्रहम् ।
आयान्ति देवपितरः तत्र सम्बोधयन्ति च ॥
तस्मात्तद्दिवसं पुण्यं पितृवंशविवर्धनम् ॥ इति ॥

ब्राह्मणविषयमेतद्दशाहाशौचवचनम् । क्षत्रियादीनां तु एकादशाहादि ॥ ९० ॥

अथ सापिण्डता—

## सपिण्डता त्वासप्तमात्सपिण्डेषु ॥ ११ ॥

न निवर्तेत इति शेषः । तत्त्वात्मानमधिकृत्य प्रागूर्ध्वं च षट्सु पुंस्सु भवति । तत्सन्ततिषु च उभयतोऽपि सप्तमे निवर्तते । सपिण्डस्य सङ्क्षेपोक्तिरेषा, विस्तरस्तु वक्ष्यते 'अपि च प्रपितामहः' इत्यत्र । ननु त्रिपुरुषमेव सापिण्ड्यं सम्भाव्यते, पितृपितामहप्रपितामहानां पिण्डदानवचनात् । उच्यते—पित्रादिषु त्रिषु जीवत्स्वेव येभ्यः पिता ददाति तेभ्यस्तत्पुत्रो ददाति परेभ्यः त्रिभ्यः पिण्डदानं सम्भाव्यते, अत उपपद्यते सप्तमे निवृत्तिरिति ॥ ९१ ॥

साम्प्रतं म्रियमाणयोऽवस्थाविशेषापेक्षयाऽऽशौचमाह—

## आ सप्तमासादा दन्तजननाद्वोदकोपस्पर्शनम् ॥ १२ ॥

सप्तममासादर्वाग्दन्तजननाद्वा तेषु मृतेषु उदकोपस्पर्शनं स्नानमात्रमेव सपिण्डानाम् । यत्तु तस्मिन्नवस्थायामेकाहाशौचं तेन सहास्य विकल्पः ॥ ९३ ॥

किञ्च—

पिण्डोदकक्रिया प्रेते नात्रिवर्षे विधीयते ।
आदन्तजननाद्वाऽपि दहनं च न कारयेत् ॥ १३ ॥

तृतीयवर्षमप्रविष्टस्याजातदन्तस्य वा पिण्डोदकक्रिया न कर्तव्या । दहनं च, अनयोः द्वयोः स्नेहापेक्षया विकल्पः ।

नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि कृते सति ॥

तथा—

नास्य कार्योऽग्निसंस्कारः नापि कार्योदकक्रिया[1] ॥

इति ॥ १३ ॥

स्त्रीषु मृतासु कथमित्याह—

अप्रत्तासु च कन्यासु प्रत्तास्वेके ह कुर्वते ।
लोकसङ्ग्रहणार्थं हि तदमन्त्रास्स्त्रियो मताः ॥ १४ ॥

अप्रत्तास्वित्यत्र न पिण्डोदकक्रियेत्यनुवर्तते । प्रत्तास्वेके हकुर्वते इति पितृसपिण्डाभिप्रायमेतत् । तत्रायं हेतुः—लोकसङ्ग्रहणार्थं हीति । लोकसङ्ग्रहणं महाजनवशीकारः । तस्मात्प्रत्तासु विकल्पः । आह च याज्ञवल्क्यः—

---

[1] मनु. ५-६९-७०.

कामोदकं सखिप्रत्तास्वस्रीयश्वशुर्त्विजाम्[1] ॥ इति ॥

पितृसपिण्डानां पुनरूढानां कुर्वीरन्नेव । तथा च वसिष्ठः— 'प्रत्तानामितरे कुर्वीरन् ताश्च तेषाम्'[2] इति । ऊढानां च अनूढानां च अमन्त्रिकैवोदकक्रिया । आह च मनुः—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्[3] ॥इति ॥९४॥

द्रव्यसाध्यत्वात् पिण्डदानादेर्मृतस्य रिक्थं लब्ध्वा पिण्डदानादिकं कुर्यादिति विवेक्तुं सपिण्डसकुल्यविवेकार्थं तावदाह—

अपि च प्रपितामहः पितामहः पिता स्वयं सोदर्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रस्तत्पुत्रवर्जं तेषां च पुत्रपौत्रमविभक्तदायं सपिण्डानाचक्षते ॥

सापिण्ड्य एव किंचिद्वक्तव्योऽस्तीति मत्वाऽत्रापिचेत्याह । उक्तस्यैव विस्तारोऽयम् । प्रपितामह इत्यादि । परिभाषा चैषा द्रष्टव्या ॥ ९५ ॥

विभक्तदायानपि सकुल्यानाचक्षते ॥९६॥

एषा परिभाषा वै । विभक्ताविभक्तशब्दौ व्यत्यस्तौ कार्यौ । एतदुक्तं भवति—सम्बन्धविशेषज्ञाने सति सपिण्डा उच्यन्ते ।

---

[1] ३-४. [2] वसि. ४-१९. [3] मनु. ५-६६.

सम्बन्धमात्रज्ञाने सकुल्या । अतश्च सकुल्या अपि सपिण्डकुल्या एव, द्रव्यपरिग्रहे तु विशेषो नास्ति ॥ ९६ ॥

तदाह—

असत्स्वन्येषु तद्गामी ह्यर्थो भवति ॥ ९७॥

अन्येष्वौरसादिषु पुत्रेषु तद्गामी ह्यर्थो भवति ॥ ९७ ॥

सपिण्डाभावे सकुल्यः ॥ ९८ ॥

ऋज्वेतत् ॥ ९८ ॥

तदभावे पिताऽऽचार्योऽन्तेवास्यृत्विग्वा हरेत् ॥ ९९ ॥

वाशब्दो विकल्पार्थे । स च व्यवस्थया । सा च पूर्वाभावे उत्तरोत्तर इति । पिता पितृस्थानीय । अनेन पुत्रस्थानीयोपि लक्ष्यते । स च दाहादिसंस्कारादिकर्ता । तथा च वसिष्ठ—'सपिण्डा पुत्रस्थानीया वा तस्य धन विभजेरन्' इति । इतरथा सकुल्याभावे पिता गृह्णीयादित्युक्ते पूर्वापरविरोधस्स्यात् । तस्मात् पितृशब्देन पितृस्थानीय पुत्रस्थानीयो गृहीतव्य ॥ ९९ ॥

तदभावे राजा तत्स्वं त्रैविद्यवृद्धेभ्यः संप्रयच्छेत् ॥ १०० ॥

मदिति ब्राह्मण प्रतिनिर्दिशति । इतरवर्णस्व तु सर्वाभावे राजैवाददीत ॥ १०० ॥

---

वसि. १७-८१.

**न त्वेव कदाचित्स्वयं राजा ब्राह्मणस्वमाददीत ॥ १११ ॥**

अस्मिन् पक्षे परकीयमतेन दोषमाह—

**अथाप्युदाहरन्ति—**

**ब्रह्मस्वं पुत्रपौत्रघ्नं विषमेकाकिनं हरेत् ।**
**न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥**
**तस्माद्राजा ब्राह्मणस्वं नाददीत परमं ह्येतद्विषं यद्ब्राह्मणस्वमिति ॥ १०२ ॥**

राजग्रहणमुपलक्षणार्थं, अन्यो वा ब्राह्मणस्वं नाददीत । न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । इयांस्तु विशेषः । ब्रह्मस्वं पुत्रपौत्रघ्नं विषमेकाकिनं हरेत् ॥ १०२ ॥

प्रसक्तानुप्रसक्तं परिसमाप्याधुना प्रकृतमुच्यते—

**जननमरणयोस्सन्निपाते समानो दशरात्रः ॥ १०३ ॥**

सन्निपातस्समवायः । अन्यतरेण निमित्तेन दशाहे वर्तमाने इतरस्यापि निमित्तस्य तत्रान्तःपातः । तथा चेत् पूर्वाशौचप्रयुक्ततन्त्रमध्यपातित्वादितरं प्रसजति । न पृथग्दशरात्रं प्रयुङ्क्ते, इत्यभिप्रायः । एवं त्र्यहादिष्वपि । तत्र भूयसा सह अल्पीयो गच्छति न त्वल्पीयसा भूयः । प्रेक्षितप्रयुक्तिसान्निध्याभावात् ।

तत्र सजातीयस्यैव प्रसङ्ग इति केचित् । तथाच गौतमः—'तज्जातीयमेव तच्चेदन्तः पुनरापतेच्छेषेण शुद्ध्येरन्'[1] इत्युक्तवान् । तस्माज्जनने जननं मरणे मरणमिति निवेशसिद्धो भवति । आचार्यस्त्वनादृत्य तच्छब्दं जननमरणयोरिति वदन् विजातीयस्यापि प्रसङ्गं मन्यते ॥ १०३ ॥

तत्र विशेषमाह—

## अथ यदि दशरात्रात्सन्निपतेयुराद्यं दशरात्रमाशौचमा नवमादिवसात् ॥१०४॥

अत्र हि विधो यदि दशरात्रे वर्तमाने दशमाहिवसादर्वाक् दशाहत्रिरात्रादयो वा निपतेयुः तदा प्रक्रान्तस्य शेषेणैव शुद्धिर्भवतीत्यर्थः । दशमे चेदहनि सन्निपतेयुरन्यदाशौचं कल्प्यम् । तच्च गौतमवचनात् । स आह—'रात्रिशेषे द्वाभ्याम् प्रभाते तिसृभिः'[2] इति । प्रभाते प्रकर्षेण भाते दशमस्य उषःप्रभृति उदयादर्वाक् परिपात इत्यभिप्रायः । उदिते तु यथा प्राप्तमेव ॥ १०३ ॥

जननमरणयोरित्युक्तं, तत्र निर्देशक्रमेण जनने तावद्विशेष उच्यते—

## जनने तावन्मातापित्रोर्दशाहमाशौचम् ॥

यदि सर्वसपिण्डा वृत्तवन्तो भवेयुः तदा मातापित्रोरेव दशाहाशौचम् ॥ १०६ ॥

---

[1] १६-४.   [2] १४-७, ८.

अपि चेत्पिता वृत्तवान् तत्राह—

मातुरित्येके तत्परिहरणात् ॥ १०६ ॥

यस्मात्प्रसूतिका लोकं परिहरति तस्मात् तस्या एव जननाशौचं न जनकस्येति ॥ १०६ ॥

पितुरित्यपरे शुक्लप्राधान्यात् ॥ १०७ ॥

न हि शुक्लमन्तरेण भवन्तीति ॥ १०७ ॥

ननु क्षेत्रमन्तरेणापि प्रजा न भवन्तीत्याशङ्क्याह—

अयोनिजा ह्यपि पुत्राश्श्रूयन्ते ॥ १०८ ॥

अगस्त्यवसिष्ठादयः । तथा हि—मित्रावरुणयोर्दीक्षितयोरूर्वशीमप्सरसं दृष्ट्वा वासतीवरे कलशे रेतो न्यपतत् । ततोऽगस्त्यवसिष्ठावजायेतामिति । तदेतदृचाऽप्युक्तम्—

उतासि मैत्रावरुणो वसिष्ठो
उर्वश्या ब्रह्मन्मनसोऽधिजातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन
विश्वेदेवाः पुष्करे त्वाददन्त[1] ॥ इति ॥ १०८ ॥

अतस्स्वमतमेवोपसंहरति—

मातापित्रोरेव तु संसर्गसामान्यात् ॥१०९

संसर्गः सम्बन्धः प्रजोत्पत्त्युपायभूतः । स चोभयोस्समानः यस्मात् ॥ १०९ ॥

---

[1] ऋक्स ७-३३-११

अधुना क्रमप्राप्ते मरणे सत्युदकक्रियाप्रयोगक्लृप्तिरुच्यते—

**मरणे तु यथावालं पुरस्कृत्य यज्ञोपवीतान्यपसव्यानि कृत्वा तीर्थमवतीर्य सकृत्सकृत् त्रिर्निमज्ज्योन्मज्ज्योत्तीर्याचम्य तत्प्रत्ययमुदकमासिच्यात एवोत्तीर्याचम्यगृहद्वार्यङ्गारमुदकमिति संस्पृश्याक्षारलवणाशिनो दशाहं कटमासीरन् ॥**

यथावालं योयो बालस्तंतं पुरस्कृत्य कनिष्ठप्रथमा इति यावत् । अपसव्यानि अप्रदक्षिणानि प्राचीनावीतानि कृत्वा । कथं यज्ञोपवीतानि भवन्ति चेत्? भूतगत्येति ब्रूमः । अन्यत्रापि प्रेतकृत्येष्वेवमेव भवितव्यम् । सकृद्ग्रहणं प्रतिनिमज्जनोन्मज्जनं उत्तीर्योत्तीर्येत्यर्थः । तत्प्रत्ययं प्रेतप्रत्ययं प्रेतं प्रत्याय्य प्रेतस्य नामग्रहणपूर्वकं उद्देशं कृत्वेत्यर्थः । प्रत्ययमित्याभीक्ष्ण्ये णमुल्प्रत्ययो द्रष्टव्यः । गृहप्रवेशावस्थायां पुनर्गृहद्वारे अगारे अङ्गारमुदकं च संस्पृश्य बालपुरस्सराः गृहं प्रविशेयुः । इतिशब्देन प्रकारवाचिना स्मृत्यन्तरेणोक्तं समुच्चिनोति । एवं हि याज्ञवल्क्य आह—

आचम्याग्न्यादिसलिलं गोमयं गौरसर्षपान् ।
विदश्य निम्बपत्राणि गृहान् बालपुरस्सराः ॥
प्रविशेयुस्समालभ्य कृत्वाऽश्मनि पदं शनैः* ॥ इति ॥

*३-१३-१४.

ततः प्रभृति दशाहमक्षारलवणाशिनो भवेयुः । यावदाशौचं कटे तृणस्रस्तरे आसीरन् उपविशेयुः । पिण्डदानमपि प्रतिदिवसं कार्यम् ॥ ११० ॥

## एकादश्यां द्वादश्यां वा श्राद्धकर्म ॥१११॥

कुर्वीतेति शेषः । योऽप्ययमेकोद्दिष्टादेः ज्योतिश्शास्त्रे कालो विहितः । सोऽनिष्क्रान्ततत्कालस्य वेदितव्यः ॥ १११ ॥

## शेषक्रियायां लोकोऽनुरोद्धव्यः ॥ ११२ ॥

अत्रापि प्रेतस्य शेषक्रियायाः कर्तव्यायाः लोको महाजनः अनुरोद्धव्यः । नग्नप्रच्छादनश्राद्धं दाहादिषु । अत्रापि न केवलं दाहक्रियायामेव । तत्र हि बहुशब्दे उदकमुक्तं 'यच्चातः स्त्रिय आहुस्तत्कुर्वन्ति'[1] इति । तथाऽन्यैरप्युक्तं 'स्त्रीभ्यस्सर्ववर्णेभ्यश्च धर्मशेषान् प्रतीयात्'[2] इति ॥ ११२ ॥

साम्प्रतं सपिण्डाशौचं कर्तव्यम् । तत्र तावत्समानोदकाशौचमुच्यते—

## अत्राप्यसपिण्डेषु यथाऽऽसन्नं त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत ॥ ११३ ॥

इतिकरणात् सद्यश्शौचम् । अहोरात्रशब्देन पक्षिण्युपक्षिप्ता । वृत्तस्वाध्यायापेक्षश्चायं विकल्पः । वृत्तनिमित्तानि चाध्ययनविज्ञानानि कर्माणीति द्व्येकगुणनिर्गुणानां व्युत्क्रमणैते पक्षा भवन्ति ॥११३॥

---

[1] गौ. पितृ. १-५-१५. [2] आप. ध. २-११-१५.

आचार्योपाध्यायतत्पुत्रेषु त्रिरात्रं पक्षिण्ये-
काहम् ॥ ११४ ॥

आचार्ये मेते त्रिरात्रम् । उपाध्याये पक्षिणी । तयोः पुत्रेष्वेकाहम् ॥ ११४ ॥

ऋत्विजां च ॥ ११५ ॥

चशब्दाद्याज्यस्य च त्रिरात्रमृत्विजां च ॥ ११५ ॥

शिष्यसतीर्थसब्रह्मचारिषु त्रिरात्रमहोरात्र-
मेकाहमिति कुर्वीत ॥ ११६ ॥

अत्रापि त्रिरात्रमहोरात्रं पक्षिणीति । तीर्थशब्देन गुरुरुच्यते समानो गुरुर्यस्येति विग्रह । ब्रह्मचारी सहाध्यायी । एषु मृतेषु यथोक्तं त्रिरात्रादिर्भवति ॥ ११६ ॥

गर्भस्रावे गर्भमाससम्मिता रात्रयः स्त्री-
णाम् ॥ ११७ ॥

त्रिमासे गर्भस्रुतौ भवति यदि तावन्त्यहोरात्राणि । एवं चतुष्ट्रादिष्वपि । स्त्रीग्रहणात् जननादर्वाक् वृत्ते न पुरुषस्याशौचम् ॥ ११७ ॥

परशवोपस्पर्शनेऽनभिसन्धिपूर्वं सचेलोऽपः
स्पृष्ट्वा सद्यश्शुद्धो भवति ॥ ११८ ॥

परशव असपिण्डशव । कथम्? असवर्णशवस्पर्शने वह्ने चोभयत्राशौचान्तरविधानात् । अभिसन्धि काम, तदभावोऽनभिसन्धि अपा स्पर्शनमवगाहनम् । तत्सद्य एव कुर्वीत न विलम्बयेत् ॥

## अभिसन्धिपूर्वं त्रिरात्रम् ॥ ११९ ॥

अनन्तरोक्तविषय एव ॥ ११९ ॥

## ऋतुमत्यां च ॥ १२० ॥

ऋतुमती रजस्वला । तत्स्पर्शे अभिसन्धिरनभिसन्धिरिति विभागो न भवेदिति चशब्दस्तत्स्पृष्टिन्यायानुकर्षणार्थ । आह च मनु —

दिवाकीर्त्यमुदक्या च पतित सूतकी तथा ।
शव तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति[1] ॥ इति ॥

दिवाकीर्त्यस्तु चण्डाल । अत्राय विशेष —अबुद्धिपूर्वं सस्पर्शे द्वयोस्स्नान, बुद्धिपूर्वं तु त्रयाणामिति केचित् ॥ १२० ॥

## यस्ततो जायते सोऽभिशस्त इति व्याख्यातान्यस्यै व्रतानि ॥ १२१ ॥

'यस्तत'[2] इत्यादिना 'प्रजायै गोपीथाय'[2] इत्येवमन्तेन ब्राह्मणवाक्येन रजस्वलाया व्रतान्युक्तानि । तानि तया पालनीयानीत्यर्थ । तथा च वसिष्ठ —'त्रिरात्र रजस्वलाऽशुचिर्भवेत्'[3] इत्येवमादिना प्रपञ्चितवान् ॥ १२१ ॥

---

[1] मनु. ५-८५. [2] तै स २-५-१. [3] वासि. ५. ५-६.

वेदविक्रयिणं यूपं पतितं चितिमेव च ।
स्पृष्ट्वा समाचरेत्स्नानं श्वानं चण्डालमेव च ॥ १२२ ॥

हिरण्यादिग्रहणपूर्वकं वेदप्रदानं विक्रयः लक्षणया । चितियूपयोस्त्वप्रवृत्तप्रायोपस्पर्शनम् । पतितग्रहणमुपपातकानामप्युपलक्षणम् । श्वग्रहणं च सृगालादीनां, चण्डालग्रहणं प्रतिलोमानाम् ॥

ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे ।
क्रिमिरुत्पद्यते तत्र प्रायश्चित्तं कथं भवेत्॥
गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् । त्र्यहं स्नात्वा च पीत्वा च क्रिमिदष्टः शुचिर्भवेत् ॥ १२३ ॥

नैतत्क्रिमिदंशनमात्रे चोद्यते । क्व तर्हि ? स्वशरीरोत्पन्नक्रिमिदंशे । इतरथा प्रश्नोत्तरानुपपत्तेः । यद्वा—व्रणद्वारे क्रिमीणामुत्पत्तिमात्रे एतत्प्रायश्चित्तम् । न दंशने ॥ १२३ ॥

शुनोपहतस्सचेलोऽवगाहेत ॥ १२४ ॥

शुनोपहतः शुना स्पृष्टः नाभेरूर्ध्वमिति शेषः ॥ १२४ ॥
अथ वाऽऽह—

प्रक्षाल्य वा तं देशमग्निना संस्पृश्य पुनः
प्रक्षाल्य पादौ चाचम्य प्रयतो भवति॥

किमत्र प्रायश्चित्तमिदं भवति? स्नानाशक्तौ पादौ प्रक्षाल्य पुनराचामेदिति सम्बन्धः ॥ १२५ ॥

शुना दष्टस्य कथमित्याह—

अथाप्युदाहरन्ति—

शुना दष्टस्तु यो विप्रो नदीं गत्वा समुद्रगाम्। प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥ सुवर्णरजताभ्यां वा गवां शृङ्गोदकेन वा। नवैश्च कलशैस्स्नात्वा सद्य एव शुचिर्भवेत् ॥१२६॥ ॥ ११ ॥

श्वाधिकारे पुनः श्वग्रहणं श्वापदादीनां प्रदर्शनार्थम् । नदीं गत्वा स्नात्वा चेति शेषः । सुवर्णरजतेति । इदमपि शुना दष्टस्यैव । कनकरजतनिर्मितेन पात्रेण वा मृण्मयैर्वा कलशैः स्नानं एकः कल्पः । गवां शृङ्गोदकेन नवैश्च कलशैरित्यपरः ॥१२६॥

एवं तावत्प्राणिविशेषैर्दष्टस्य प्रायश्चित्तमुक्तम् । अथेदानीं प्राणिविशेषे भक्षणं प्रतिषेधति—

अभक्ष्याः पशवो ग्राम्याः ॥ १२७ ॥

सप्त ग्राम्याः पशवः गोश्वाजाविकपुरुषाश्च गर्दभश्च उष्ट्रस्सप्तमोऽश्वमुहैके ब्रुवते ॥ १२७ ॥

**क्रव्यादाश्शकुनयश्च ॥ १२८ ॥**

क्रव्य मांस तददन्तीति क्रव्यादा । शकुनय काका शकुन्ता वा ग्राम्यानुकर्षणार्थश्चकार । एतेषा भक्ष्यत्वेन कामत प्राप्ताना प्रतिषेध । तथा च श्रुति—'स होवाच किं मेऽन्न भविष्यतीति' इति मुख्यप्राणेन पृष्टे ऊचु 'यत्किञ्चिदिदमाश्वभ्य आशकुनिभ्य इति होचु'[1] इति । आह च मनु—

प्राणस्यान्नमिद सर्वं प्रजापतिरकल्पयत्[2] ॥ इति ॥

अतस्सर्वमिद भक्ष्यत्वेन प्राप्त तन्निवारणार्थं प्रकरणारम्भ ॥

**तथा कुक्कुटसूकरम् ॥ १२९ ॥**

तथाशब्दोपि ग्राम्यानुकरणार्थ एव । कुक्कुटसूकरमिति द्वन्द्वैकवद्भाव ॥ १२९ ॥

साम्प्रत ग्राम्यपशुविषयप्रतिषेधापवादमाह—

**अन्यत्राजाविभ्यः ॥ १३० ॥**

प्रत्येक बहुवचन तत्र जात्याख्यायामन्यतरस्या भवति । अजा अपिभक्ष्या इत्यर्थ ॥ १३० ॥

**भक्ष्याः श्वाविड्गोधाशशशल्यककच्छपखड्गाः खड्गवर्जाः पञ्च पञ्चनखाः ॥ १३१ ॥**

---

[1] छा उ ५ २ १ [2] मनु ५ २८

परिसङ्ख्यैषा । कामत एवैतेषामपि भक्ष्यत्वे प्राप्ते भक्ष्येतरनिषेधार्थम् । पञ्चपञ्चनखग्रहणाच्च सजातीयपरिसङ्ख्यैषा गम्यते । श्वाविडादीन् षडनुक्रम्य पञ्चग्रहणात् षष्ठस्य परिसङ्ख्यायां विकल्पः । तच्च स्पष्टीकृतं—खड्गवर्जा इति । तथा च वसिष्ठः 'खड्गे तु विपदन्तः'[1] इति । आचार्येणाप्युक्तं 'खड्गश्राद्धे पवित्रम्' इति । एवमुत्तरेष्वपि खड्गवत् यथासम्भवं योजना । श्वाविट् श्वसदृशमृगः वराहविशेषः ॥ १३१ ॥

**तथर्श्यहरिणपृषतमहिषवराहकुलङ्गाः कुलङ्गवर्जाः पञ्च द्विखुरिणः ॥ १३२ ॥**

भक्ष्या इत्यनुवर्तते । पूर्ववत्सङ्ख्या ॥ १३२ ॥

पशवो गताः । पक्षिण आरभ्यन्ते—

**पक्षिणस्तित्तिरिकपोतकपिञ्जलवार्ध्राणसमयूरवारणा वारणवर्जाः पञ्च विष्किराः ॥ १३३ ॥**

अस्मिन्नपि षष्ठे वारणे विकल्पः । विकीर्य भक्षयन्तीति विविष्किराः । अन्यत्पूर्ववत् ॥ १३३ ॥

**मत्स्यास्सहस्रदंष्ट्रश्चिलिचिमो वर्मी बृहच्छिरोमशकरिरोहितराजीवाः ॥१३४॥**

भक्ष्या इत्यनुवर्तते । उक्तेषु पशुमृगपक्षिमनुष्येषु अप्रसिद्धनामकाः निषादेभ्योऽवगम्याः ॥ १३४ ॥

[1] वा. ध. १४-४७.

उक्तो जङ्गमेषु भक्षणविशेषः । तथा परेष्वाह—

## अनिर्दशाहसन्धिनीक्षीरमपेयम् ॥ १३५॥

गोमहिषाजानामिति शेषः । प्रसवादारभ्य नातिक्रान्तदशाहमनिर्दशाहं क्षीरम् । सन्धिनीपुनः या गर्भिणी दुह्यते या वा सायमदुग्धा प्रातर्दुह्यते प्रातरदुग्धा वा सायम् ॥ १३५ ॥

## विवत्साऽन्यवत्सयोश्च ॥ १३६ ॥

क्षीरमपेयमित्यनुवर्तते विवत्सा विगतवत्साऽन्यवत्सा च । सन्धिनीक्षीरमपेयम्, न पुनस्तद्विकारं दध्याद्यपि । कुत एतत्? वसिष्ठवचनात् । यदाह—'सन्धिनीक्षीरमवत्साक्षीरम्'[1] इत्यभक्ष्यप्रकरणे । कथमनेन दध्याद्यनुग्रहो भवति? अयं तावत् न्यायः सर्वत्र निषेधे द्रव्यशब्दो वेदितव्यः प्रकृतिग्रहणे विकारस्यापि ग्रहणं विकारग्रहणे च प्रकृतेरिति । यत्पुनरपण्यप्रकरणे 'क्षीरं च सविकारम्'[2] इति विकारग्रहणं कृतं तत्रायमभिप्रायः—विकाराणां दधिघृतादीनां क्षीरजातेस्तु जात्यन्तरत्वात् पायसादिशब्दव्यापादेन दधिघृतनवनीतादिशब्दान्तराविकारग्रहणमन्तरेण तद्बुद्धिर्न जायत इत्यत्रान्यतरग्रहणेऽन्यतरग्रहणं न भवत्येव । इह तु वसिष्ठवचने क्षीराधिकारे सत्येवं पुनः क्षीरग्रहणं तद्विकाराभ्यनुज्ञानार्थम् ॥ १३६ ॥

## आविकमौष्ट्रिकमैकशफमपेयम् ॥१३७॥

---

[1] वा. ध. १४-३४.    [2] वा. ध. २-२६.

क्षीरमित्यनुवर्तते । एकशफा एकखुरा अश्वादयस्तेषां पय ऐकशफम् ॥ १३७ ॥

उत्तरमपेयानां पयसां प्रसङ्गाल्लाघवाच्च प्रायश्चित्तमाह—

अपेयपयःपाने कृच्छ्रोऽन्यत्र गव्यात् ॥१३८

अविशेषितः कृच्छ्रशब्दः प्राजापत्ये वर्तते ॥ १३८ ॥

गव्ये त्रिरात्रमुपवासः ॥ १३९ ॥

द्वयमेतद्बुद्धिपूर्वविषयम् । अबुद्धिपूर्वे तु पूर्वस्मिन् त्रिरात्रं गव्ये तूपवासः । आह च मनुः—'शेषेषूपवसेदहः'[1] इति ॥ १३९ ॥

पर्युषितं शाकयूषमांससर्पिश्शृतधानागुडदधिमधुसक्तुवर्जम् ॥ १४० ॥

पर्युषितमुषःकालान्तरितम् । शाकयूषादिवर्जं पक्वं पर्युषितमभक्ष्यमिति सम्बन्धः ॥ १४० ॥

शुक्तानि च ॥ १४१ ॥

शुक्तानि च दधिवर्जम् । आह च मनुः—

दधि भक्ष्यं तु शुक्तेषु सर्वं च दधिसम्भवम् ।
यानि चैवाभिषूयन्ते पुष्पमूलफलैश्शुभैः[2] ॥इति ॥ १४१

तथाजातो गुळः ॥ १४२ ॥

---

[1] मनु. ५-२०.  [2] ५-१०.

तथाजातशुक्तत्वेन जात इत्यर्थः । गुळस्य पृथक्करणं पक्वस्यापि इक्षुरसस्य शुक्तस्य प्रतिषेधार्थम् ॥ १४२ ॥

भक्ष्याभक्ष्यप्रकरणेनाहारशुद्धिरुक्ता । तच्छुद्धौ हि सत्त्वशुद्धिर्भवति । सत्त्वशुद्धौ च ध्रुवा स्मृतिर्जायते । तचाध्ययनेऽधिकार इत्याह—

श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य
तैष्यां माघ्यां वोत्सृजेयुरुत्सृजेयुः॥१४३
॥ १२ ॥

श्रवणेन नक्षत्रेण श्रविष्ठया वा युक्ता पौर्णमासी श्रावणी । श्रवणशब्दोऽत्र नक्षत्रद्वयप्रदर्शनार्थः । तथाऽऽह—

चित्रादितारकाद्वन्द्वैः पूर्णपर्वेन्दुसङ्गतैः ।
मासाः चैत्रादिकाः ज्ञेयाः त्रिस्त्रिष्षष्ठान्त्यसप्तमैः ॥

इति । एवमेव द्वादश पौर्णमास्यो द्रष्टव्याः । उपाकर्मोत्सर्जनं गृह्य एवोक्तम् ॥ १४३ ॥

इति बोधायनीयधर्मसूत्रविवरणे गोविन्दस्वामिकृते
पञ्चमोऽध्यायः



एवं तावत्पुरुषार्थतया शौचाधिष्ठानमुक्तम्, अथेदानीं क्रत्वर्थनयाऽऽह—

## शुचिमध्वरं देवा जुषन्ते ॥ १ ॥

अध्वर इति यज्ञनाम । ध्वरः हिंसाकर्म तत्प्रतिषेधोऽध्वरः । जुषन्ते सेवन्ते । देवग्रहणं पितॄणामप्युपलक्षणार्थम् ॥ १ ॥

किमित्येवम् ?

## शुचिकामा हि देवाश्शुचयश्च ॥ २ ॥

हिशब्दो हेतौ । शुचिकामत्वात् शुचित्वाच्चेत्यर्थः ॥ २ ॥

प्रपञ्चोऽयं भूयः तत्संग्रहार्थः —

## तदेषाऽभिवदति—

**शुची वो हव्या मरुतश्शुचीनां शुचिं हिनो-**
**म्यध्वरं शुचिभ्यः । ऋतेन सत्यमृतसा-**
**प आयञ्छुचिजन्मानश्शुचयः पावका**
**इति ॥ ३ ॥**

शुचीति ऋगेषा देवानां शुचित्वमभिवदतीति विव्रियते । वसिष्ठस्यार्षं त्रिष्टुप्छन्दः । हे मरुतः ! वो युष्माकं शुचीनां सतां हव्यान्यपि शुचीनि योग्यानि भवन्ति । तस्मात् शुचिभ्यो युष्मभ्यं शुचिमेवाध्वरं यज्ञं प्रहिणोमि । यस्मादेव वयं मरुता ऋतवन्तस्तस्मात्तेऽपि मरुतः ऋतेन यज्ञेन सत्यं परपुरुषार्थममृतरूपस्वर्गापवर्गादिरूपं आयन् प्राप्नुयुः । ऋतवन्तश्शुचिजन्मानश्शुचयः पावकाश्च ऋतसापः यज्ञमेवेना । उक्तं च 'शु-

चिभिः साध्वरम्' इति[1] । जन्म शुचि येषां ते शुचिजन्मानः शुचयः पावनहेतवश्च द्रव्याणाम् । तथा चोक्तम्—'श्वचण्डालपतितोपस्पृष्टम्' इति ॥ ३ ॥

अहतं वाससां शुचिस्तस्माद्यत्किञ्चेज्यासंयुक्तं स्यात्सर्वं तदहतैर्वासोभिः कुर्यात्॥ ॥ ४ ॥

अहतेन वाससा इत्युक्तं प्रत्यहतस्य वाससः साक्षात् क्षालनं न स्यात्तन्निराकरणायाह—

प्रक्षाळितोपवातान्यक्लिष्टानि वासांसि पत्नीयजमानावृत्विजश्च परिदधीरन् ॥ ५ ॥

तत्र संस्कारोऽहतवाससः एतत्क्षाळनमित्यभिप्रायः । उपवातानि शोषितानीत्यर्थः । अक्लिष्टानि अच्छिद्राणि, तानि च शुक्लानि भवन्ति, उत्तरत्र लोहितवाससः इति विशेषश्रवणात् । ऋत्विक्छन्दाद्गुपद्रष्ट्राद्योऽप्येवंभूतानि वासांसि परिदधीरन्निति गम्यते ॥

एवं प्रक्रमादूर्ध्वम् ॥ ६ ॥

आवृत्तादिति शेषः । प्रक्रम उपक्रमः । उपक्रमादारभ्याऽपवर्गादेवंभूतैर्वासोभिर्भवितव्यमित्यभिप्रायः ॥ ६ ॥

दीर्घसोमेषु सत्रेषु चैवम् ॥ ७ ॥

[1] शुचिभिर्नोध्वरमिति पाठान्तरम् अत्र ग्रन्था गलितो भाति

दीर्घसोमास्सत्राणि संस्थानि प्रसिद्धानि । चशब्द एकाहाहीनोपसङ्ग्रहणार्थः । एवमित्यतिदेश । 'यत्किञ्चिज्ज्यासंयुक्तम्' इत्यस्य विस्तरोऽयम् ॥ ७ ॥

किमेष एवोत्सर्गः ? नेत्याह—

**यथा समाम्नातं च ॥ ८ ॥**

शुक्लवाससोऽन्यदपि यद्यथा समाम्नातं तथा कर्तव्यमिति ॥ ८ ॥

तदाह—

**यथैतदभिचरणीयेष्विष्टिपशुसोमेषु लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुः चित्रवाससश्चित्रासङ्ग्या वृषाकपाविति च ॥ ९ ॥**

अभिचरणीयेषु अभिचारसाधनेषु उष्णीषं शिरोवेष्टनं वासः परिधानं चित्रं नानावर्णं आसङ्ग्यं उत्तरीयम् । अभिचरणेष्टय 'आग्नावैष्णवमेकादशकपालं निर्वपेत्[1]' इत्याद्याः । पशवः 'ब्राह्मणस्पत्यं तूपरमालभेत[2]' इत्याद्याः । सोमा श्येनादय । वृषाकपि 'विहि सोतोरसृक्षत[3]' इति सूक्तम् । इतिशब्दचशब्दौ 'अभिचरन् दशहोतारं जुहुयात्[4]' इत्येवमादीनामुपसंग्रहणार्थौ ॥ ९ ॥

**अग्न्याधाने क्षौमाणि वासांसि तेषामलाभे कार्पासिकान्यौर्णानि वा भवन्ति ॥ १० ॥**

[1] तै सं २,२,१ [2] तै सं २-१-५ [3] ऋक्सं १०-८६-१ [4] तै ब्रा २-२-१.

त्रिभि साध्वरम्' इति[1] । जन्म शुचि येषा ते शुचिजन्मान शुचय पावनहेतवश्च द्रव्याणाम् । तथा चोक्तम्—'श्वचण्डालपतितोपस्पृष्टम्' इति ॥ ३ ॥

**अहतं वाससां शुचिस्तस्माद्यत्किञ्चेज्यासंयुक्तं स्यात्सर्वं तदहतैर्वासोभिः कुर्यात्॥ ॥ ४ ॥**

* अहतेन वाससा इत्युक्त प्रत्यहतस्य वासस साक्षाद् क्षालन न स्यात्तन्निराकरणायाह—

**प्रक्षालितोपवातान्यक्लिष्टानि वासांसि पत्नीयजमानावृत्विजश्च परिदधीरन् ॥ ५ ॥**

तत्र संस्कारोऽहतवासस एतत्क्षालनमित्यभिप्राय । उपवातानि शोषितानीत्यर्थ । अक्लिष्टानि अच्छिद्राणि, तानि च शुक्लानि भवन्ति,. उत्तरत्र लोहितवासस इति विशेषश्रवणात् । ऋत्विक्छब्दादुपद्रष्ट्रादयोऽप्येवम्भूतानि वासासि परिदधीरन्निति गम्यते ॥

**एवं प्रक्रमादूर्ध्वम् ॥ ६ ॥**

आवृत्तादिति शेष । प्रक्रम उपक्रम । उपक्रमादारभ्याऽपवर्गादेवम्भूतैर्वासोभिर्भवितव्यमित्यभिप्राय ॥ ६ ॥

**दीर्घसोमेषु सत्रेषु चैवम् ॥ ७ ॥**

---

[1] शुचिभिनाध्वरमिति पाठान्तरम्

* अत्र ग्रन्थो गलितो भाति.

इदं चान्यत्—

## न परिहितमधिरूढमप्रक्षाळितं प्रावरणम्॥

भवेदिति शेषः । परिहितं कौपीनप्रदेशे । अधिरूढं तल्पास्तरणार्थे । एतदुभयमप्रक्षाळितं प्रावरणमुत्तरीयेण न कुर्यात् ॥

## नापल्पूलितं मनुष्यसंयुक्तं देवतासु युञ्ज्यात् ॥ १५ ॥

पल्पूलितं हस्तेन शिलायां ताडितम् । अपल्पूलितमेवंभूतं वासश्चर्मादि मनुष्यैरुपयुक्तं देवतासु देवेषु न कुर्यात् । देवतार्थेषु कर्मस्विति यावत् । 'यथाऽधिषवणकर्माण्यव्रतं चर्म' इत्यत्र वचनात् मनुष्यैरुपयुक्तमपि पल्पूलितं चेदुपस्तीर्यमित्येव ॥ १५ ॥

अधुना देशशुचिमाह—

## घनाया भूमेरुपघात उपलेपनम् ॥ १६ ॥

महावेदिनिर्माणावस्थायामिति शेषः । तत्र हि 'वेदिकारा वेदिं कल्पयन्ते' इति शौचं नोक्तम् । शिलातलतया स्थिताया भूमेरुपघाते उपलेपनं मूत्राद्युपघाते गोमयेनोपलेपनम् ॥ १६ ॥

## सुषिरायाः कर्षणम् ॥ १७ ॥

तस्मिन्नेव विषये सुषिरायाः सच्छिद्राया मृद उपघाते कर्षणाच्छुद्धिः ॥ १७ ॥

पत्नीयजमानयोरेतद्विधानम् ॥ १० ॥

'अहतं वाससां शुचिः' इत्युक्तम् । इदानीमुपहतान्यपि वासांस्यभ्यनुजानन् तेषां मूत्रादिसंसर्गे शौचमाह—

## मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां मृदाऽद्भिरिति प्रक्षाळनम् ॥ ११ ॥

इतिशब्दः प्रकारवचनो गोशकृदादीन्यपि प्रदर्शयति । पुरुषार्थेष्वपि वासांसीति यथासम्भवं द्रष्टव्यम् ॥ ११ ॥

## वासोवत्तार्प्यवृकलानाम् ॥ १२ ॥

तृपानाम वृक्षास्सन्ति तेषां त्वचा निर्मितमाच्छादनं तार्प्यमित्युच्यते । वृकलाश्शकमाः (?) । तेषामपि मृदाऽद्भिरिति प्रक्षाळनम् ॥ १२ ॥

## वल्कलवत्कृष्णाजिनानाम् ॥ १३ ॥

वल्कलशब्देनाप्याच्छादनविशेष उच्यते । 'चेलवल्कलधारिणाम्' इत्येवमादिषु दर्शनात् । तद्वत्कृष्णाजिनानामपि यथाशौचं वेदितव्यम् । ननु वल्कलानां शौचं नोक्तम्, अतः कथं तद्वदित्यतिदेशः । उच्यते—इह 'वल्कलवत्कृष्णाजिनानाम्' इत्युपमिते सति कृष्णाजिनवद्वल्कलानामित्ययमर्थ उपमानोक्त्याऽत्र विधित्सितः । तद्वदिति प्रतिप्रत्ययः षष्ठ्या सह व्यत्ययः कृष्णाजिनवद्वल्कलानामिति । यथा 'सह शाखया प्रस्तरं प्र हरति' इत्यत्र द्वितीयातृतीययोः । एवं च वल्कलानामपि बिल्वतण्डुलैरेव शुद्धिः ॥ १३ ॥

इदं चान्यत्—

## न परिहितमधिरूढमप्रक्षालितं प्रावरणम्॥

मवेदिति शेषः। परिहितं कौपीनप्रदेशे । अधिरूढं तल्पास्तरणार्थे । एतदुभयमप्रक्षालितं प्रावरणमुत्तरीयेण न कुर्यात्॥

## नापल्पूलितं मनुष्यसंयुक्तं देवतासु युञ्ज्यात् ॥ १५ ॥

पल्पूलितं हस्तेन शिलायां ताडितम् । अपल्पूलितमेवंभूतं वासश्चर्मादि मनुष्यैरुपयुक्तं देवतासु देवेषु न कुर्यात् । देवतार्थेषु कर्मस्विति यावत् । 'यथाऽधिषवणकर्माण्यप्रतं चर्म' इत्यत्र वचनात् मनुष्यैरुपयुक्तमपि पल्पूलितं चेदुपस्तीर्यमित्येव ॥ १५ ॥

अधुना देशशुचिमाह—

## घनाया भूमेरुपघात उपलेपनम् ॥ १६ ॥

महावेदिनिर्माणावस्थायामिति शेष । तत्र हि 'वेदिकारा वेदिं कल्पयन्ते' इति शौचं नोक्तम् । शिलातलतया स्थिताया भूमेरुपघाते उपलेपनं मूत्राद्युपघाते गोमयेनोपलेपनम् ॥ १६ ॥

## सुषिरायाः कर्षणम् ॥ १७ ॥

तस्मिन्नेव विषये सुषिरायाः सच्छिद्राया मृद उपघाते कर्षणाच्छुद्धिः ॥ १७ ॥

**क्लिन्नायाः मेध्यमाहृत्य प्रच्छादनम् ॥ १८ ॥**

क्लिन्ना आर्द्रा । तस्या उपघाते तृणादिना मृदा च प्रच्छादनं कार्यम् । किमर्थम्? दग्धुम् । एवं हि कृते सत्यादौ भूसंस्कारो भवति ॥ १८ ॥

**चतुर्भिश्शुध्यते भूमिर्गोभिराक्रमणात्खननाद्दहनादभिवर्षणाच्च ॥ १९ ॥**

अत्यन्तोपहताया भूमेरेतच्छौचं, तत्र वेदिविमानकाले सन्निकर्षविप्रकर्षापकर्षाद्युपघातविशेषापेक्षया चाभिवर्षणादीनां व्यस्तसमस्तकल्पना ॥ १९ ॥

अथेदानीमत्यन्तोपहताया आह—

**पञ्चमाच्चोपलेपनात् षष्ठात्कालात् ॥ २० ॥**

उपलेपनमुक्तम् । सोमसूर्यांशुमारुतैर्या शुद्धिः सा कालात् शुद्धिः ॥

**असंस्कृतायां भूमौ न्यस्तानां तृणानां प्रक्षाळनम् ॥ २१ ॥**

प्रोक्षणादिसंस्कारविहीनायां भूमौ न्यस्तानामत्यन्ताल्पानां बर्हिरादीनां प्रक्षाळनं कार्यम् ॥ २१ ॥

**परोक्षोपहतानामभ्युक्षणम् ॥ २२ ॥**

तृणानामेव यज्ञार्थं समुपहृतानामेतत् ॥ २२ ॥

## एवं क्षुद्रसमिधाम् ॥ २३ ॥

क्षुद्रसमिधोऽङ्गुलिपरिमिता अनिध्मा इति यावत् ॥ २३ ॥

## महतां काष्ठानामुपघाते प्रक्षाळ्यावशोषणम् ॥ २४ ॥

याज्ञिकानामेव काष्ठानां 'अथाग्न्याद्धघातीध्मं प्रायणीयं पुरा महापरिधिकम्' इत्येवमादीनुपयोक्ष्यमाणानां पदादिभिरुपहतानामेतत् ॥

## बहूनां तु प्रोक्षणम् ॥ २५ ॥

इध्मादिव्यतिरिक्तानां पूर्वस्मिन् विषये प्रोक्षणं तत्रतबहुत्वे। तेषामेव मूत्राद्युपघाते त्याग एव ॥ २५ ॥

## दारुमयानां पात्राणामुच्छिष्टसमन्वारब्धानामवलेखनम् ॥ २६ ॥

उच्छिष्टजुह्वादीनामुच्छिष्टपुरुषस्पृष्टानां दार्वादीनामवलेखनं घर्षणम्। अशुचिभिः समन्वारम्भः स्पर्शः। 'चरूणां स्रुक्स्रुवाणां च'[1] इति मानवमपूर्वं वेदितव्यम् ॥ २६ ॥

## उच्छिष्टलेपोपहतानामवतक्षणम् ॥ २७ ॥

तेषामेवास्मिन्निमित्ते अवतक्षणं वाश्यादिनाऽनुकर्षणम्। तस्मिन् कृतेऽपि तत्पात्रं यदि स्वकार्यक्षमं भवति। अक्षमस्य तु श्रौतेनापायेन त्याग एव ॥ २७ ॥

---

[1] मनु ५-११७.

मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः ॥ २८ ॥

इध्माबर्हिरादीनामप्ययं विधिर्द्रष्टव्यः । प्रभृतिशब्देनात्र निर्दिष्टानां द्वादशाना ग्रहण कृतम् ॥ २८ ॥

'दारुमयानाम्' इत्यादिसूत्रद्वयस्यापवादमुपक्रमते—

तदेतदन्यत्र निर्देशात् ॥ २९ ॥

तदेतद्वलेखनादिविधानं निर्देशात् अन्यत्र विधानादृते न भवतीत्यर्थ । न्यायसिद्धेऽर्थे सूत्रारम्भः किमर्थः? इति चेत्— समुच्चयशङ्कानिवृत्त्यर्थ इति ब्रूमः । कथं पुनर्विशेषविहिते सामान्यविहितस्यावलेखनादेरसमुच्चयशङ्का? । शौचभूयस्तयाऽपेक्षितत्वात । तद्वा कथमिति चेत्? 'शुचिमध्वरं देवा जुषन्ते' इति सूत्रद्वयस्थक्रमदर्शनस्य प्रयोजकत्वादिति ॥ २९ ॥

निर्देशमिदानीमाह—

यथैतदग्निहोत्रे घर्मोच्छिष्टे च दधिघर्मे च कुण्डपायिनामयने चोत्सर्गिणामयने च दाक्षायणयज्ञे चेडादधे च चतुश्चक्रे च ब्रह्मौदनेषु च तेषु सर्वेषु दर्भैरद्भिः प्रक्षाळनम् ॥ ३० ॥

शौचमित्यनुवर्तते । चतुश्चक्रो नाम 'इष्टो मध्यवन्तो यजन्ते

6335



यथैतदश्व ' इत्यत्र प्रसिद्ध । यथैतदिति निपातावुदाहरणप्रसूच नार्थौ । तेषु घर्मस्वग्निहोत्रहवण्यादीनामुच्छिष्टसमन्वारब्धे लेपोपघाते च दर्भैरद्भि प्रक्षाळनमेव शौच नावलेखनादि । ब्रह्मौदनेष्विति बहुवचनमाश्वमेधिकानामुपसङ्ग्रहणार्थम् । तत्र यद्यपि ब्रह्मौदनपात्रस्य सकृद्भोजने कृते पुन क्रतौ नोपयोग । तथाऽपि दर्भैरद्भि प्रक्षाळनं शौच नेतराद्भि प्रक्षाळनमेवेत्यभिप्राय ॥३०॥

किंच—

## सर्वेष्वेव सोमभक्षेष्वद्भिरेव मार्जालीये प्रक्षाळनम् ॥ ३१ ॥

ग्रहचमससोमभक्षेषु मार्जालीयेऽद्भिः प्रक्षाळनं न दर्भैरिति ॥३१॥

तेषामेव—

## मूत्रपुरीषलोहितरेतःप्रभृत्युत्सर्गः ॥३२॥१३

उपहतानामित्यध्याहार । प्रभृतीत्यनेन श्लेष्मादिसङ्ग्रह । ननु ग्रहचमसानामप्येवम्भूताना जुह्वादिवत् उत्सर्गे प्राप्ते किमर्थ प्रयत्न ? उच्यते—' यथा हि सोमसंयोगाच्चमसो मेध्य उच्यते ' इति दृष्टान्तबलात् ग्रहचमसाना मूत्रादिप्रसर्गेऽपि सोमसंयोग एव शुद्धिकारणमित्याशङ्कानिराकरणार्थो यत्न ॥ ३२ ॥

## मृण्मयानां पात्राणामुच्छिष्टसमन्वारब्धानामवकूलनम् ॥ ३३ ॥

आज्यस्थाल्यादीनामुच्छिष्टसमन्वारब्धानां अवकूलनं कुशाग्निस्पर्शः ॥ ३३ ॥

उच्छिष्टलेपोपहतानां पुनर्दहनम् । मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः ॥ ३४॥ तैजसानां पात्राणां पूर्ववत्परिमृष्टानां प्रक्षाळनम् ॥३५॥ परिमार्जनद्रव्याणि गोशकृन्मृद्भस्मेति ॥ ३६ ॥

तैजसानां हिरण्मयादीनां उच्छिष्टसमन्वारब्धानां गोशकृन्मृद्भस्मभिः परिमृज्य प्रक्षालनम् ॥ ३४–३६ ॥

मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां पुनः करणम् ॥ ३७ ॥

अतिरोहितानामेव तैजसानां रुक्महिरण्मयादीनां मूत्राद्युपहतानामेतत्पुनःकरणम् ॥ ३७ ॥

गोमूत्रे सप्तरात्रं परिशायनम् ॥ ३८ ॥

अगूढार्थमिदम् ॥ ३८ ॥

अस्मिन्नेव विषये—

महानद्यां वैवम् ॥ ३९ ॥

सप्तरात्रं परिशायनमित्येव । याः स्वनाम्नैव समुद्रं गच्छन्ति

ता महानद्यः । एते विकल्पाः सन्निकर्षविप्रकर्षापेक्षया व्यवस्थाप्याः ॥ ३९ ॥

## एवमश्ममयानाम् ॥ ४० ॥

दृषदादिष्वश्ममयेषु परिशायनं द्वितीयम् । एवमिति निर्देशेन पुनः करणमपि । यद्वा—मृण्मयशौचस्यैतदनुकरणम् ॥ ४० ॥

अधुना यज्ञपात्रभाजनानां फलादीनां शुद्धिः—

## अलाबुबिल्वविनाळानां गोवालैः परिमार्जनम् ॥ ४१ ॥

अलाबुः स्रुचां भाजनम् । बिल्वमयीषु प्रोक्षणीषु यूपावटादिषु शौचोपयोक्तव्यानामयाथानां विनाळं वेणुविदग्धनळमयादिकं दीर्घभाजनमुच्यते । तच्च प्रणीताप्रणयनादीनाम् । उच्छिष्टसमन्वारब्धानां चैतत् ॥ ४१ ॥

## नळवेणुशरकुशव्यूतानां गोमयेनाद्भिरिति प्रक्षाळनम् ॥ ४२ ॥

इदं पुनरुच्छिष्टलेपोपहतानाम् । नळशब्दो वेत्रे भाष्यते । शेषाः प्रसिद्धाः । एतै· व्यूतास्ते मोतभावेन समन्ततः । इतिशब्दस्त्वगोमूत्रोपलक्षणार्थः ॥ ४२ ॥

अथ देवद्रव्येषु—

## व्रीहीणामुपघाते प्रक्षाळ्यावशोषणम् ॥ ४३ ॥

सतुपोपलक्षणमेतत् । उपघातश्चण्डालादिस्पर्शः । द्रोणादल्पतरस्येदमुक्तम् । बहूनां तु प्रोक्षणं तथाविधानामेव ॥ ४३ ॥

## तण्डुलानामुत्सर्गः ॥ ४४ ॥

मूत्राद्युपहतानामल्पानामिति शेषः । बहूनां तावन्मात्रत्याग इति वक्ष्यति ॥ ४४ ॥

## एवं सिद्धहविषाम् ॥ ४५ ॥

एवं च पुरोडाशादीनामुपघाते त्याग एवार्थः । स एव च हविर्दोषो भवति ॥ ४५ ॥

## महतां श्ववायसप्रभृत्युपहतानां तं देशं पुरुषान्नमुत्सृज्य पवमानस्सुवर्जन इत्येतेनानुवाकेनाभ्युक्षणम् ॥ ४६ ॥

अवशिष्टानामिति शेषः । प्रभृतिशब्दः पतितादिसङ्ग्रहार्थः ॥४६॥

## मधूदके पयोविकारे पात्रात् पात्रान्तरानयने शौचम् ॥ ४७ ॥

'दधि मधु घृतमापो धानाः'* इत्यत्र मधूदके । पयोविकारः आमिक्षा । एतेषां पुरुषदोषमात्रदुष्टानाम् । तयोच्छिष्टस्पर्शमात्रम् । अत्र तु विकारग्रहणात् पयसश्शौचान्तरं कल्प्यम् ॥ ४७ ॥

*तै. स. २-३-२.

**एवं तैलसर्पिषी उच्छिष्टसमन्वारब्धे उद-केऽवधायोपयोजयेत् ॥ ४८ ॥**

तैलमपि प्रतिनिधित्वेन यज्ञेषु प्राप्तम् । यद्वा—'तैलं दधि पयस्सोमो यवागुरोदनं घृततण्डुलमासमश्वतर्यं कामत ' इत्यभियुक्तोपदेशान्मुख्य एवेति । पात्रान्तरानयनमिति निर्दिश्यते । उदकेऽवधानं विशेषः । स च तैलसर्पिषोर्यथाऽऽत्माविनाशो भवति तथा कार्यः ॥ ४८ ॥

अथाग्नीनां शौचमाह—

**अमेध्याभ्याधाने समारोप्याग्निं निर्मन्थ्य पवमानेष्टिं कुर्यात् ॥ ४९ ॥**

अमेध्यं मूत्रपुरीषादि तस्याग्निषु प्रक्षेपोऽभ्याधानं तस्मिन् सति अरण्योस्समारोप्य मथित्वाऽग्नीन् विहृत्य पवमानेष्टौ कृतायां तावद्दोषः परिहृतो भवति । एकाग्नौ तद्रष्टव्यम् । तत्र च पुरोडाशस्थाने चरुर्भवेत् ॥ ४९ ॥

अथ यज्ञाङ्गानां प्राबल्यदौर्बल्यविवेकायाह—

**शौचदेशमन्त्रावृदर्थद्रव्यसंस्कारकालभेदेषु पूर्वपूर्वप्राधान्यं पूर्वपूर्वप्राधान्यम् ॥५०॥ ॥ १४ ॥**

एतेषु भेदेषु विरोधेषु पूर्वस्य पूर्वस्य प्राबल्यं परस्य दौर्बल्यं चार्थप्रकर्षाद्वेदितव्यम् । यथाऽग्निष्टोमे प्रागुदक्प्रवणो देशो भूत्रोप-

इत उपलभ्यते अनेवंभूतश्च गोभिराक्रान्तोऽग्निदग्धश्च विद्येत, तयोरन्यतरस्मिन्नेव प्राचीनवंशादौ कर्तव्ये दक्षिणाप्रत्यक्प्रवणोऽपि गोभिराक्रान्तोऽग्निदग्धश्च कर्तव्यः । कस्मात्? शौचप्राधान्यात् । तद्धि पूर्वेण सन्निकृष्टतरं अदृष्टत्वात् । प्रागुदक्प्रवणं पुनर्दृष्टत्वात् विप्रकृष्टम् । दिङ्मात्रमेतदुदाहरणे प्रदर्शितम् । एवं 'देशयोर्मन्त्रावृतोः' इत्यादि द्वन्द्वशो द्रष्टव्यम् । आवृत् प्रयोगप्रांशुभावः ॥ ९० ॥

इति बौधायनधर्मसूत्रविवरणे गोविन्दस्वामिकृते
प्रथमप्रश्ने षष्ठोऽध्यायः,

---

पुनरपि क्रत्वर्थमेव किञ्चिदुच्यते—

## उत्तरतउपचारो विहारः ॥ १ ॥

उपचारस्सञ्चारः ऋत्विग्यजमानयाजिनाम् । विहृतावधिः यस्मिन् देशे स विहारः, यस्य विहारस्योत्तरत उपचारो भवति स तथोक्तः । ऋत्विग्यजमाना उत्तरतोऽग्नीना सञ्चरेयुरिति यावत् ॥ १ ॥

## तथाऽपवर्गः ॥ २ ॥

अयमपि बहुव्रीहिरेव । उत्तरतोनिर्गम इत्यर्थः ॥ २ ॥

तदपवदति—

## विपरीतं पित्र्येषु ॥ ३ ॥

कर्मस्विति शेषः । उपचारापवर्गौ दक्षिणतः कुर्यादित्युक्तं भवति ॥ ३ ॥

पादोपहतं प्रक्षाळयेत् ॥ ४ ॥

अङ्गमुपस्पृश्य सिचं वाऽप उपस्पृशेत्॥५॥

अङ्गं, शरीरं सिक् परिहितं वासः । अत्रोपस्पर्शः स्पर्शमात्रमेव, नाचमनादि ॥ ५ ॥

एवं छेदनभेदनखननिरसनपित्र्यराक्षसनैर्ऋतरौद्राभिचरणीयेषु ॥ ६ ॥

एतेष्वपि कृतेषु अपामुपस्पर्शनमिति । छेदनं 'आच्छिनत्ति' 'आच्छेत्ता ते मा रिषम्'[1] इत्यादि । भेदनम् 'तस्मिन् स्फ्येन प्रहरति' इत्यादिष्वदृष्टसंस्कारेषु । खननं 'तं स खनति वा खानयति वा' इत्यादि । निरसनं 'तृणं वा किशारुवे निरस्यति' इत्यादि । तत्र पुनर्वचनमनिरूपितदशहोत्रायौगपद्यानिवृत्त्यर्थम् । पित्र्यं 'स्वधा पितृभ्य ऊर्भव'[2] इत्यादि । राक्षसं 'रक्षसां भागोऽसि'[3] इत्यादि । नैरृतं 'नैर्ऋतेन पूर्वेण प्रचरति' इत्यादि । रौद्रं अस्थिसंस्रावहोमादि । अभिचरणीयानि 'यं यजमानो द्वेष्टि' इत्येवं चोदितानि ॥ ६ ॥

न मन्त्रवता यज्ञाङ्गेनात्मानमभिपरिहरेत् ॥

मन्त्रवद्यज्ञाङ्गं स्रुक्स्रुवादि । तेनात्मानं नाभिपरिहरेत् आत्मनो बहिर्न कुर्यादनेरन्तरस्स्वयं न भवेदिति यावत् ॥ ७ ॥

तत्र कारणमाह—

अभ्यन्तराणि यज्ञाङ्गानि ॥ ८ ॥

ऋत्विगपेक्षयेति शेषः ॥ ८ ॥

---

[1] तै. स. १-१-२. [2] तै. स. १-३-११. [3] तै. स. १-१-५.

**बाह्या ऋत्विजः ॥ ९ ॥**

प्रयोगाङ्गत्वात् यज्ञाङ्गेभ्य इति शेषः ॥ ९ ॥

**पत्नीयजमानावृत्विग्भ्योऽन्तरतमौ ॥ १० ॥**

फलप्रतिगृहीतृत्वात् अनयोरुदाहरणानि वैसर्जनानि दाक्षिणानि च ॥ १० ॥

अथेदानीममनुष्येषु बाह्याभ्यन्तरमाह—

**यज्ञाङ्गेभ्य आज्यमाज्याद्धवींषि हविर्भ्यः पशुः पशोस्सोमस्सोमादग्नयः ॥ ११ ॥**

उत्तरवेद्यादिषु देशसङ्कटे उपस्थिते अग्नेरनन्तरं सोमस्साद्यते। तदनन्तरं मांसादि। तदनन्तरं धानाः पुरोडाशाः। तेभ्यश्चाज्यमनन्तरं स्रुवश्च स्रुक्च। ततो जुहूरिति। एवं तावदृत्विक्सन्निपाते च योज्यम् ॥ ११ ॥

**यथा कर्मर्त्विजो न विहारादभिपर्यावर्तेरन् ॥ १२ ॥**

आवश्यकत्वे विहारादव्यावृत्तिश्च, तत्र चैतत् कर्मेत्यनेन कथ्यते ॥ १२ ॥

**प्राङ्मुखश्चेद्दक्षिणमंसमभिपर्यावर्तेत ॥ १३ ॥**

अग्निभिस्सह गमने सत्ययं विधिः। अग्नीनां पृष्ठतः करणं मा भूदिति उपदेशः कर्तव्यः ॥ १३ ॥

प्रत्यङ्मुखस्सव्यम् ॥ १४ ॥

अयमपि तथैव । यद्वा—द्वाभ्यामपि सूत्राभ्यां विहृतानामेव पुरुषाणां प्रदक्षिणीकृत्य निर्गमनं विधीयते ॥ १४ ॥

'उत्तरत उपचारो विहारः' इत्युक्तः । तत्र निर्गमनप्रधानमार्गमाह—

अन्तरेण चात्वालोत्करौ यज्ञस्य तीर्थम् ॥

उत्तरवेदिपुरीषार्थं चात्वालः । वेदिपुरीषनिधानदेश उत्करः । तयोर्मध्यं तीर्थं द्वारान्तरेण योगाद्गर्मेति । आह च मन्त्रः—'अध्याचमनं तीर्थं क इह प्रवोच इत्यनेन पथा प्रविशेत्तैर्मतस्य' इति ॥ १५ ॥

अचात्वाल आहवनीयोत्करौ ॥ १६ ॥

अन्तरेण तीर्थमित्यनुषज्यते । अचात्वाले चात्वालान्ये दर्शपूर्णमासादौ ॥ १६ ॥

ततः कर्तारः पत्नीयजमानौ च प्रपद्येरन् ॥

अनेन मार्गेण प्रपद्येरन् प्रविशेयुः । चशब्दादुपद्रष्टारो द्रष्टारश्च ॥ १७ ॥

विसंस्थिते ॥ १८ ॥

असमाप्ते यज्ञे एतद्विधानम् ॥ १८ ॥

संस्थिते च संचरोऽनूत्करदेशात् ॥ १९ ॥

संस्थिते समाप्ते च यज्ञकर्मणि संचरः प्रवेशो निर्गमश्चानूत्करदेशात् पश्चादित्यर्थः । एतदुक्तं भवति—प्रतते यज्ञे पुरस्तात् निर्गमनप्रवेशौ, समाप्ते पश्चादिति । अन्याधिक्यादिके च विहारे इदं विधानम् । इतरत्र 'तस्माद्यज्ञवास्तु नाभ्यवेत्यम्'[1] इति निषेधात् ॥ १९ ॥

नाप्रोक्षितमप्रपन्नं क्लिन्नं काष्ठं समिधं वाऽभ्यादध्यात् ॥ २० ॥

अग्नाविति शेषः । क्लिन्नमार्द्रम् ॥ २० ॥

अग्रेणाहवनीयं ब्रह्मयजमानौ प्रपद्येते ॥ २१ ॥

दक्षिणत आसितुमग्रेणेति । 'एनबन्यतरस्यामदूरेऽपञ्चम्याः', एनपा द्वितीया' इति चानुशासनात् ॥ २१ ॥

जघनेनाहवनीयमित्येके ॥ २२ ॥

एके आचार्या मन्यन्ते वेदिमतिलङ्घ्यापि ॥ २२ ॥

दक्षिणेनाहवनीयं ब्रह्मायतनमपरेण यजमानस्य ॥ २३ ॥

सामान्येऽर्थे तानि कुर्यात् । 'प्रणीताहवनीयं ब्रह्मायतनम्' इति सिद्धे यजमानायतनविधानार्थं आरम्भः । अतश्च 'यन-

[1] तै. स. ३-१-९.

व्रतोपेतो दीक्षितस्स्यात् ॥ २९ ॥

कतमेन व्रतेनोपेतः ?—

न परपापं वदेन्न क्रुध्येन्न रोदेन्मूत्रपुरीषे नावेक्षेत ॥ ३० ॥

परस्य प्रयतस्य। यद्यपि व्रतमात्रस्य पुरुषार्थतयैवंजातीयकानां प्रतिषेधस्सिद्धः। तथाऽपि क्रत्वर्थतया प्रतिषेधः संयोगपृथक्त्वात्। प्रायश्चित्तान्तरमस्यानृतवदनादिवदेव 'यदि यज्जुष्टो भुवस्स्वाहा' इत्यादि। तथा—'दीक्षितश्चेदनृतं वदेदिमं मे गङ्गे यमुने' इत्यादि ॥ ३० ॥

अमेध्यं दृष्ट्वा जपति अबद्धं मनो दरिद्रं चक्षुस्सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीरिति ॥ ३१ ॥ १५ ॥

अमेध्यदर्शने प्रायश्चित्तमिदं निर्दिष्टदर्शने वा। कुतः 'अमेध्यं दृष्टं वा दृष्ट्वा जपतीत्येतदुक्तम्' इति यज्ञप्रायश्चित्तेषु द्वयोरप्यनुभाषणात्। मन्त्रस्तु विव्रियते—वामदेवस्यार्षं गायत्रं छन्दः आपो देवता। अबद्धं अनिरोध्यं अनिवार्यं मनः पापमपि सङ्कल्पयतीत्यर्थः। तथा च श्रुतिः—'तस्मात्तेनोभयं सङ्कल्पयते सङ्कल्पनीयं चासङ्कल्पनीयं च' इति। चक्षुरपि दरिद्रमेव। दरिद्रा गतिकुत्सनयोरिति। कुत्सितगतिरिति। श्रुतिरपि—'तस्मात्तेनोभयं पश्यति दर्शनीयमदर्शनीयं च' इति। किमेभिरनिरो-

ध्यैः करणैः भगवानेव हि सूर्यो ज्योतिषां श्रेष्ठः श्रेयान् सम्यक्पश्यति, तस्मादहं दीप्ते एव न निगमाननुपालयितुं क्षमः, स त्वं मा मा हासीः मा त्याक्षीरिति ॥ ३१ ॥

इति बोधायनीयधर्मसूत्रविवरणे गोविन्दस्वामिकृते
प्रथमप्रश्ने सप्तमोऽध्यायः.

---

यज्ञप्रसङ्गात् ब्राह्मणादीन् स्मृत्वाऽऽह—

**चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः ॥१॥**

चतुःसङ्ख्या ब्राह्मणप्रतिलोमानुलोमानां वर्णत्वनिवृत्त्यर्था ॥ १ ॥

वर्णचतुष्टयप्रभवेतरा मनुष्ययोनय इति वक्तुं ब्राह्मणादीनां भार्या आह—

**तेषां वर्णानुपूर्व्येण चतस्रो भार्या ब्राह्मणस्य ॥ २ ॥**

तेषां मध्ये ब्राह्मणस्येति सम्बन्धः। आनुपूर्व्यग्रहणात् प्रथमं ब्राह्मणी ततः क्षत्रिया इत्येवं द्रष्टव्यम् । असवर्णजातीयापरिणयनं 'इतराऽसदृशीम्' इत्यविशेषकं स्यात् । आह च मनुः—

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥ इति[1] ॥२॥

---

[1] मनु. ३-१२.

**तिस्रो राजन्यस्य ॥ ३ ॥ द्वे वैश्यस्य ॥४॥**

आनुपूर्व्येण क्रमत इति चानुसन्धेयम् ॥ ३–४ ॥

**एका शूद्रस्य ॥ ५ ॥**

कामप्रवृत्तस्यापि शूद्रस्य शूद्रैव भार्या ॥ ५ ॥

**तासु पुत्रास्सवर्णानन्तरासु सवर्णाः ॥ ६ ॥**

व्यवहारार्थं संज्ञाकरणम् । सवर्णास्वनन्तरासु चेति विग्रहः । सवर्णास्समानजातीयाः । अनन्तरा इतराः । ब्राह्मणस्य क्षत्रिया वाऽनन्तरेत्यादि योज्यम् । तत्र सवर्णायां जातः पुत्रस्स एव वर्ण इति व्युत्पत्त्या सवर्णः । अनन्तरायां तु सवर्णसदृश इति । आह च मनुः—

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान् ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥[1] इति ॥ ६ ॥

**एकान्तरद्व्यन्तरास्वम्बष्ठोग्रनिषादाः ॥ ७ ॥**

ब्राह्मणस्य वैश्या एकान्तरा स तस्यामम्बष्टं जनयति । तस्यैव शूद्रा द्व्यन्तरा तस्यां निषादम् । क्षत्रियस्य पुनस्सैवैकान्तरा । सोपि तस्यामेवोग्रं नाम पुत्रं जनयति । एते पूर्वैरनुलोमैस्सह षडनुलोमा अनुक्रान्ताः । तत्र बीजोत्कर्षे क्षेत्रापकर्षे च सत्यानुलोम्यं भवति । विपर्यये तु प्रातिलोम्यं भवति ॥ ७॥

---

[1] मनु. १०-६.

के पुनः प्रतिलोमाः ? तानाह—

**प्रतिलोमास्त्वायोगवमागधवैणक्षत्तृपुल्कसकुक्कुटवैदेहकचण्डालाः ॥ ८ ॥ अम्बष्ठात्प्रथमायां श्वपाकः ॥ ९ ॥ उग्रात् द्वितीयायां वैणः ॥ १० ॥ निषादात्तृतीयायां पुल्कसः ॥ ११ ॥ विपर्यये कुक्कुटः ॥ १२ ॥**

पुल्कसान्निषाद्यां जातस्य कुक्कुटसंज्ञेत्यर्थः । अनेनैतद्विज्ञातं भवति—प्रतिलोमानुलोमेन स्त्रियां जाताः प्रतिलोमा एवेति । अन्यथा कथमेनमवक्ष्यत् ॥ ८–१२ ॥

अथ बीजोत्कर्षवशात् पुनरपि वर्णान्तरमाप्तिमाह—

**निषादेन निषाद्यामा पञ्चमाज्जातोपहन्ति शूद्रताम् ॥ १३ ॥**

अत्र गौतमीयम्—'वर्णान्तरानुगमनमुत्कर्षापकर्षाभ्यां सप्तमेन । पञ्चमेनाचार्याः'[1] इति । आह तत्राभिविधौ । निषादो वैश्याच्छूद्रायां जात इति कृत्वोच्यते ॥ १३ ॥

---

[1] गौ. ध. ४-१४-२१.

तमुपनयेत्षष्ठं याजयेत्सप्तमोऽविकृतो भवति ॥ १४ ॥ १६ ॥

अविकृतः बीजमेव वर्णं प्रतिपद्यत इत्यर्थः । एवं तावच्छूद्रायां वैश्याज्जातस्यासप्तमाद्वैश्यापत्तिरुक्ता । एवमेव वैश्यायां जातस्य क्षत्रियापत्तिः । तथा क्षत्रियायां जातस्य ब्राह्मण्यापत्तिरुच्यते । वर्णत्यागादपि वर्णसङ्करो जायत इतीदं प्रदर्शयितुं आह च मनुः—

व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणां च त्यागेन जायते वर्णसङ्करः ॥[1] इति ॥

स्वकर्मणां त्याग उपनयनादिसंस्कारहानिः । अविकृतेत्यन्तं वर्णसंस्कारप्रदर्शनार्थत्वादुपपन्नमिहाभिधानम्[2] ॥ १४ ॥

इति बौधायनीयधर्मसूत्रविवरणे गोविन्दस्वामिकृते प्रथमप्रश्ने अष्टमोऽध्यायः

---

अथानन्तरप्रभवानामेव किञ्चिद्वक्तव्यमित्यत आह—

तत्र सवर्णासु सवर्णाः ॥ १ ॥

अनुलोमविषयमिदम् । वर्णान्तरसवर्णासु सवर्णैरुत्पादिता अपि सवर्णा भवन्तीत्यर्थः ॥ १ ॥

---

[1] मनु. १०—२४.

[2] "न संस्कारेण इत्येषां महा. क्रमेण निवर्तन्ते । त्रिषु वर्णेषु सादृश्यादसत्यां जनयेत्तु याम् । तस्माद्विषोपरि... न्यानाहुर्मनीषिणः ॥ ... " इत्यधिकसूत्रपाठः.

ब्राह्मणात्क्षत्रियायां ब्राह्मणो वैश्यायामम्बष्ठः शूद्रायां निषादः ॥ २ ॥

ब्राह्मणात्क्षत्रियाया जाताया तस्या ब्राह्मणेनोत्पादित । अत्र पूर्वसूत्रे आदिस्सवर्णशब्दस्सदृशवर्ण इत्यनया व्युत्पत्त्या वर्तते । सूत्रारम्भस्तु तेषामपि वर्णधर्मप्राप्त्यर्थं ॥ २ ॥

पारशव इत्येके ॥ ३ ॥

सोऽय सज्ञाव्यतिरेक ॥ ३ ॥

क्षत्रियाद्वैश्यायां क्षत्रियश्शूद्रायामुग्रः ॥ ४ ॥

अयमप्यैरीयमतेन सज्ञाव्यतिरेकप्रकारं ॥ ४ ॥

वैश्याच्छूद्रायां रथकारः ॥ ५ ॥

अस्य स्वाधानेऽधिकार । 'वर्षासु रथकार' इति । एते अनुक्रान्ता अनुलोमा ॥ ५ ॥

अथ प्रतिलोमासु यच्छूद्रयोन तदाह—

शूद्राद्वैश्यायां मागधः क्षत्रियायां क्षत्ता ब्राह्मण्यां चण्डालः ॥ ६ ॥

अथ वैश्ययोनिमुच्यते—

वैश्यात्क्षत्रियायामायोगवो ब्राह्मण्यां वैदेहकः ॥ ७ ॥

क्षत्रियबीजं पुनः—

**क्षत्रियाद्ब्राह्मण्यां सूतः ॥ ८ ॥**

अथ वर्णसङ्करजातानां परस्परसङ्करजातानाह—

**तत्राम्बष्ठोग्रसंयोगे भवत्यनुलोमः ॥ ९ ॥**

उत्कृष्टबीजप्रभवायामनुलोमायां जाता अपि अनुलोमा एव भवन्तीत्यभिप्रायः ॥ ९ ॥

**क्षत्तृवैदेहकयोः प्रतिलोमः ॥ १० ॥**

शूद्रक्षत्रियापत्यभवात् प्रतिलोमाद्वैश्यब्राह्मणीप्रभवायां प्रतिलोमायामुत्पन्नोऽपि प्रतिलोमो भवतीत्यर्थः । एवमन्यत्रापि प्रयोजकानुसन्धानेन वेदनीयम् ॥ १० ॥

अतः पुनरपि प्रतिलोमानेवाह—

**उग्राज्जातः क्षत्तायां श्वपाकः ॥ ११ ॥ वैदेहकादम्बष्ठायां वैणः ॥ १२ ॥ निषादाच्छूद्रायां पुल्कसः ॥ १३ ॥ शूद्रान्निषायां कुक्कुटः ॥ १४ ॥**

इदमपि प्रतिलोमा भवन्तीत्यर्थप्रयोजकग्रहणार्थं, नोदाहरणाविक्रमेत्र कथ्यते । एकार्थादशब्दा अनेकार्थैश्चैकशब्दान्तरेषु तत्र तत्र संव्यवहारभेदप्रदर्शनार्थाः । एवं च नेनेन कर्मणा तरतमभावं विजानीयादित्युक्तं भवति । तथा च वसिष्ठः—

छन्नोत्पन्नास्तु ये केचित्प्रातिलोम्यगुणाश्रिताः ।
गुणाचारपरिभ्रंशात्कर्मभिस्तान् विजानीयुरिति[1] ॥

तद्विशेषावगतिश्च तत्परिहरणवर्णसंकरादिविशेषेण कल्पनीया । ततश्च व्रात्याः संस्कारहीना इति वृत्ता प्रतिलोमा धर्महीना इत्येतदेव ॥ ११–१४ ॥

वर्णसंकरादुत्पन्नान्व्रात्यानाहुर्मनीषिण इति व्रात्यानाहुर्मनीषिण इति ॥ १५ ॥
१७ ॥

इति बौधायनधर्मसूत्रविवरणे गोविन्दस्वामिकृते
प्रथमप्रश्ने नवमोऽध्यायः

---

संन्यासः प्रवर्तते । ततश्च वर्णसङ्करोऽपि जायते । अतस्तत्परिहारार्थमाह—

षड्भागभृतो राजा रक्षेत्प्रजाम् ॥ १ ॥

षड्भागोऽत्र लुप्तपूरणप्रत्ययो द्रष्टव्यः । भूमिर्वेतनं भृतं तद्धारी भृतः । राजा चात्राभिषिक्तः । स चाहितानां प्रजानां षष्ठभागभाग्भवति । ब्राह्मणस्यानुरक्षितस्य धर्मषड्भागभाग्भवति । तथा च वसिष्ठः—'राजा तु धर्मेणानुशासन् षष्ठं धनस्य हरेत् । अन्यत्र ब्राह्मणात् । इष्टापूर्तस्य तु षष्ठमंशं भजति'[2] इति । इह वर्णमामाद्य-

[1] मा. ५ १८७.
[2] १-४४.

धिकारावष्टम्भेन विहितो ज्योतिष्टोमादि । पूर्वं तु साधारणो धर्मः सर्वेषां सत्यमक्रोधो दानमहिंसा प्रजननमित्यादि । अभिषिक्तस्य प्रजापरिपालनं धर्मः । गौतमश्च तदेवाधिकृत्य वदति—'चलतश्चैनांत्स्वधर्मे स्थापयेत् । धर्मस्य ह्यंशभाग्भवति'[1] इति । वसिष्ठश्च—'स्वधर्मो राज्ञः परिपालनं भूतानाम्'[2] इति ॥ १ ॥

आचार्यश्च स्वधर्मेषु स्थापनमेव रक्षणमिति मत्वाऽस्येमे स्वधर्मा इत्याह ॥

**ब्रह्म वै स्वं महिमानं ब्राह्मणेष्वदधादध्ययनाध्यापनयजनयाजनदानप्रतिग्रहसंयुक्तं वेदानां गुप्त्यै ॥ २ ॥**

षट्कर्मयुक्तो ब्राह्मणः स्वं महिमानम् । किमर्थमेवं कृतवत् ब्रह्मेत्याह—वेदानां गुप्त्यै । गुप्तिः रक्षणम् ॥ २ ॥

सर्वेषां वर्णानां रक्षणायेमे क्षत्त्रधर्मा इत्याह—

**क्षत्त्रे बलमध्ययनं यजनं दानं शस्त्रकोशभूतरक्षणसंयुक्तं क्षत्त्रस्य वृद्ध्यै ॥ ३ ॥**

अदधादित्यनुवर्तते । किं तत्? बलं शक्तिः वेदाध्ययनादिसंयुक्तम् । शस्त्रमायुधम् । तथा च वसिष्ठः—'शस्त्रेण च प्रजापालनं स्वधर्मः'[3] इति । भूतग्रहणं चतुर्विधस्यापि भूतस्य ग्रहणार्थम् । तथा गौतमः—'चतुर्विधस्य मनुष्यजातस्या-

[1] ११-११. [2] १९-१. [3] २-१७

न्तसंज्ञानां चलनपतनसर्पाणामायत्तं जीवनं प्रसूतिरक्षणम्[1] इति । क्षतृस्य वृद्धिरभ्युदयः ॥ ३ ॥

वैश्येषु वैश्यकर्मादधादित्याह—

## विट्स्वध्ययनयजनदानकृषिवाणिज्यपशुपालनसंयुक्तं कर्मणां वृद्ध्यै ॥ ४ ॥

अध्ययनादिसंयुक्तं अध्ययनादिनिष्पादितमित्यर्थः । कृषिः भूविलेखनम् । वाणिज्यं क्रयविक्रयव्यवहारः । कर्माणि यागादीनि । तेषां ह्येवं सति वृद्धिर्भवति ॥ ४ ॥

## शूद्रेषु पूर्वेषां परिचर्या ॥ ५ ॥

अदधादित्येव । पूर्वेषां ब्राह्मणादीनाम् । परिचर्या शुश्रूषा । आह चापस्तम्बः—'शुश्रूषा शूद्रस्येतरेषां वर्णानाम्'[2] इति ॥ ५ ॥

किमिति शुश्रूषा शूद्राणामित्यत आह—

## पत्तो ह्यसृज्यन्तेति ॥ ६ ॥

हिशब्दो हेतौ । यस्मात्प्रजापतेः पदात्सृष्टः तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः । अतो याज्यानां शुश्रूषैव शूद्रस्य धर्मः ॥ ६ ॥

एवं चातुर्वर्ण्यधर्ममभिधाय पुनः राज्ञ एवाह—

## सर्वतोधुरं पुरोहितं वृणुयात् ॥ ७ ॥

1 गौ. ध. ८-२.

2 १-१-७.

सर्वत्र धूर्यस्य सर्वतोधूः धूश्च व्यापारः विषयज्ञानमिहाभिमेतम् । सर्वज्ञ इति यावत् । पुरो धीयत इति पुरोहितः । तं वृणुयात् वृणीत ॥ ७ ॥

## तस्य शासने वर्तेत ॥ ८ ॥

तत्प्रयुक्तः कर्माणि कुर्यात् । स च ब्राह्मणः विद्याभिजनवांश्च गौतमवचनात् । स ह्याह—' ब्राह्मणं पुरोदधीत विद्याभिजनवाग्रूपवयस्सम्पन्नं न्यायवृत्तं तपस्विनम् । तत्प्रसूतः कर्म कुर्वीत । ब्रह्मप्रसूतं हि क्षत्त्रमृद्ध्यते " इत्यादि॥ ८ ॥

## सङ्ग्रामे न निवर्तेत ॥ ९ ॥

युद्धे उपस्थिते पलायनपरायणेन न भवितव्यमित्यर्थः ॥ ९ ॥

युद्धे तु वर्तमाने—

## न कर्णिभिर्न दिग्धैः प्रहरेत् ॥ १० ॥

कर्णवन्त्यस्त्राणि कर्णीनि शूलादीनि । विषेण लिप्तानि दिग्धानि । नसमासः प्रत्येकं प्रतिषेधप्राप्त्यर्थः ॥ १० ॥

किञ्च—

## भीतमत्तोन्मत्तप्रमत्तविसन्नाहस्त्रीबालवृद्धब्राह्मणैर्न युध्येतान्यत्राततायिनः॥११॥

भीतः त्रस्तः । मत्तस्सुरादिपानी । उन्मत्तो विरुद्धचेष्टः । प्रमत्तो विगतचेताः । विसन्नाहो विगलितकवचादिबन्धः । वि-

[1] ११-१२-१४.

गतव्यापारो वा । शेषाः प्रसिद्धाः । तैर्न युध्येत तान् न हिंस्यादित्यर्थः । तथा च गौतम —'न दोषो हिंसायामाहवे । अन्यत्र व्यश्वसारथ्यनायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः'[1] इति । व्यश्वसारथीत्यत्र व्यश्वो विसारथिरिति योजना । व्यश्वादिशब्दो दूतादिभिः प्रत्येकं सम्बन्धनीयः । अन्ततोऽपि स्वदूतोऽहमिति यो वदति गौरहं ब्राह्मणोऽहमिति । पूर्वोक्तान्विशिनष्टि—अन्यत्राततायिन इति । आततायी साहसकारी ॥ ११ ॥

तद्धिंसायां दोषाभावं परकीयमतेनोपन्यस्यति—

**अथाप्युदाहरन्ति—**

**अध्यापकं कुले जातं यो हन्यादाततायिनम् । न तेन भ्रूणहा भवति मन्युस्तं मन्युमृच्छतीति ॥ १२ ॥**

भ्रूणहा यज्ञसाधनवधकारी । भ्रूणो यज्ञ निर्भाति सर्वं सुवते तदभिप्रेतमिति । आततायिविषयेऽपि ब्राह्मणवधे दोषोऽस्तीति । इतरथा 'न तेन भ्रूणहा भवति' इति नावक्ष्यत् ॥ १२ ॥

'षड्भागभृतो राजा' इत्युक्तम् । तस्य क्वचिदपवादमाह—

**सामुद्रशुल्कः ॥ १३ ॥**

राज्ञो भवतीति शेषः । द्वीपान्तरादाहृतं सामुद्रं वस्तु तत्सम्बन्धी सामुद्रशुल्कः पणद्रव्यम् ॥ १३ ॥

[1] गौ. ध. १०-१८.

तस्मिन् भागः कियानित्यत आह—

परं रूपमुद्धृत्य दशपणं शतम् ॥ १४ ॥

गृह्णीयादिति शेषः । परमुत्कृष्टद्रव्यरूपं रत्नादिद्रव्यं स्वामिने प्रदाय शेषं शतधा विभज्य दशपणं गृह्णीयात् । अनेन सामुद्रे दशभागश्शुल्क इत्युक्तं भवति ॥ १४ ॥

अन्येषामपि सारानुरूप्येणानुपहत्य धर्मं प्रकल्पयेत् ॥ १५ ॥

असामुद्राणामपि द्रव्याणां सारफल्गुत्वापेक्षया परं रूपमनुपहत्यैव धर्मं प्रकल्पयेदात्मार्थम् । तत्र सारफल्गुविभागो गौतमेनोक्तः 'विंशतिभागश्शुल्कः पण्ये । मूलफलपुष्पौषधमधुमांसतृणेन्धनानां षाष्ठ्यम्'[1] इति । षष्ठीमितं षाष्ठ्यम् ॥ १५ ॥

किंच—

अब्राह्मणस्य प्रणष्टस्वामिकं रिक्थं संवत्सरं परिपाल्य राजा हरेत् ॥ १६ ॥

अस्वावस्य द्रव्यस्य प्रभुरित्यज्ञानमात्रे प्रणष्टशब्दः । ब्रह्मस्वमिति तु विज्ञाते ब्राह्मण एवाददीत । उक्तं चैतच्चौनाधिष्ठानाध्याये 'न तु कदाचिद्राजा ब्राह्मणस्य स्वमाददीत' इति । आह च मनुः—

---

[1] गौ. ध. १०-२७.

प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ।
अर्वाक्त्र्यब्दाद्धरेत् स्वामी परेण नृपतिर्हरेत् ॥[1] इति ॥

गौतमोऽपि 'प्रणष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुः । विख्याप्य राज्ञा संवत्सरं रक्ष्यम् । ऊर्ध्वमधिगन्तुश्चतुर्थं राज्ञश्शेषश्च' इति ॥ १६ ॥

सर्वापराधेषु—

अवध्यो वै ब्राह्मणस्सर्वापराधेषु ॥ १७ ॥

वैशब्दः श्रुतिप्रसूचनार्थः । तथा च गौतमः—'षड्भिः परिहार्यो राज्ञाऽवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्चेति' इति । सर्वापराधेषु ब्रह्महत्यादिष्वपि ॥ १७ ॥

तत्र तर्हि किं कर्तव्यमित्याह—

ब्रह्महत्यागुरुतल्पगमनस्वर्णस्तेयसुरापानेषु कुसिन्धभगसृगालसुराध्वजांस्तप्तेनायसा ललाटेऽङ्कयित्वा विषयान्निर्धमनम् ॥

निर्धमनं कृत्वा प्रवासयेदिति शेषः । कुसिन्धः कबन्धः । भगः स्त्रीव्यञ्जनम् । सृगालो गोमायुः । स च शुनोऽपि प्रदर्शनार्थः । सुराध्वजः सुराभाण्डः । आह च मनुः—

स्तेनस्य श्वापदः कार्यः सुरापाने सुराध्वजः ।
गुरुतल्पे भगः कार्यो ब्रह्महत्ये शिराः पुमान् ॥[3] इति ॥

---

[1] मनु ८-३०   [2] गौ १०-३८   [3] गौ ८ ११

कबन्धाकृतिकेन कृष्णायसेन ललाटेऽङ्कयति । उत्तरीयवाससां चौर्ये विषयान्तरं निर्वासयेत् । स्वयमेव प्रायश्चित्तं करोति । तस्यायं दण्डः ॥ १८ ॥

क्षत्रियादीनां ब्राह्मणवधे वधस्सर्वस्वहरणं च ॥ १९ ॥

सर्वत्र निकृष्टजातीयस्योत्कृष्टजातीयवधे वधस्सर्वस्वहरणं च दण्डो द्रष्टव्यः ॥ १९ ॥

तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपान् दण्डान् प्रकल्पयेत् ॥ २० ॥ १८ ॥

तुल्यापकृष्टता चात्र जातितोऽभिजनधनवर्तनादिभिः । यथाबलं यथास्वशक्ति । तथा स्मृत्यन्तरम्—

देशकालवयश्शक्तिबलं सञ्चिन्त्य कर्मणि ।
तथाऽपराधं चाऽवेक्ष्य दण्डं दण्ड्येषु पातयेत् ॥ इति॥

क्षत्रियवधे गोसहस्रमृषभैकाधिकं राज्ञ उत्सृजेद्वैरनिर्यातनार्थम्॥ २१ ॥

दण्डः प्रायश्चित्तं नैतत्। यथा "[1]श्वभिः खादयेद्राजा निहीनवर्णगमने स्त्रियं प्रकाशम्" इति । राज्ञे पापनिमित्तं स्यात् । एवं च वैरनिर्यातनमपि कृतं भवति । वैरस्य पापस्य निर्यातनमपयान-

[1] गौ. ५. २३-२४.

नं नाश इत्यनर्थान्तरम् । यद्वा—स्वजातीयनिमित्तकोपप्रशमनम् । यथा—

द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोपि वा ।
स तस्योत्पादयेत्तुष्टिम् ॥'[1] इति ॥ २१ ॥

**शतं वैश्ये दश शूद्र ऋषभश्चाधिकः ॥२२॥**

सर्वत्र प्रायश्चित्तार्थं इति शेषः । एषोपि राज्ञे त्यागः ॥२२॥

**शूद्रवधेन स्त्रीवधो गोवधश्च व्याख्यातः ॥**

ऋषभैकादशगोत्सर्जनमत्र दृश्यते । इह चान्द्रायणस्याभ्युपचयो द्रष्टव्यः । आह च मनुः—

स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् ।
उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत् ॥

इति प्रस्तुत्य

एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः ।
अवकीर्णिवर्ज्यं शुद्ध्यर्थं चान्द्रायणमथापि वा ॥'[2] इति ॥

**अन्यत्रात्रेय्या वधात् ॥ २४ ॥**

तस्या वधे वक्ष्यति—'आत्रेयीवधः क्षत्रियवधेन व्याख्यातः' इति । अनात्रेयीस्त्रीवधे ऋषभैकादशदानमित्यर्थः ॥ २४ ॥

**धेन्वनडुहोश्च ॥ २५ ॥**

---

[1] मनु. ८-२८८. [2] मनु. ११-६७...११८.

वध इति शेषः । धेनुः पयस्विनी अनड्वानारोपितभारवहनक्षमः पुङ्गवः । अयमपि ऋषभैकादशगोदानातिदेशः ॥ २५ ॥

## धेन्वनडुहोरन्ते चान्द्रायणं चरेत् ॥२६॥

ऋषभैकादशगोदानस्यान्ते । अत्र दानतपसोस्समुच्चयः । अत एतत् ज्ञापितं भवति—धेन्वनडुहावत्र विशिष्टपुरुषसम्बन्धिनावग्निहोत्रादिविशिष्टोपयोगार्थौ । दुर्भिक्षादिषु न बहुदोग्धृत्वेन बहुवोढृत्वेन प्रजासंरक्षणार्थौ चेति । अन्यथा शूद्रहत्यातः तस्य प्रायश्चित्तं गुरुतरं न स्यादिति ॥ २६ ॥

## आत्रेय्या वधः क्षत्रियवधेन व्याख्यातः ॥

'रजस्वलामृतुस्नातामात्रेयीमाहुरत्र ह्येष दाम्पत्यं भवति'[1] इति। गोवध इत्यन्ये । क्षत्रियवधदण्डप्रायश्चित्तयोरुभयोरयमतिदेशः ॥

## हंसभासबर्हिणचक्रवाकप्रचलाककाकोलूककण्टकडिड्डिकमण्डूकडेरिकाश्वबभ्रुनकुलादीनांवधे शूद्रवत् ॥ २८ ॥

शूद्रं हत्वा यत्प्रायश्चित्तं तत्प्रायश्चित्तमेतेषां वधे भवति । सर्वत्र चातिदेशो मानार्धानना । इह मण्डूकग्रहणं मार्जारादीनामपि प्रदर्शनार्थम् । आह च मनुः—

मार्जारनकुलौ हत्वा चापं मण्डूकमेव च ।
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥[2] इति ॥

[1] बा. ध. २-२५.  [2] मनु. ११-१३२.

प्रचलाको लिम्बः । डिड्डिकः चुचुन्दरी । आदिग्रहणात् क्रुञ्चक्रौञ्चादेरपि ग्रहणम् । 'क्रुञ्चक्रौञ्चौ शूद्रहत्यावत् प्रायश्चित्तम्' इति स्मृत्यन्तरात् । एवं तावत् 'शास्ता राजा दुरात्मनाम्' इति मत्वा प्रायश्चित्तान्यपि राज्ञा कारयितव्यानीत्यर्थः । तानि दिङ्मात्रेण दर्शितानि ॥ २८ ॥

साम्प्रतं पापप्रसङ्गात् कूटसाक्षिनिवृत्त्यर्थं साक्षिप्रकरणमारभ्यते । तत्र प्रथमं मृषावदनं परिहरन् वदति—

**लोकसङ्ग्रहणार्थं यथादृष्टं यथाश्रुतं साक्षी ब्रूयात् ॥ २९ ॥**

द्वयोः परस्परविप्रतिपन्नोऽज्ञातमर्थं साक्षिभिर्भावयेत् । महाजनपरिग्रहार्थं तत्र साक्षी यथादृष्टं निरपेक्षप्रमाणेनावगतं यथाश्रुतमाप्तवाक्यादवगतं तथैव ब्रूयात् ॥ २९ ॥

**पादो धर्मस्य कर्तारं पादो गच्छति साक्षिणम् । पादस्सभासदस्सर्वान् पादो राजानमृच्छति ॥ राजा भवत्यनेनाश्च मुच्यन्ते च सभासदः । एनो गच्छति कर्तारं यत्र निन्द्यो ह निन्द्यते ॥ ३०॥**

राज्ञा सम्यक्परीक्षणा कर्तव्येति श्लोकद्वयस्य तात्पर्यार्थः । इतरथा अधर्मस्य कृतस्य पाद एव तत्कर्तारं गच्छेत् । इतरे

त्रयः पादाः साक्षिसभासद्राजगा इत्युक्तम् । सम्यक्परीक्ष्य दुष्टनिग्रहः परीक्षाकारिणां पापप्रमोचनार्थं इति द्वितीयश्लोकार्थः ॥३०॥

तत्र परीक्षावेळायां पृथक् श्लोकसंचयः--

साक्षिणं त्वेवमुद्दिष्टं यत्नात्पृच्छेद्विचक्षणः ॥

अधुना निर्दिष्टान् साक्षिण एवं पृच्छेदिति पदान्वयः ॥३१॥

कथं पृच्छेत्—

यां रात्रिमजनिष्ठास्त्वं यां च रात्रिं मरिष्यसि । एतयोरन्तरा यत्ते सुकृतं सुकृतं भवेत् ॥ तत्सर्वं राजगामि स्यादनृतं ब्रुवतस्तव ॥ ३२ ॥

सुकृतं धर्मः । स च सुष्ठु कृतो यथाविध्यनुष्ठितः । यमनृतेन पराजयसि तद्गामी त्वदीयो धर्म इति याज्ञवल्क्योभिप्रैति—

सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वं तस्य जानीहि पराजयसि यं मृषा ॥[1]

इत्यवदत् ॥ ३२ ॥

किञ्च—

त्रीनेव च पितॄन् हन्ति त्रीनेव च पितामहान् ॥ ३३ ॥

---

[1] या. स्मृ. २-७५.

अनृतवदनमात्रे एष दोषः ॥ ३३ ॥

साक्ष्यनृते तु—

सप्त जातानजातांश्च साक्षी साक्ष्यं मृषा वदन् ॥ ३४ ॥

आत्मनः पूर्वापरान् सप्तसप्त हन्तीत्यर्थः । अधर्मभक्षणान्नित्तानां आत्मीयवंश्यहननोपाये वैराग्यं भवतीत्येवं सान्त्वनम् ॥ ३४ ॥

अथेदानीं विमतिपत्तिविषयभूतदृष्टविशेषापेक्षयाऽनृतवदने दोषमाह—

हिरण्यार्थेऽनृते हन्ति त्रीनेव च पितामहान् । पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ॥ शतमश्वानृते हन्ति सहस्रं पुरुषानृते । सर्वं भूम्यनृते हन्ति साक्षी साक्ष्यं मृषा वदन् ॥ ३५ ॥

अत्र हिरण्यशब्दो रजतादिवचनः ।

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्[1] ॥

इति सुवर्णविषये मानवदर्शनात् ॥ ३५ ॥

अथ साक्षिलक्षणमाह—

चत्वारो वर्णाः पुत्रिणः साक्षिणस्स्युरन्यत्र

[1] मनु. ८-९९.

श्रोत्रियराजन्यप्रव्रजितमानुष्यहीनेभ्यः ॥ ३६ ॥

मानुष्यहीनो बुद्धिहीनः । एते श्रोत्रियराजन्यप्रव्रजिताः वचनादसाक्षिणः । बुद्धिहीनस्तु दृष्टदोषात् । तथा च नारदः—

वचनाद्दोषतो भेदाः स्वयमुक्तिर्मृतान्तरः ।
श्रोत्रियः....वचनात्तु न स्युर्दोषप्रदर्शनात् ॥[1] इत्यादि॥३६॥

साक्षिद्वैधे सति राज्ञा तत्पुरुषैश्च किं कर्तव्यमित्याह—

स्मृतौ प्रधानतः प्रतिपत्तिः ॥ ३७ ॥

प्राधान्यं तपोनिर्दिष्टविद्यादिभिस्तद्वचनात् प्रतिपत्तिः निश्चयः। कार्यं इत्यध्याहारः । किमुक्तं भवति—

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ॥[2]

इत्येतदुक्तं भवति ॥ ३७ ॥

अतोऽन्यथा कर्तपत्यम् ॥ ३८ ॥

उत्कोचाद्युपायान्तरेण निर्णये सति कर्तपत्यं नाम दोषो भवति । कर्तं नरकः तस्मिन् निपातः कर्तपत्यम् ॥ ३८ ॥

तत्र च प्रायश्चित्तमाह—

द्वादशरात्रं जुहुयादिति ॥ ३९ ॥ १९ ॥

[1] ना. स्मृ. प्रथमव्यवहारे. १५७. [2] या स्मृ. २-७८.

घृतमिति शेषस्स्यात् । तावदाहवनीय एवाय होमः राज्ञो राजपुरुषाणां च । कूश्माण्डानि 'यद्देवा देवहेळनम्'[1] इत्यारभ्य ण्यत्यपाल[?]प्रसिद्धानि । प्रतिमन्त्रं च होमभेदः । प्रत्यहं होमावृत्तिरिति केचित् । अपरे द्वादशरात्रस्य सकृदेवात्राहुः ॥ ३९ ॥

इति बोधायनधर्मसूत्रविवरणे गोविन्दस्वामिकृते
प्रथमप्रश्ने दशमोऽध्यायः

---

'साक्षिणः पुत्रिणः' इत्युक्तम् । केनोपायेन पुत्रिणो भवन्तीत्येतत्प्रसङ्गेन विवाहानामवतारः —

अष्टौ विवाहाः ॥ १ ॥

उच्यन्त इति शेषः । नियमार्थमदृष्टार्थं च । ततश्च वक्ष्यमाणब्राह्मादिनियमधर्मलङ्घननिमित्तवर्णसङ्करो भवतीत्येतदर्थाम्नानं भवतीति ॥ १ ॥

तत्राह—

श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने कन्यादानं ब्राह्मः ॥ २ ॥

अयमाद्यो धर्मविवाहः । श्रुतं वेदार्थज्ञानं शीलं सर्वसहिष्णुता । ब्रह्मचारी उपकुर्वाणोऽस्कन्नरेताश्च । कन्या असन्नयोनिः । आह च मनुः —

आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम् ।
आहूय दानं कन्यायाः ब्राह्मो धर्मः प्रकीर्तितः[2] ॥ इति ॥

---

[1] तै आ. २-३. [2] मनु. ३-२७.

**आच्छायालङ्कृत्यैषा सहधर्मश्चर्यतामिति प्राजापत्यः ॥ ३ ॥**

आच्छादनालङ्करणे कन्याया एव । वरस्याप्येके । 'एषा' इत्यादिर्मन्त्रः । एषा ते भार्या । स्वकीयो द्रव्यसाध्यो धर्मोऽनया सह चर्यतामिति मन्त्रार्थः । एष प्राजापत्यो नाम द्वितीयः ॥

तृतीयस्तु—

**पूर्वां लाजाहुतिं हुत्वा गोमिथुनं कन्यावते दत्वा ग्रहणमार्षः ॥ ४ ॥**

वैवाहिकीनां लाजाहुतीनां प्रथमाहुत्यनन्तरं कन्यास्वामिने गोमिथुनं वरं प्रदाय तस्या एव पुनर्ग्रहणमार्षो नाम विवाहः ॥ ४ ॥

चतुर्थः पुनः—

**दक्षिणासु नीयमानास्वन्तर्वेदि ऋत्विजे स दैवः ॥ ५ ॥**

ऋत्विग्वरणवेलायामेव कंचिद्वरसम्पद्भिर्युक्तमृत्विक्त्वेन वृत्वा दक्षिणाकाले तदीयभागेन सह कन्यां तस्मै दद्यात् । स च तां प्रतिगृह्य समाप्ते यज्ञे 'प्रजापतिस्स्त्रियां यशः'[1] इति षड्भिर्मन्त्रैः पुनः प्रतिगृह्य शुभे नक्षत्रे विवाहं कुर्यात् । स दैवो नाम ॥ ५ ॥

**सकामेन सकामायां मिथस्संयोगो गान्धर्वः ॥ ६ ॥**

---

[1] तै. ब्रा. २-४-६

सयोगस्समवाय । विवाहहोमस्तु यथाविध्येव । एवलक्षणको गान्धर्वो नाम पञ्चम ॥ ६ ॥

षष्ठस्तु—

**धनेनोपतोष्यासुरः ॥ ७ ॥**

कन्यावन्तमुपतोष्य । यथाविध्येव होम ॥ ७ ॥

सप्तम उत्तर —

**प्रसह्य हरणाद्राक्षसः ॥ ८ ॥**

अत्रापि तथैव विवाह । यथा तरुणीहरण तथैव राक्षस ॥ ८ ॥

तथाऽष्टम —

**सुप्तां मत्तां प्रमत्तां वोपयच्छेदिति पैशाचः॥**

मदनीयेन द्रव्येण मत्ताम् । प्रमत्ता भयादिना प्रणष्टचेता । उपयमन बाह्यमैथुनम् । एव स्वाह च मनु —

सुप्तां मत्ता प्रमत्ता वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहाना पैशाचः प्रथितोऽष्टमः[1] ॥ इति॥

**तेषां चत्वारः पूर्वे ब्राह्मणस्य तेष्वपि पूर्वः-पूर्वश्श्रेयान् ॥ १० ॥**

ब्राह्मप्राजापत्यार्षदैवाश्चत्वार प्रशस्ता । तत्रापि पूर्वपूर्वविवाह उत्तरोत्तरात् वेदितव्य ॥ १० ॥

---

[1] मनु ३-३४.

उत्तरेषामुत्तरोत्तरः पापीयान् ॥ ११ ॥

उत्तरेषां वर्णानामुत्तरे गान्धर्वासुरराक्षसपैशाचाश्चत्वारो विवाहाः । अत्रापि पूर्वपूर्वश्श्रेयानिति वक्तव्ये उत्तरोत्तरः पापीयानिति वचनं पुनरन्त्यस्यात्यन्तपापिष्ठत्वख्यापनार्थम् । उदाहृतं चात्र मानवम्—'स पापिष्ठो विवाहानाम्'[1] इति ॥ ११ ॥

अत्रापि पञ्चसप्तमौ क्षत्रधर्मानुगतौ तत्प्रत्ययत्वात् क्षत्रस्येति ॥ १२ ॥

तत्प्रत्ययत्वं तत्प्रधानत्वम् । बलं हि राज्ञां प्रधानम् । तथा चोक्तम्—'क्षत्रस्य बलान्वितम्' इति । आसुरेऽपि धनं बलहेतुतयाऽभिमतम् ॥ १२ ॥

पञ्चमाष्टमौ वैश्यशूद्राणाम् ॥ १३ ॥

पञ्चमो गान्धर्वः स वैश्यानां भवति । अष्टमः पैशाचः स शूद्राणाम् ॥ १३ ॥

ईदृश्याः व्यवस्थायाः को हेतुरिति बुभुत्सुराह—

अयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति ॥

अयन्त्रितं अनियतं कलत्रं भार्या येषां ते भवन्ति अयन्त्रितकलत्राः । दारेष्वत्यन्तनियमस्तेषां न भवतीत्यर्थः ॥ १४ ॥

तद्वा कथमिति चेत्—

कर्षणशुश्रूषाऽधिकृतत्वात् ॥ १५ ॥

---

[1] मनु. ३-२४.

कर्षण वाणिज्यादीनामप्युपलक्षणार्थम् । निकृष्टकर्माधिकृतत्वात्तयोर्विवाहा अपि तादृशा एवेत्यभिप्रायः ॥ १९ ॥

गान्धर्वमप्येके प्रशंसन्ति सर्वेषां स्नेहानुगतत्वात् ॥ १६ ॥ २० ॥

एतदपि गान्धर्वस्य लक्षणम्—'सकामेन सकामायाम्' इति । तत्र स्नेहो मनश्चक्षुषो निबन्धः । तदनुगतं विहितविवाहकर्म । तथा चापस्तम्बः—'यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेत'[1] इति ॥ १६ ॥

यथा युक्तो विवाहस्तथा प्रजा भवतीति विज्ञायते ॥ १७ ॥

प्रशस्ते विवाहे यत्न आस्थेय इत्यभिप्रायः । तथा च सति तत्रोत्पन्ना पुत्रा अपि साधवो भविष्यन्ति ॥ १७ ॥

अथाप्युदाहरन्ति—

साधवस्त्रिपुरुषमार्षाद्दश दैवाद्दश प्राजापत्याद्दश पूर्वान् दशापरानात्मानं च ब्राह्मीपुत्र इति विज्ञायते ॥ १८ ॥

अतोऽस्मिन्नर्थे ब्राह्मणमपि भवतीत्येव ॥ १८ ॥

---

[1] आप. गृ ३-११.

तदाह—

वेदस्वीकरणशक्तिरप्येवंविधानामेव पुत्रा-
णां भवतीति ॥ १९ ॥

ऋज्वेतत् ॥ १९ ॥

आसुरादिविवाहो ब्राह्मणानां निन्द्य इत्याह—

क्रीता द्रव्येण या नारी सा न पत्नी विधीयते।
सा न दैवे न सा पित्र्ये दासीं तां
कश्यपोऽब्रवीत् ॥ २० ॥

क्रीताया वेदोक्तकर्मण्यधिकारो नास्तीत्यर्थः ॥ २० ॥

कन्याविक्रयोऽपि न कर्तव्य इत्याह—

शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमो-
हिताः। आत्मविक्रयिणः पापाः महा-
किल्बिषकारकाः ॥ पतन्ति नरके घोरे
घ्नन्ति चासप्तमं कुलम्। गमनागमनं
चैव सर्वं शुल्को विधीयते ॥ २१ ॥

कन्याविक्रयी कुत्सितजन्मभाग्भवति अधःपाती च तस्मात्क-
न्याविक्रयो न कर्तव्य इत्यर्थः ॥ २१ ॥

ब्राह्मादिविवाहोत्पन्नानां पुत्राणां वेदस्वीकरणे शक्तिरित्युक्तम्।
तत्राविघ्नेन वेदस्वीकरणायानध्ययनप्रकरणमारभ्यते—

पौर्णमास्यष्टकाऽमावास्याऽग्न्युत्पातभूमिकम्पश्मशानदेशपतिश्रोत्रियैकतीर्थप्रयाणेष्वहोरात्रमनध्यायः ॥ २२ ॥

**पौर्णमासी** तिथिः यस्यां चन्द्रमाः पूर्ण उत्सर्पेत् । अष्टका माध्याः पौर्णमास्या उपरिष्टादष्टमी । अमावास्या अमा सह सूर्येण यस्यां तिथौ चन्द्रमा वसति सा अमावास्या । अग्न्युत्पातः यस्मिन् ग्रामे दाहस्तस्मिन् ग्रामे । भूमिकम्पो भुवश्चलनम् । श्मशानं शवशयनम्, शरीरस्य दहनभूमिः निक्षेपभूमिर्वा । गमनदिवसोपि प्रयाणम् । तच्च देशपत्यादिभिः प्रत्येकमभिसम्बध्यते । देशपतेः राज्ञः राष्ट्रे प्रवासे मरणादिवसेऽपि । **एकतीर्थः** एकस्तीर्थः गुरुः ययोरिति विग्रहः । एतेष्वहोरात्रं नाधीयीतेति ॥ २२ ॥

वाते पूतिगन्धे नीहारे च नृत्तगीतवादित्ररुदितसामशब्देषु तावन्तं कालम्॥ २३

**वातो** वायुः दिवा चेत्पांसुगन्धहरः । नक्तं चेत् वर्णश्रावि । पूतिगन्धो दुर्गन्धः । नीहारोऽभ्रं हिमद्रवणं तच्च हिमानी। तेष्वनध्यायः । वादित्रं वीणावादनम् । यावदेव न निवर्तते तावदनध्यायः ॥ २३ ॥

स्तनयित्नुवर्षविद्युत्सन्निपाते त्र्यहमनध्यायोऽन्यत्र वार्षिकात् ॥ २४ ॥

स्तनयित्नुर्मेघगर्जितम् । विद्युत्तडित् । अप्रमृष्टमन्यत् ॥ २४॥

वर्षाकालेऽपि वर्षवर्जमहोरात्रयोश्च तत्कालम् ॥ २५ ॥

वर्षाकालेऽपि विद्युत्स्तनयित्नुसन्निपातो भवति चेदाऽस्तमयादनध्यायः । रात्रौ चेदोपसः ॥ २५ ॥

पित्र्यप्रतिग्रहभोजनयोश्च तद्दिवसशेषः ॥

पितरो देवता यस्य कर्मणस्तत्पित्र्यं तस्मिन् आमश्राद्धार्थं वा भोजनार्थं वा निमन्त्रणप्रभृत्यनध्यायः ॥ २६ ॥

भोजनेष्वाजरणम् ॥ २७ ॥

अनध्याय इत्येव । भोजनपक्षे निमन्त्रणप्रभृत्याजरणमित्यर्थः ॥ २७ ॥

कथं पुनरभुक्तवत्येव भोजनमभ्युपगम्य आमन्त्रणरूपे पाणौ चामश्राद्धेऽनध्याय इत्याशङ्कयाह—

पाणिमुखो हि ब्राह्मणः ॥ २८ ॥

आमश्राद्धस्याप्येतदेव लिङ्गम् ॥ २८ ॥

एतदेव द्रढयितुमाह—

अथाप्युदाहरन्ति—

भुक्तं प्रतिगृहीतं च निर्विशेषमिति श्रुतिः ॥

अनध्याय एवायमविशेष । प्रायश्चित्तं तु प्रतिगृहीतेऽर्धमेव । ‘आमश्रेदर्धमेव’ इति स्मरणात् । भोजनप्रायश्चित्तं च स्मृत्यन्तरादवगन्तव्यम्—

चान्द्रायणं नवश्राद्धे पराको मासिके तथा ।
पक्षत्रये तु कृच्छ्रं स्यात् षाण्मासे कृच्छ्रमेव तु ॥
सपिण्डे तु त्रिरात्रं स्यात् एकरात्रस्तथाऽब्दिके ॥
दशकृत्वः पिबेदापो गायत्र्या चाभिमन्त्रिताः ।
मासि श्राद्धे च ता एव नित्यश्राद्धे जपेच्च ताम् ॥ इति ॥

## पितर्युपरते त्रिरात्रम् ॥ ३० ॥

उपरते मृते । अनध्याय इत्यनुवर्तते । असमावृत्तस्यायम् । समावृत्तस्य त्वशुचिभावादेवानध्यायः प्राप्तः । अत्रोपाध्यायमेव वेदप्रदानात् पितेत्याह । साक्षात्पितरि द्वादशाहविधानात् । ‘मातरि पितर्याचार्य इति द्वादशाहाः’[1] इति ॥ ३० ॥

कथमयमपि पितेति चेत्तदाह—

इयम् ह वै सुश्रवसोऽनूचानस्य रेतो ब्राह्मणस्योर्ध्वं नाभेरधस्तादन्यत् स यदूर्ध्वं नाभेस्तेन हैतत् प्रजायते यद्ब्राह्मणानुपनयति यदध्यापयति यद्याजयति यत्साधु करोति सर्वाऽस्यैषा प्रजा भवति। अथ यदवाचीनं नाभेस्तेन हास्यौरसी

[1] आप ध १ १०-४

**प्रजा भवति तस्माच्छ्रोत्रियमनूचान-मप्रजोऽसीति न वदन्ति ॥ ३१ ॥**

उह वै इति निपातद्वयं त्रयं वा शब्दशोभार्थम् । सुश्रवस इति । शृणोतेरौणादिकोऽसुन् प्रत्ययः । श्रमेण श्रुतवत इत्यर्थः । अनूचानो वेदतदर्थाङ्गाध्यायी । ईदृशस्य ब्राह्मणस्य द्वयं रेतः प्रजननहेतुर्विद्यते । तत्र ऊर्ध्वं नाभेरेकम् । स च ब्राह्मणवायुः नाभेरुत्थितो वक्तृविवरादिविधानां शब्दानामभिव्यञ्जकः । अवाचीनोऽन्यत् । स च नाभेरवाचीनः अवाग्गुरतन्नः सर्गशुक्लहेतुः वायुः । तत्र ऊर्ध्वाग्रेण रेतसा ब्रतस्थः प्रजा उत्पादयति उपनयनाध्यापनयाजनसाधुकृताभिः । अस्यैव हीत्थं प्रजा उत्पादयितुं शक्तिरस्ति । एतद्धि प्रजानां श्रेष्ठतरं जन्म शरीरान्तरेऽप्यनुग्राहकत्वात् । तथा चापस्तम्बः—'तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः'[1] इति । पशुवदेवेत्यभिप्रायः । उक्तं च—'कामं मातापितरौ चैनमुत्पादयतो मिथः' इति । अथ यदवाचीनं नाभेस्तेन ह्यस्यौरसी प्रजा भवति । यस्मादेवंविधस्य पुरुषस्य व्रतस्थ. प्रजास्यमन्नातिः केवलं श्रोत्रियस्याध्यापननिमित्ताऽस्ति तस्मादौरस्याभावेऽप्यमुमप्रजोऽसीति विद्वांसो न वदन्ति । तस्माद्वेदप्रदानपितरि मृते त्र्यहमनध्यायो युक्तः ॥३१॥

यस्मादेवम्—

**तस्माद्द्विनामा द्विमुखो विप्रो द्विरेता द्विजन्मा चेति ॥ ३२ ॥**

---

[1]आप ध. १-१-१८.

द्वे नामनी यस्य स द्विनामा 'तस्माद्विनामा ब्राह्मणोऽर्धुकः'* इति श्रुतिः । अर्धुकस्समृद्धः । द्वे चास्य मुखे पाणिरास्यमिति द्विमुखः । द्वे रेतसी शुक्रमेकं, द्वितीयं ब्रह्म । जन्मनी अपि द्वे मातुरधे ब्रह्मणश्च ॥ ३२ ॥

अथ प्रकृतमनुसरामः—

## शूद्रापपात्रश्रवणसंदर्शनयोश्च तावन्तं कालम् ॥ ३३ ॥

सशुचिनयोरप्यपपात्रनिषेधः । ततश्च कुर्यादतिरोहिते अपपात्रे अनध्यायम् ॥ ३३ ॥

## नक्तं शिवाविरावे नाधीयीत स्वप्नान्तम् ॥

रात्रौ शिवाविरावे वृद्धगोमायुरुते । न च विशिष्टं, ततः तस्मिन् सति सुप्त्वा बुद्धाऽध्येतव्यम् ॥ ३४ ॥

## अहोरात्रयोस्सन्ध्ययोः पर्वसु च नाधीयीत॥

तत्रैका सन्ध्याऽरुणप्रभानमारभ्य आसूर्योदयदर्शनात् । अपराऽस्तमयादारभ्य आनक्षत्रोदयात् । पर्वस्विति बहुवचनात् बह्वचस्तिथयो गृह्यन्ते । एका तावत्पर्वद्वयमध्यगता अष्टमी । उभयोरपि पर्वणोरभितस्तिथिद्वयं चतुर्दशी प्रतिपच्चेति । अतोऽष्टमीद्वयं चतुर्दशीद्वयं प्रतिपद्द्वयं च गृहीतं भवति । नवाब्दाद्यायां तिथावादित्योऽस्तमेति माऽभिमेना । तथा हि—

* तै. ब्रा. ६-१-१

यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
सा तिथिर्मुनिभिः प्रोक्ता दानाध्ययनकर्मसु ॥ इति ॥

अन्यथा तावन्तं कालं सासा तिथिरित्यर्थस्स्यात् ॥ ३९ ॥

पर्वप्रसङ्गादित्थमन्यः पर्वणि नियम उच्यते—

न मांसमश्नीयान्न स्त्रियमुपेयात् ॥ ३६ ॥

एतदतिक्रमेऽप्यध्ययनविघ्न एव भवतीति कल्प्यते ॥ ३६ ॥

श्रुतिरेपाऽत्यभिमानिनी विज्ञायत इति गमयति—

पर्वसु हि रक्षःपिशाचा व्यभिचारवन्तो भवन्तीति विज्ञायते ॥ ३७ ॥

पर्वसु रक्षांसि पिशाचाश्च व्यभिचारवन्तः । वि वैविध्ये, अभीत्याभिमुख्ये, चरतिः गमने भक्षणे च वर्तते । पर्वसु विविधं गच्छन्ति विविधं भक्षयन्ति च । पर्वसु अभिगमनमांसाशनवन्तीत्यर्थः । तद्यदि मनुष्या अपि कुर्युः तद्रक्ष पिशाचा जायन्ते । अतोऽस्मादेव भयान्न कर्तव्यम् ॥ ३७ ॥

प्रकरणार्थमेवानुसरति—

अन्येषु चाद्भुतोत्पातेष्वहोरात्रमनध्यायोऽन्यत्र मानसात् ॥ ३८ ॥

अद्भुतमाश्चर्यम् । यथा वणिग्मज्जति । यथाऽम्भुनि प्रावाणः

ठवन्ते । जले चाम्न्युद्भवः कौ अपत्योद्भव इत्याद्युत्पातः । रार्थविपर्ययप्रदर्शनम् । यथा स्थावरस्य देशान्तरगमनप्रतिमारोदन-धिरस्रवणादि । यद्वा—षष्ठीतत्पुरुषोऽयमद्भुतोत्पात इति । अन्येषु ाद्भुतोत्पातेष्विति । एतेष्वहोरात्रमनध्यायोऽन्यत्र मानसात् अध्य-यनात् । मानसाध्ययनविशिष्ट एव सर्वानध्यायविशेषो द्रष्टव्यः । क्वचिन्मानसेऽपि निषेधदर्शनात् । यथा—

उदके मध्यरात्रे च विण्मूत्रे च विसर्जयन्।
उच्छिष्टश्राद्धभुक्चैव मनसाऽपि न चिन्तयेत् ॥ इति ॥

मानसेऽपि जननमरणयोरनध्यायः ॥

अपिशब्दाद्वाचिकेऽपि । जननमरणग्रहणं सर्वेषामात्माशुचिभावा-नामुपलक्षणम् । तथा च स्वाध्यायब्राह्मणम्—'तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः'* इति ॥ ३९ ॥

'शुचिनाऽधीयीत' इति यदुक्तं तद्वाचिकस्यैव मा विज्ञायीति मानसार्थं विनिन्दन्ति—

अथाप्युदाहरन्ति—

हन्त्यष्टमी ह्युपाध्यायं हन्ति शिष्यं चतुर्दशी। हन्ति पञ्चदशी विद्यां तस्मात्पर्वणि वर्जयेत् ॥ तस्मात्पर्वणि वर्जयेदिति ॥ ४० ॥ २१ ॥

* तै. आ. २-१५.

उपाध्यायहनने तदलाभकृतः विघ्नः लक्ष्यते । एवं शिष्यहननेनापि तदध्येत्रभावकृतः । विद्याहननेनापि पुरुषान्तरनैरपेक्ष्याभावो लक्ष्यते । अन्योऽप्यध्ययनविघ्नसद्भावो द्रष्टव्यः । अत्यन्तनिश्श्रेयसत्वादध्ययनस्य विघ्नसन्ततिरवश्यंभाविनी । सा च तद्वर्जनेनैव परिहरणीया । तथाचोक्तम्—'श्रेयांसि बहुविघ्नानि' इति ॥ ४० ॥

इति बोधायनीयधर्मसूत्रविवरणे गोविन्दस्वामिकृते
प्रथमप्रश्ने एकादशोऽध्यायः.
प्रथमप्रश्नस्समाप्तः



# अथ द्वितीयप्रश्नः.

ब्रह्महत्यादिषु दण्ड उक्तः 'अवध्यो वै ब्राह्मणस्सर्वापराधेषु' इत्येवमादिना—

## अथातः प्रायश्चित्तानि ॥ १ ॥

वक्ष्याम इति शेषः । विहिताकरणप्रतिषिद्धसेवानिमित्तदोषफलं यैः कर्मभिः नानुभुङ्क्ते तानि प्रायश्चित्तानि । तत्रापराधिनोऽनुतापिनो बलादानीतस्य दण्डप्रायश्चित्तयोस्समुच्चयः । स्वयमेवागत्य राज्ञे वेदयमानस्य दण्ड एव । यःपुनरनुतापेन प्रायश्चित्तमनुतिष्ठति तस्य तेनैव भवितव्यम् । एनोभूयस्त्वेव क्रमनियमे हेतुः ॥ १ ॥

इदमत्र प्रधानम्—

भ्रूणहा द्वादश समाः ॥ २ ॥

भ्रूणहा ब्रह्मघ्नः भ्रूणो यज्ञं बिभर्ति वा नयतीति तत्साधनवधकारी भ्रूणहा ब्रह्महेति यावत् । समाः संवत्सरान्वक्ष्यमाणव्रतं चरेत् ॥ २ ॥

तदाह—

कपाली खट्वाङ्गी गर्दभचर्मवासा अरण्यनिकेतनः श्मशाने ध्वजं शवशिरः कृत्वा कुटीं कारयेत्तामावसेत् सप्तागाराणि भैक्षं चरन् स्वकर्माचक्षाणस्तेन प्राणान्धारयेदलब्धोपवासः ॥ ३ ॥

खट्वाया अङ्गं पादादि तद्दण्डार्थं भवति । गर्दभचर्म वासो यस्य स तथोक्तः । अरण्यमस्य निकेतनं विहरणदेशः । चङ्क्रमणदेश इति यावत् । श्मशानं निरुक्तम् । तत्र कुटीं कारयेदिति सम्बन्धः । शवस्य शिरो ध्वजं चिह्नं कुर्यात् भिक्षाकाले । यं हत्वा एतच्चरति तस्य शिर इति । यस्य कस्यचिदित्यन्ये । तथा च सति शवग्रहणमकिंचित्करं स्यात् । स्वकर्माचक्षाणः ब्रह्महाऽहमस्मीति ब्रह्मघ्ने भिक्षां देहीति ब्रुवन् सप्त चरन्नपि यदि भिक्षां सप्तस्वगारेषु न लभेत तदोपवासः कार्यः । तामेव कुटीमधिवसेत् । एवं द्वादशसमाश्चरन् पूतो भवति ।

ब्राह्मणाधिकारमिदं प्रायश्चित्तम् । यतस्सुमन्तुराह—'ब्राह्मणो ब्राह्मणं हत्वा' इति ॥ ३ ॥

अधुना द्वादशवार्षिकस्य व्रतस्य प्रायश्चित्तान्तरमाह—

**अश्वमेधेन गोसवेनाग्निष्टुता वा यजेत ॥ ४**

आहिताग्नेरिष्टप्रथमसोमस्य एतयोश्चित्तसमाधानं कार्यम् । अश्वमेधस्तु राजयज्ञत्वात् 'राजा विजितसार्वभौमः' इत्येवंविशिष्टस्य राज्ञो भवति ॥ ४ ॥

**अश्वमेधावभृथे वाऽऽत्मानं प्लावयेत् ॥ ५ ॥**

अन्यस्याप्यश्वमेधावभृथे आत्मानं स्नापयेत् । एतानि प्रायश्चित्तानि हन्तृगुणापेक्षया हन्यमानगुणापेक्षया वा विकल्प्यन्ते ॥ ५ ॥

**अथाप्युदाहरन्ति—**

**अमत्या ब्राह्मणं हत्वा दुष्टो भवति धर्मतः । ऋषयो निष्कृतिं तस्य वदन्त्यमतिपूर्वके । मतिपूर्वं घ्नतस्तस्य निष्कृतिर्नोपलभ्यते ॥ ६ ॥**

'तस्माद्ब्राह्मणाय नापगुरेत न निहन्यात्'* इति ब्राह्मणं विज्ञाय हननमुच्यते । अमतिपूर्वक इत्यनेन च ब्राह्मणोऽयमिति निश्चितेऽपि प्रमादकृतं हननम् ॥

*तै. स. २-६-१०.

आह च मनुः—

कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते[1] ॥ इति ॥

यथा—

कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्[1] ॥ इति ॥ ६ ॥

अथ ब्राह्मणविषयहिंसायामेव प्राग्भाविषु व्यापारेषु प्रायश्चित्तमाह—

अपगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ॥ कृच्छ्रं चान्द्रायणं चैव लोहितस्य प्रवर्तने ॥ तस्मान्नैवापगुरेत न च कुर्वीत शोणितमिति ॥ ७ ॥

कथं पुनरवगम्यते ब्राह्मणापगोरणादिष्वेवैतानि प्रायश्चित्तानीति? उच्यते—निषेधस्तावद्ब्राह्मणविषय एव उपलभ्यते । 'तस्माद्ब्राह्मणाय नापगुरेत न निहन्यान्न लोहितं कुर्यात्'* इति । यत्र च निषेधः प्रायश्चित्तेनापि तत्रस्थेन भवितव्यम् । अपगूरणं नाम हिंसार्थमुद्यमः । अन्नस्पष्टमन्यत् ॥ ७ ॥

नव समा राजन्यस्य ॥ ८ ॥

वध इति शेषः । नवसंवत्सरान् राजन्यस्य वधे प्रकृतं ब्रह्मचर्यं चरेदिति ॥ ८ ॥

[1] मनु.११-९०, ४५. * तै. स. २-६-१०.

## तिस्रो वैश्यस्य ॥ ९ ॥

संवत्सरत्रयं प्राकृतं ब्रह्मचर्यचरणम् ॥ ९॥

## संवत्सरं शूद्रस्य स्त्रियाश्च ॥ १० ॥

शूद्रं हत्वा संवत्सरं प्रायश्चित्तमित्यनुवर्तते । चशब्दः क्षत्रियवैश्ययोरपि निर्गुणयोर्हनने एतदेव प्रायश्चित्तमिति दर्शयितुम् ॥ १० ॥

## ब्राह्मणवदात्रेय्याः ॥ ११ ॥

आत्रेयी आपन्नगर्भा । तथा वसिष्ठोपि स्मृते—'रजस्वलामृतुस्नातामात्रेयीमाहुः । अत्र ह्येष्य दम्पत्यं भवति'[1] इति । ब्राह्मणवदिति । स्वजातीयात्रेय्याः वधे स्वजातीयपुंवधवत् प्रायश्चित्तमित्यतिदेशः । निर्गुणविभागोपि द्रष्टव्यः । सगुणहननप्रायश्चित्तं सगुणहनन एवातिदिश्यते । एवमस्वामिकद्रव्यप्रकरणे[2] पुनर्ब्रह्महत्यादिषु यदभिहितं तेन सहैतेषां विकल्पव्यवस्थासमुच्चया अत्र हन्यमानगुणापेक्षया वेदितव्याः ॥ ११ ॥

## गुरुतल्पगस्तप्ते लोहशयने शयीत ॥ १२ ॥

तत्र तल्पशब्देन शयनवाचिना भार्या लक्ष्यते । तया यो मैथुनमाचरति स गुरुतल्पगः । मरणान्तिकं चैतत्प्रायश्चित्तम् । एवं कृतवतो ह्यस्मिन् लोके प्रत्यापत्तिर्न विद्यते । मरणात्तु पूतो भवति अतीतस्यौर्ध्वदैहिकमपि ज्ञातिभिरस्य कर्तव्यम् । अन्यत्रापि मरणान्तिके दण्डे प्रायश्चित्ते चैतद्द्रष्टव्यम् ॥ १२ ॥

[1] २०-३६.

[2] एवमतीतरात्र विदस प्रकरणे.

इदमन्यत्तस्यैव प्रायश्चित्तम्—

**सूर्मिं ज्वलन्तीं वा श्लिष्येत् ॥ १३ ॥**

सूर्मिशब्देनायस्मयप्रतिकृतिरुच्यते । इदमपि मरणान्तिकमेव ॥ १३

**लिङ्गं वा सवृषणं परिवास्याञ्जलावाधाय दक्षिणाप्रतीच्योर्दिशोरन्तरेण गच्छेदा निपतनात् ॥ १४ ॥**

रूपाण्यपरिहरन्नित्यभिप्रायः । परिवास्य छित्वा । एतस्प्रायश्चित्तत्रयं बुद्धिपूर्वविवक्षया । सम्भवापेक्षश्च विकल्पः ॥१४॥

**स्तेनः प्रकीर्य केशान् सैध्रकं मुसलमादाय स्कन्धेन राजानं गच्छेदनेन मां जहीति तेनैनं हन्यात् ॥ १५ ॥**

ब्राह्मणस्वर्णं हरति बलेन, वञ्चनया चौर्येण वा यो ब्राह्मणः स्तेन इति गीयते । तदेतत्प्रकीर्य केशानित्यादि । सैध्रको दृढदारुनिर्मितः । सैध्रकं मुसलं स्कन्धेनाधाय राजानं गच्छेदिति सम्बन्धः ॥ १५ ॥

स्तेनशासनमपि राज्ञो वध इत्येतत्प्रदर्शयितुं तदशासने दोषमाह—

अथाप्युदाहरन्ति—

**स्कन्धेनाधाय मुसलं स्तेनो राजानमन्वि-**

यात् । अनेन शाधि मां राजन् क्षत्त्रधर्ममनुस्मरन् ॥ शासने वा विसर्गे वा स्तेनो मुच्येत किल्बिषात् । अशासनात्तु तद्राजा स्तेनादाप्नोति किल्बिषमिति ॥ १६ ॥

शासनं वधः । विसर्गो मोक्षः । किल्बिषं पापम् ॥ १६ ॥

सुरां पीत्वोष्णया कायं दहेत् ॥ १७ ॥

यज्जातीयस्य या सुरा प्रतिषिद्धा तयैवोष्णया अग्निवर्णया पीतया कायं दहेत् । ब्राह्मणस्य सर्वा प्रतिषिद्धा । अत एव हि सर्वां सुरां समतयैवैकत्वेन निदर्शयति—

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्* ॥ इति ॥

मरणान्तिकमेतन्मतिपूर्वके ॥ १७ ॥

अमत्या पाने कृच्छ्राब्दपादं चरेत्पुनरुपनयनं च ॥ १८ ॥

कृच्छ्राब्दपादः संवत्सरप्राजापत्यचतुर्भागः । ब्रह्महत्यादिपूर्वैः प्रायश्चित्तैः ब्राह्मण एवाधिक्रियते नान्यः । कुत एतत्? ब्रह्महत्यादिभिः पतति य तद्वत् । कथमिति चेत् । पञ्चाग्निविद्यायां दर्शनात् । तत्र ह्युक्तं 'यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति' इति प्रक्रम्य 'तदेष श्लोकः—स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्त-

*मनु, ११-९१.

ल्पमावसन् ब्रह्महा च । एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति ॥ अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन् पाप्मना लिप्यते[1] इत्यादि ॥

आह च मनुः—

अतोऽन्यतममास्थाय विधिं विप्रस्समाहितः ।
ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया ॥[2] इति ॥

तथा सुरायामपि—

यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः ॥[2] इति ॥

तथा—

सुवर्णस्तेयकृद्विप्रो राजानम् ॥[2] इति ॥

एवमन्यान्यपि स्मृतिलिङ्गानि 'ब्राह्मणो ब्राह्मणं घातयित्वा' इत्यादीनि द्रष्टव्यानि ॥ १८ ॥

अथ पुनरुपनयने विशेषमाह—

## वपनव्रतनियमलोपश्च पूर्वानुष्ठितत्वात्॥१९

व्रतं सावित्रव्रतम् । नियमो भिक्षाचरणम् । चशब्दात् मेखलादण्डधारणमपि गृह्यते । तत्र हेतु—पूर्वानुष्ठितत्वात् कृतस्य करणासम्भवादित्यर्थः ॥ १९ ॥

## अथाप्युदाहरन्ति—

---

[1] छा. उ. ५-१०.

[2] मनु. ११-८७, ९६, १००.

**अमत्या वारुणीं पीत्वा प्राश्य मूत्रपुरीषयोः। ब्राह्मणः क्षत्रियो वैश्यः पुनस्संस्कारमर्हति ॥ २० ॥**

मूत्रपुरीषयोरिति द्वितीयार्थे षष्ठी 'सुपां सुपो भवन्ति' इति । अयं पुनस्संस्कारश्चान्द्रायणसहितो द्रष्टव्यः । विड्वराह[1]श्लोकदर्शनात् ॥ २० ॥

**सुराधाने तु यो भाण्डे अपः पर्युषिताः पिबेत् । शङ्खपुष्पीविपक्केन षडहं क्षीरेण वर्तयेत् ॥ २१ ॥**

सुराः यस्मिन् भाण्डे धयन्ति पिबन्ति तत्सुराधानम् । अत्र पर्युषिताः उपसाऽन्तरिते काले निहिताः । शङ्खपुष्पीनाम समुद्रतीरे लताविशेषः । पर्युषितासु वासिष्ठ आह—

मद्यभाण्डस्थिता आपो यदि कश्चिद्द्विजः पिबेत् ।

पद्मोदुम्बुरबिल्वपलाशानामुदकं पीत्वा त्रिरात्रिभिश्शुद्ध्येत ॥[2] इति ॥ २१ ॥

इदमन्यमरणे प्रायश्चित्तम्—

**गुरुप्रयुक्तश्चेन्म्रियेत गुरुस्त्रीन् कृच्छ्रांश्चरेत् ॥**

मरणसन्देहास्पदीभूतेषु गुरुणा चोदितश्शिष्यो यदि म्रियेत स

[1] विश्वराम. [2] वासि. २०-२१.

श्लोकस्य विषयः । शास्त्राविरुद्धोदकुम्भोद्धारणादिविषये प्रेरणमिदम् । दुर्गदेशगमनादिषु विषयेषु भ्रूणहत्यासममेव । गुरोश्शासननिमित्तमृत्युविषयं चैतत्स्वापराधनिमित्ते तु मरणादेशं वक्तुमिति । अगुरोः पुनः श्चोदयितुर्हननप्रायश्चित्तमेव ॥ २२ ॥

**एतदेवासंस्कृते ॥ २३ ॥**

संस्कारः संस्कृतं शौचाचारादिलक्षणानुशासनं तदभावोऽसंस्कृतं तस्मिन्नप्येतदेव कृच्छ्रत्रयम् । एतदुक्तं भवति—शिष्यशासनाकर्तुः गुरोः प्राजापत्यत्रयमिति ॥ २३ ॥

गुरुप्रसङ्गाद्ब्रह्मचारिणो नियममाह—

**ब्रह्मचारिणश्शवकर्मणा व्रतावृत्तिरन्यत्र मातापित्रोराचार्याच्च ॥ २४ ॥**

शवकर्म अलङ्करणवहनदहनादि । तेन कृतेन व्रतावृत्तिरुपनयनावृत्तिः, पुनरुपनयनम् । तदेतदन्यत्र मातापित्रोराचार्याच्च । तेषां शवकर्मण्यपि दोषाभावः । आह च मनुः—

आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते[1] ॥ इति ॥

इदानीमन्यत्रापि पुनरुपनयननिमित्तेषु ब्रह्मचारिणः क्वचिदपवादार्थमिदमाह—

**स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भैषज्यार्थे सर्वं प्राश्नीयात् ॥ २५ ॥**

---

[1] ५।९१

**स यदि ब्रह्मचारी रोगेणाभिभूयेत कामं तथा भैषज्यार्थं सर्वं** मधु मांसमपि **प्राश्नीयादिति** सम्बन्धः । तत्र व्रतावृत्तिर्नास्ति गुरोरुच्छिष्टभोजनेऽपि । गुरुः आचार्योऽभिप्रेतः । अथ प्राशिते व्याधेरपगमस्ततो निवर्तेत । व्याधीयीत इङ्गताविरयस्य धातोराधिपूर्वे लिङचात्मनेपदम्, यक्सीयुट् गुणादौ कृते कर्मकर्तरि व्याधीयीतेति भवति व्याधिमान् भवतीत्यर्थः ॥ २५ ॥

गुरोरुच्छिष्टसर्वप्राशनेऽपि रोगशमनस्याप्यसम्भवे तु—

**येनेच्छेत्तेन चिकित्सेत ॥ २६ ॥**

गुरोरपि यत्प्रतिषिद्धं लशुनगृञ्जनादि तेनापि चिकित्सा कार्येत्यभिप्रायः । 'सर्वत एवात्मानं गोपायेत्'[1] इति स्मृतेः ॥ २६ ॥

**स यदाऽगदी स्यात्तदुत्थायादित्यमुपतिष्ठेत हंसश्शुचिषदित्येतया ॥ २७ ॥**

गदी व्याधितः । ब्रह्मचारिणो व्याधितस्य सन्ध्योपासनादिनियमानुष्ठानाशक्तौ प्रायश्चित्तमेतत् । उत्तरेषां चैतदेवाविरोधित्वात् ॥

तत्र गृहस्थस्येदम्—

**दिवा रेतस्सिक्त्वा त्रिरपो हृदयङ्गमाः पिबेद्रेतस्याभिः ॥ २८ ॥**

स्वभार्यायामेवैतत्प्रायश्चित्तम् । रेतस्या ऋचः रेतश्शब्दवत्यः ताश्च *'पुनर्मामैत्विन्द्रियम्'*[2] इत्यनुवाकः । तासु च भूम्ना शब्दम-

[1] तै. ब. ५-१४.    [2] तै. आ. १-३०.

वृत्ति । 'सृष्टीरुप दधाति'[1] इतिवत् । दिवागमनप्रतिषेध परिभाषाया द्रष्टव्य 'परस्त्रीषु च दिवा च यावज्जीवम्'[2] इत्यत्र ॥ २८ ॥

**यो ब्रह्मचारी स्त्रियमुपेयात्सोऽवकीर्णी ॥ २९**

सञ्ज्ञाकरण व्यवहारार्थम् । तस्य च प्रयोजनं—'सप्तरात्र कृत्वैतदवकीर्णिव्रत चरेत्' । 'प्राणाग्निहोत्रलोपेनावकीर्णी' इति च ॥

**स गर्दभं पशुमालभेत ॥ ३० ॥**

पशुग्रहण हिंसाविपर्येतिकर्तव्यताप्राप्त्यर्थम् । अन्यथा तदनर्थक स्यात् ॥ ३० ॥

तत्रैता देवताः—

**नैर्ऋतः पशुः पुरोडाशश्च रक्षोदेवतो यमदेवतो वा ॥ ३१ ॥**

पुरोडाशदेवताभिधान 'यद्देवत्य पुरोडाश' इति परिभाषासिद्धस्यानुवाद । निर्ऋतिरक्षोयमाना च विकल्प । पुरोडाशे वोत्तरयो ॥ ३१ ॥

**शिश्नात्प्राशित्रमप्स्ववदानैश्चरन्तीति विज्ञायते ॥ ३२ ॥**

सान्नाय्यविकारस्यापि पशो प्राशित्रवचनाच्च शिश्नावयवादव दातव्यम् । हृदयाद्यवयवमप्सु प्रचरितव्यम् । अन्यत् लौकिके अग्नौ कर्तव्यम् ॥ ३२ ॥

---

[1] तै. स. ५-२-४ [2] बौ. गृह्यपरिभाषा १-११.

अपि वाऽमावास्यायां निश्यग्निमुपसमाधाय दार्विहोमिकीं परिचेष्टां कृत्वा द्वे आज्याहुती जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा । कामाभिद्रुग्धोस्म्यभिद्रुग्धोस्मि कामकामाय स्वाहेति ॥

परिचेष्टा आज्यसंस्कारादिना । आग्निहोत्रिकप्रयोग इत्यन्ये। पूर्वस्यासम्भव एतत्प्रायश्चित्तम् । यद्वा—स्वपरप्रेरणसकृदसकृच्छक्तिसदसद्भाववर्णप्रयतोत्सर्गाद्यपेक्षया द्रष्टव्यम् । अत्र स्मृत्यन्तरोक्तम् 'तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रस्सप्तगृहान् भैक्षं चरेत् कर्माचक्षाणः संवत्सरम्'[1] इत्यादि द्रष्टव्यम् ॥ ३३ ॥

हुत्वा प्रयताञ्जलिः कवातिर्यङ्ङग्निमभिमन्त्रयेत— सं मा सिञ्चन्तु मरुतस्समिन्द्रस्सं बृहस्पतिः । सं माऽयमग्निस्सिञ्चन्त्वायुषा च बलेन चायुष्मन्तं करोतमेति ॥

हुत्वेत्युत्तरत्र निवृत्त्यर्थम् । प्रयताञ्जलिः शुद्धबद्धाञ्जलिः । अञ्जलिश्च द्विहस्तसंयोगः । कवातिर्यङ् नात्यन्ताप्रत्यभिमुखता नात्यन्तपराङ्मुखता तद्वितन्वन्निति । अग्न्युपस्थाने 'सन्तिर्यङ्ङुपनिष्ठेत नैनं प्रत्यङ् पराङ्' इति ॥ ३४॥ ॥

---

[1] गौ. ध. २३-१८.

यद्वा—सौतेः प्राणिप्रसवकर्मणस्सवनं तत्र भवं सवनीयं जातकर्मादि तस्य कुर्युरिति यावत् । तथा च वसिष्ठः—'प्रत्युद्धारः पुत्रजन्मना व्याख्यातः'[1] इति । तदेतत् सपितृत्यागप्रत्युद्धारसम्बन्धं गौतमीये 'त्यजेत्पितरम्'[2] इत्यस्मिन्नध्याये विवृतम् । तदपि प्रतीक्ष्यम् ॥ ३७ ॥

सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात् । प्रजाता चेत्कृच्छ्राब्दपादं चरित्वा यन्म आत्मनो मिन्दाऽभूत्पुनरग्निश्चक्षुरदादित्येताभ्यां जुहुयात् ॥ ३८ ॥

अप्रजाता चेच्चान्द्रायणम् । तच्च महाप्रवरेषु स्वयमेवोक्तम्—'सगोत्रां गत्वा चान्द्रायणं कुर्यात् । व्रते परिनिष्ठिते ब्राह्मणीं न त्यजेन्मातृवद्भगिनीवत्'[3] इति । बिभृयादिति शेषः । स्वयमेव ब्रवीति—'गर्भो न दुष्यति कश्यप इति विज्ञायते'[3] इति । मिन्दाहुती पुनः सर्वत्राविशिष्टे । अशिष्टद्रव्यकत्वादाज्यद्रव्यं प्रतीयात् ॥ ३८ ॥

परिवित्तः परिवेत्ता या चैनं परिविन्दति ।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥
परिवित्तः परिवेत्ता दाता यश्चापि याजकः ।
कृच्छ्रद्वादशरात्रेण स्त्री त्रिरात्रेण शुद्ध्यतीति ॥ ३९ ॥

---

[1] वा. ध. १६. [2] गौ. ध. २०. [3] महाप्रवरे समाप्तिसूत्र पाठ्यम्.

अकृतदाराग्निहोत्रसयोगे अग्रजे तिष्ठति य कनीयान् दारसयोगमग्निहोत्रसयोग वा करोति स परिवेत्ता । इतर परिवित्तः । परिवेत्तुर्य कन्या प्रयच्छति स दाता । तमेव यो याजयति स याजकः । एतेषा चतुर्णा कृच्छ्रेण शुद्धि । यया सह परिवेत्ता भूयात् तस्या त्रिरात्रोपवासेन शुद्धि ॥ ३९ ॥

**अथ पतनीयानि ॥ ४० ॥**

वक्ष्याम इति वाक्यसमाप्ति । पतनीयानि पतनार्हाणि कर्माणि महापातकेभ्य ईषन्न्यूनानि ॥ ४० ॥

कानि पुनस्तानि—

**समुद्रसंयानम् । ब्रह्मस्वन्यासापहरणम् । भूम्यनृतम् । सर्वपण्यैर्व्यवहरणम् । शूद्रसेवनम् । शूद्राभिजननम् । तदपत्यत्वं च । एषामन्यतमत्कृत्वा चतुर्थकाला मितभोजिनस्स्युरपोऽभ्यवेयुस्सवनानुकल्पम्स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपहन्ति[1] पापम् ॥ ४१ ॥**

समुद्रसंयान नावाऽन्तरा द्वीपान्तरगमनम् । ब्राह्मणस्वन्यासापहरण निक्षेपहरणम् । भूम्यनृत साक्ष्ये भूमिविषयानृतवाद । सर्वै पण्यैरव्यवहरणीयैरप्युभयतोदद्भिर्व्यवहरणम् । शूद्रप्रेष्यता तत्सेवनमुच्यते । शूद्राया गर्भस्थापन शूद्राभिजननम् ।

[1] रपोऽभ्युपेयु , रपाऽभ्यवहरेयु , तदपघ्नन्ति.

शूद्रायां स्वभार्यायामभिनानलम् । तदपत्यत्वं. शूद्रस्य पुत्रभाव स्तवाह पुत्रोऽस्मीत्युपजीवनम् । एपामन्यतमस्मिन् कृते प्रायश्चित्त चतुर्थकालाः चतुर्थे काले येषां भोजन ते तथोक्ताः मितभोजिनः अल्पभुज अपोऽभ्यवेयुस्सवनानुकल्पं त्रिषवणस्नान स्थानासनाभ्यामहोरात्रयोर्यथासङ्ख्यं विहरन्त एते तत्पापं त्रिभिस्संवत्सरैरपहन्ति अपघ्नन्तीत्यर्थ ॥ ४१ ॥

यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणस्सेवमानः । चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापमिति ॥ ४२ ॥

कृष्णो वर्णः चण्डालीत्येके । वर्णशब्दानुपपत्ते शूद्रेत्यपरे। तत्सेवनं तद्गमनम् । व्याख्यातं चतुर्थकालत्वमनन्तरसूत्रेऽपि । उदकाभ्यवायी त्रिषवणस्नायी एकरात्रेण सकृद्गमन एवमाह । अभ्यासे न तदभ्यास कर्मण पुन. प्रयोगात् । विदुषो बुद्धिपूर्वगमन इदम् ॥ ४२ ॥

अथोपपातकानि ॥ ४३ ॥

वक्ष्यन्त इति शेष । एतान्यपि पतनीयेभ्यो न्यूनानि ॥४३

अगम्यागमनं गुर्वीसखीं गुरुसखीमपपात्रां पतितां च गत्वा भेषजकरणं ग्रामयाजनं रङ्गोपजीवनं नाट्याचार्यता गोमहिषीरक्षणं यच्चान्यदप्येवंयुक्तं कन्यादूषणमिति ॥४४॥

**अगम्याः** मातृष्वस्राद्या । ताश्च नारदो जगाद—

*माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।*
*पितृव्यसखिशिष्यस्त्री भार्या पुत्रस्य या भवेत् ॥*

*दुहिता चार्यभार्या च सगोत्रा शरणागता ।*
*राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥*

*आसामन्यतमां गत्वा गुरुतल्पव्रतं चरेत् ।*
*शिश्नस्योत्कर्तनं दण्ड नान्यो दण्डो विधीयते[1] ॥ इति ॥*

अत्र **माता** स्तन्यप्रदा । **गुर्वी** माता **गुरुः** पिता तयोस्सखी च । यस्यापपा[2]त्रा कन्या । उपपात्रेति पाठे पण्यस्त्री । **पतिता** ब्रह्महत्यादिभि र्ये पुरुष पतति, स्वकीयैश्च । तथा च वसिष्ठ—

**त्रीणि स्त्रियाः पातकानि लोके धर्मविदो विदुः ।**
**भर्तृवधो भ्रूणहत्या स्वस्य गर्भस्य पातनमिति ॥[3]**

**भेषजकरणं** उपजीविका यस्य । **ग्रामयाजनं** बहूना याजनम् । **रङ्गोपजीवनं** नर्तनेनोपजीवनम् । **नाट्याचार्यता** नर्तकेभ्यो नट्यशास्त्रस्य भरतविशाखिलादि प्रतिपादनम् । **गोमहिषीरक्षणमप्युपजीवनाय** । **एवंयुक्तं** वेदनिन्दा, विप्रापवाद, शस्त्रपाणित्व, अग्निगोब्राह्मणेभ्यो दानप्रतिषेध, अयाज्यस्वमस्वाज्यपदार्थात्मविक्रय इत्यादि । **कन्यादूषणं** तद्गमन तद्दूषण वा रोहिणी" काणा विश्वरूपा बहुभुगाकुला मन्दगतिर्मन्दप्रज्ञा बहुभाषिणी दुर्गन्धगात्रेत्यादि ॥ ४४ ॥

[1] नारदधर्म १२-७५, [2] यस्यानपपात्रा [3] वसि. ध २८-७.

वलीपलितकालेऽपि कर्तव्यश्श्रुतिगह्वरः ॥ इति ॥

नक्षत्रनिर्देशो ज्योतिश्शास्त्रोपजीवनम् । चशब्दात् प्रतिलोमलेखनग्रहस्थपरपाकोपजीवनानि गृह्यन्ते ॥ ४७ ॥

यान्येतान्यशुचिकराणि—

तेषां तु निर्वेशो द्वादश मासान्द्वादशार्धमासान् द्वादश द्वादशाहान् द्वादश षडहान् द्वादश त्र्यहान् द्वादशाहं षडहं त्र्यहमहोरात्रमेकाहमिति यथाकर्माभ्यासः ॥ ४८ ॥

अत्र षडहात्प्राग्ये अहाः निर्दिष्टाः तान् प्राजापत्येन यापयेत् । षडहादीस्त्वनशनेन । यथा पापस्य कर्माभ्यासस्तथा सेवा । तत्र गुर्वभ्यासे गुरुकल्पः । मध्यमे मध्यमः । लघौ लघुः ॥

पतितानामेव किञ्चिदाह—

अथ पतितास्समवसाय धर्मांश्चरेयुरितरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः पुत्रान् सन्निष्पाद्य ब्रूयुर्विप्रव्रजतास्मत्त एवमार्यानपि संप्रतिपत्स्यथेति । अथापि न सेन्द्रियः पतति तदेतेन वेदितव्यमङ्गहीनो हि साङ्गं जनयतीति ॥ ४९ ॥

समवसाय सम्भूय परस्परं पतिता धर्मांश्चरेयुः । किलश-

णान् यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहलक्षणान् । अत्र परस्परं विवहमानेषु यदि पुत्रा निष्पन्ना भवेयुः तान्निष्पादिताननुपनीय एवं पितरो ब्रूयुः । विप्रव्रजत निर्गच्छतास्मत्तः अस्मान् त्यक्त्वा निर्गच्छत । निर्गताः आर्यान् प्रतिपत्स्यथ यूयमार्यान् प्रतिपत्स्यथ अपिशब्दस्सम्भावनावचनः । आर्यैः किल यूयं सम्प्रयोगं प्रतिपत्स्यथेति । आर्या एव युष्माकमुपनेतारो भविष्यन्तीति । पतितपुत्रा अपि तैस्संसर्गाभावे शुचयो भवन्ति । संसर्गे हि संसर्गपतनमिति । ननु पतितपुत्रत्वादपि तदवनीत्याशङ्कयाह—अथापि न सेन्द्रियः पतति । यद्यपि न पिता पतति तथाऽपि न सेन्द्रियः इन्द्रियैस्सह न पतति तस्मात् न हि पतनीयकारणम् । न चेन्द्रियाणि करणानि पतितानि । कर्तृकरणयोश्च पृथक्त्वं प्रसिद्धं उपस्थेन्द्रियं च कर्मेन्द्रियम् ।

श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थं हस्तपादं वाक्चैव दशमी स्मृता ॥ इति*॥

पुत्रश्चेन्द्रियनिष्पादितः । तथा च मन्त्रः—'अङ्गादङ्गात्सम्भवसि'† इत्यन्तःकरणसमानाधीनः । अथोच्येत मैवैवं पितृगुणैः पुत्रस्थैर्भवितव्यम् । अपि पतितत्वे तदपि स्यात्—तदेतेन वेदितव्यं दृश्यते ह्ययमयोऽङ्गहीनोऽपि साङ्गं जनयति साङ्गोऽप्यङ्गहीनम् । अतो नावश्यं पतितपुत्रेणापि पतितेन भवितव्यम् ॥ ४९ ॥

अमुं तावत्पक्षं दूषयति—

मिथ्यैतदिति हारीतो दधिधानीसधर्माः स्त्रिय-

* मनु. २-९०. † तै. म. २-११.

**स्युर्यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तच्छिष्टा धर्मकृत्येषूपयोजयन्ति । एवमशुचिशुक्लं यन्निर्वर्तते न तेन सह सम्प्रयोगो विद्यते ॥ ५० ॥**

अपवित्रायामपि जनन्या पतितादुत्पन्नश्चेत् पतित एव भवतीत्येतदनेन कथ्यते । कस्य हेतोः ? यावता जनयोऽपि उत्पन्नमित्यैतदिति । हारीतग्रहणं पूजार्थं नेदं मतं पर्युदासितुम् । अत्र दधिधानीसाधर्म्यात् स्त्रीणां बीजप्राधान्यं दर्शयति । तथा द्रव्यान्तरनिष्पत्त्यायतनत्वं दधिधान्या एव । आसामप्यशुचिशुक्लाधारत्वम् । यथा च दधिधान्यां प्रयतायामातञ्चितादप्रयताद्दध्नो मथननिष्पन्नं नवनीतं घृतं न धर्मकार्येष्विष्टयादिषु उपयुज्यते । एवमशुचिशुक्लनिष्पादितेन पुंसां न धर्मसम्बन्धो विधीयते । अथ यदुक्तं 'न सेन्द्रियं पतति' इति तत् मिथ्यैव । कथं ? द्वौ हि पुरुषौ भवतः सोपाधिको निरुपाधिकश्च । यो निरुपाधिकः परमात्मा तस्याकर्तृत्वम् । सोपाधिकस्तु पुण्यापुण्ये करोति तत्फलं च अनुभवति । उपाधिश्च बुद्ध्यादिर्देहपर्यन्तः । स हि क्षेत्रज्ञः । तस्मिन्नश्चाहंप्रत्ययः । स च भूतात्मा स देहोऽहङ्कारः मनः ॥

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥ इति ॥[1]

ततो देहोऽपि कर्तृत्वादेव पतति । एवं च स्नातानां मृतेष्वग्निपतितेषु न सपिण्डानां तद्देहस्पर्शनादि शिष्टैरभ्युपगम्यते । तस्मा

[1] मनु १२ १२

दशुचिशुक्लोत्पन्नानामशुचित्वमेव । तथा च स्मृतिः—'पतितोत्पन्नः पतितो भवतीत्याहुः'[1] इति । यदप्युक्तम् 'अङ्गहीनोऽपि साङ्गम्' इति तदपि ग्रहस्थितिवशात् आहारविशेषवशाच्च युक्तम् । इह तु सेन्द्रिय एव पततीत्युक्तम् । किञ्च—स्त्रीपुंसाभ्यां हि पुत्रो जन्यते । यद्यत्रापि पुमानङ्गहीनः स्त्री तु साङ्गा भवत्येव। ततोऽस्याङ्गानि प्रवर्तन्ते । मनुः—

पितुर्वा भजते शीलं मातुर्वोभयमेव वा ॥ इति ॥

इदं चान्यत्—भूयांसो धर्माः कारणगताः कार्ये भवन्ति। तत्र शुक्लादयो गुणाः पुत्रे न भवन्तीति प्रमाणशून्यं वच. । अत एव तदपि मिथ्यैव । तस्मान्न तेन सह संप्रयोगो विद्यत इति स्थितम् ॥ ५० ॥

यद्यपि सम्प्रयोगो न विद्यते, तथाऽपि प्रायश्चित्तं तस्यास्तीत्याह—

## अशुचिशुक्लोत्पन्नानां तेषामिच्छतां प्रायश्चित्तिः। पतनीयानां तृतीयोंऽशस्स्त्रीणामंशस्तृतीयः ॥ ५१ ॥

पतनीयप्रायश्चित्तं यत्तूक्तं 'चतुर्थकाला मितभोजिनस्स्युः' इति तस्य तृतीयो भाग' पतितोत्पन्नानां प्रायश्चित्तम् । स्त्रीणां तदुत्पन्नानां तस्यापि तृतीयो भाग नवमभाग इति यावत् । तत्र तौल्येऽपि तद्वर्जित्वे स्त्रीणा दोषाल्पत्वमवगम्यम् । तथा च वसिष्ठः युक्तिमेवाह—

[1] वसि. ध. १३-६१.

'पतितोत्पन्नः पतितो भवति'[1] इत्याहुरिति । अत्र स्त्रिया हि परगामीति कथमुपेयामिति ॥ ९१ ॥

'सर्वपण्यैर्व्यवहरणम्' इति पतनीयमुक्तं, तत्र किल विषये किञ्चिदुच्यते—

**भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः ।**
**श्वविष्ठायां क्रिमिर्भूत्वा पितृभिस्सह मज्जतीति॥**

नात्र तिरोहितं किञ्चिदस्ति ॥ ९२ ॥

**पितॄन्वा एष विक्रीणीते यस्तिलान्विक्रीणीते । प्राणान्वा एष विक्रीणीते यस्तण्डुलान्विक्रीणीते ॥ ५३ ॥**

एषा निन्दा तिलतण्डुलयोर्विक्रयस्य ॥ ९३ ॥

**सुकृतांशान्वा एष विक्रीणीते यः पणमानो दुहितरं ददाति ॥ ५४ ॥**

सुकृतं पुण्यं तदंशाः सुकृतांशाः । पणमानो योऽन्यस्य द्रव्यं गृहीत्वाऽन्यस्मै द्रव्यान्तरमात्मार्थं प्रयच्छति ॥ ९४ ॥

अथ प्रसङ्गात् पण्यमाचष्टे—

**तृणकाष्ठमविकृतं विक्रेयम् ॥ ५५ ॥**

तृणविकाराः रज्ज्वासनकटादयः । काष्ठविकाराः स्रुक्स्रुवप्रतिमादयः । तद्वर्जं तृणं काष्ठं ब्राह्मणैरप्यापदि विक्रेयम् ॥९५ ॥

[1] वसि. ध. १३-९१.

अथाप्युदाहरन्ति—

पशवश्चैकतोदन्ता अश्मा च लवणोद्धृतः ।
एतत् ब्राह्मण ते पण्यं तन्तुश्चारजनीकृत इति॥

ब्राह्मणमाह—हे ब्राह्मण[1] तवैतत्पण्य यदेकतोदन्ता पशव शृङ्गिणस्तेऽप्येकतोदन्ता अश्मा पाषाणश्च लवणोद्धृतो लवणवर्जित । तन्तुश्चारजनीकृत कुसुम्भकुङ्कुमहरिद्राद्यराञ्जित इत्यर्थ ॥

पातकविवर्जितेषु पण्यापण्याना येषु प्रायश्चित्त वक्तव्य तदुच्यते—

पातकवर्जं वा बभ्रुं पिङ्गलां गां रोमशां सर्पिषाऽवसिच्य कृष्णैस्तिलैरवकीर्यानूचानाय दद्यात् ॥ ५७ ॥

वाशब्दो वक्ष्यमाणेन प्रायश्चित्तविकल्पार्थ । बभ्रुपिङ्गलयोर्विकल्पार्थो वा । रोमशाम् । एवभूता गा घृतेन वाऽभ्यज्य तामेव कृष्णतिलैरवकीर्य बहुश्रुताय ब्राह्मणाय दद्यात ॥ ५७ ॥

कूश्माण्डैर्द्वादशाहम् ॥ ५८ ॥

जुहुयादिति शेष ॥ ५८ ॥

यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते इति ॥ ५९ ॥

---

[1] तै, आ, १ ८.

अर्वाचीनमर्वाक्तनं फलविधौ ॥ ५९ ॥

**पातकाभिशंसने कृच्छ्रः ॥ ६० ॥**

पातकमयमित्युक्तिमात्रे प्राजापत्योऽस्य प्रायश्चित्तं तस्यानृतेन पातकेनाभिशस्तस्य ॥ ६० ॥

अथास्मिन्नेव विषयेऽभिशंसितुराह—

**तदब्दोऽभिशंसितुः ॥ ६१ ॥**

तदिति कृच्छ्रं प्रतिनिर्दिशति । ब्राह्मणमनृतेन पातकेनाभिशंस्य वत्सरं प्राजापत्यव्रतं चरेत् । अत्र गौतमः—"ब्राह्मणाभिशंसने दोषस्तावान् । द्विरनेनसि"[1] ॥ ६१ ॥

पतितसम्प्रयोगे सति कियता कतमेन सम्प्रयोगेन पतति तत्रोभय वक्ति—

**संवत्सरेण पतति पतितेन समाचरन् ।**
**याजनाध्यापनाद्यौनान्न तु यानासनाशनादिति ॥ ६२ ॥**

यानासनाशनैस्संवत्सरेण पतति । न तु याजनादिभिस्संवत्सरेण । किं तर्हि ? सम्बन्धमात्रेण सद्य एवेत्यर्थः । अन्तरङ्गत्वात् याजनादीनां बहिरङ्गत्वाच्च यानादीनां तद्युक्ता योजना । याजनं नाम ऋत्विग्यजमानसम्बन्धः । शिष्योपाध्यायसम्बन्धोऽध्यापनम् । कन्यादानप्रतिग्रहलक्षणसम्बन्धो यौनः । यानाद्येकस्यां शालायामेकस्मिन् युग्ये सहाया वा ॥ ६२ ॥

[1] गौ. ध. २१. १८

अमेध्यप्राशने प्रायश्चित्तं नैष्पुरीष्यं तत्सप्तरात्रेणावाप्यते । अपः पयो घृतं पराक इति प्रतित्र्यहमुष्णानि स तप्तकृच्छ्रः ॥ ६३ ॥

अमेध्यशब्देन श्वापदोष्ट्रखरादीनां मांसं लशुनगृञ्जनपलण्डुकादयश्च गृह्यन्ते । अबादीनि त्रीण्युष्णानि । पराक उपवासः प्रतित्र्यहम् । एवमेकैकस्मिन् कृते सति द्वादश सम्पद्यन्ते । तस्यैतस्य कृच्छ्र इति संज्ञा ॥ ६३ ॥

त्र्यहं प्रातस्तथा सायं त्र्यहमन्यदयाचितम् । त्र्यहं परं तु नाश्नीयात् पराक इति कृच्छ्रः ॥ ६४ ॥

अयमपि द्वादशाह एव ॥ ६४ ॥

अतिबालकृच्छ्रमाह—

प्रातस्सायमयाचितं पराक इति त्रयश्चतूरात्राः स एषः स्त्रीबालवृद्धानां कृच्छ्रः ॥ ६५ ॥

एकैकमेकाहः परं तु नाश्नीयात् । अतश्चतुरहोऽयम् । बालादिग्रहणमशक्तोपलक्षणम् ॥ ६५ ॥

यावत्सकृदाददीत तावदश्नीयात्पूर्ववत्सोऽतिकृच्छ्रः ॥ ६६ ॥

पूर्ववदित्येतेन सर्वातिदेशे प्राप्ते ग्रासनियमार्थं सकृद्ग्रहणम् । ग्रासस्तु शिखण्डपरिमितं पाणिपूरणाद्यो वा ॥ ६६ ॥

## अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः ॥ ६७ ॥

कृत्स्नोपि द्वादशाहोऽब्भक्षो भवेत् । तृतीयग्रहणं समुच्चितानामेषां सर्वप्रायश्चित्तत्वप्रदर्शनार्थम् । यथाऽयं तृतीयो भवति तथा कुर्यादित्यर्थः । यद्वा—चतुर्षु त्र्यहेषु तृतीयस्त्र्यहोऽब्भक्षो भवति । प्रथमद्वितीयौ चोदनभक्षौ । चतुर्थः पराक इति । स एष कृच्छ्रातिकृच्छ्रः ॥ ६७ ॥

अथ कृच्छ्रव्रतमुच्यते—

## कृच्छ्रे त्रिषवणमुदकोपस्पर्शनम् ॥ ६८ ॥

त्रीणि सवनानि प्रातर्मध्यंदिनं सायमिति उपस्पर्शनं स्नानम् ॥

## अधश्शयनम् ॥ ६९ ॥

उपरि खट्वादिषु शयननिषेधः । अनुपस्तीर्णे देशे शयनमधश्शयनमित्यपरे ॥ ६९ ॥

## एकवस्त्रता केशश्मश्रुलोमनखवापनम् ॥ ७० ॥

अधोत्तरीयं प्रतिषिध्यते ॥ ७० ॥

## एतदेव स्त्रियाः केशवपनवर्जं केशवपनवर्जम् ॥

यो यावन्नियमः कृच्छ्रेषु पुरुषस्योक्तः स एव स्त्रीणाम् । कृच्छ्राचरणे केशवपनं तु वर्ज्यते । द्विरुक्तिरुक्तप्रयोजना ॥ ७१ ॥

इति द्वितीये प्रथमोऽध्यायः.

---

एवं तावद्ब्रह्मचारिधर्मप्रसङ्गात् प्रसक्तानुप्रसक्तं विहितम् । अधुना गृहस्थधर्मा उच्यन्ते । तत्र प्रथमं तावत्संक्षिप्याह—

**नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी वृषलान्नवर्जी । ऋतौ च गच्छन्विधिवच्च जुह्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ १ ॥**

नित्योदकी उदकमण्डलुहस्तः । नित्ययज्ञोपवीती । निवीतिप्राचीनावीतिभ्यामन्यत्र । नित्यस्वाध्यायी अन्यत्रानध्ययनात् । वृषलःशूद्रः । अन्नग्रहणादामं प्राणसंशये तत्स्थित्यर्थमभ्यनुज्ञातमेव । ऋतुः अर्तेर्गतिकर्मणो गर्भाधानक्षमकालः । न वसन्तादिः । तत्र गच्छन् मैथुनमाचरन् । आह—

ऋतुस्स्वाभाविकः स्त्रीणां रात्रयष्षोडश स्मृताः ।
चतुर्भिरितरैस्सार्धमहोभिस्सद्विगर्हितैः ॥
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः[1] ॥

एतच्च स्वभार्यायामेव । विधिवच्च जुह्वत् श्रुतिस्मृतिचोदितेन मार्गेण । ब्रह्मलोकान्न च्यवते । ब्रह्म च तल्लोकश्च ब्रह्मलोकः

[1] मनु ३-४६ ४७.

तस्मान्न च्यवते न भेद प्रतिपद्यत इत्यर्थ । अनेन प्रकारेणगृहस्थस्यापि स्वाश्रमविहितकर्मणामुक्तिमनुमनुते । आह च याज्ञवल्क्य —

न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ॥
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते[1] ॥ इति ॥

तथा च धर्मस्कन्धब्राह्मणम्—'सर्व एते पुण्यलोका भवन्ति । ब्रह्मसंस्थोऽमृतत्वमेति' इति ॥ १ ॥

'ऋतौ च गच्छन्' इत्युक्तम् । तत्र 'प्रजानिश्रेयसम्'[3] इति गृहेपूक्तम् । प्रजाना च जीवनं कथ भवतीति दायविभागप्रकरणमारभ्यते । तत्र परकृतिरूपा श्रुतिमुदाहरति—

मनुः पुत्रेभ्यो दायं व्यभजदिति श्रुतिः[4] ॥ २ ॥

पुत्रग्रहणात् पुस एव विभनेत्, न दुहितु । तथा च श्रुति —'तस्मात्स्त्रियो निरिन्द्रिया अदायादी'[5] इति । स्मृतिरपि—

विभाग चेत्पिता कुर्यादिच्छया विभजेत्सुतान्[6] ॥ इति ॥

तत्र सातत्यद्रव्यदायविभाग इदानीं कर्तव्य इति विधिकल्पना॥२

तत्राथ प्रकार —

समशस्सर्वेषामविशेषात् ॥ ३ ॥

न विशेष कश्चिच्छ्रूयते विषमो भाग इति । अय तु समो विभाग सवर्णापुत्राणामौरसाना समानगुणाना च । न त्वसवर्णापुत्राणामनौरसानामसमानगुणानाम् ॥ ३ ॥

---

[1] ३ २०५ छा उ २ २३-१ [2] १ ८ ४६
[3,4] तै. स ३-१-९ [5] त स ६ ५ ८ [6] याज्ञ–२-११६.

अस्मिन्नेव विषये उद्धारयुक्तं विभागमाह—

**वरं वा रूपमुद्धरेज्ज्येष्ठः ॥ ४ ॥**

वरमुत्कृष्टरूपद्रव्यमुद्धरेत् गृह्णीयात् ॥ ४ ॥

किं तत्र प्रमाणम्?

**तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीति श्रुतिः[1]॥**

निरवसायनं पृथक्करणम् । धनेनोपतोष्य पृथक्कुर्वन्तीत्यर्थः । अनया श्रुत्याऽविशेषादिति हेतुः अपसारितो भवति ॥ ५ ॥

**दशानां वैकमुद्धरेज्ज्येष्ठः ॥ ६ ॥**

सर्वं धनजातं दशधा विभज्य ज्येष्ठस्यैको भाग उद्धारः कार्यः । दशसङ्ख्याधिकेषु सत्स्वेष विभागो लाभाय भवति । न तु दशसंख्यान्यूनेषु । एतावुद्धारौ गुणवज्ज्येष्ठविषयौ वेदितव्यौ ॥ ६ ॥

**सममितरे विभजेरन् ॥ ७ ॥**

सर्वं धनजातं दशधा विभज्य ज्येष्ठस्यैको भाग उद्धारः कार्यः । अवशिष्टनवभागानितरे पुत्राः समं विभजेरन् ॥ ७ ॥

**पितुरनुमत्या दायविभागस्सति पितरि ॥८**

तदनिच्छया विभागे दोषा अपि भवन्ति ॥ ८ ॥

---

[1] तै. सं. २-५-२.

## चतुर्णां वर्णानां गोश्वाजावयो ज्येष्ठांशः॥९

अशनियमेनोद्धार । मृते जीवति वा पितरि गोश्वाजाविष्वे तत् । इतरे सम विभजेरन् । विभक्तादिना ज्येष्ठभागद्वयावशिष्टस्याप्याधिक्ये सति विज्ञेयम् ॥ ९ ॥

एव समानवर्णस्त्रीपुत्रविषये सति विभाग उक्त । अथ—

## नानावर्णस्त्रीपुत्रसमवाये दायं दशांशान् कृत्वा चतुरस्त्रीन् द्वावेकमिति यथाक्रमं विभजेरन् ॥ १० ॥

**नानावर्णस्त्रियो** ब्राह्मण्यादिस्त्रिय । तत्पुत्रसमवाये सति सर्वं दशधा विभज्य चतुरोंशान् ब्राह्मणीपुत्रो हरेत् । इतरेषु षट्सु त्रीनशान् क्षत्रियासुत । तत्परिशिष्टेषु त्रिषु द्वौ वैश्यासुत । तस्यैतदवशिष्टांश शूद्रासुत । एव क्षत्रियोपि सुतस्य वर्णक्रमात् षोढाकृतानां त्रीन् द्वावेकमिति यथाक्रम प्रकल्पयेत् । तथा वैश्योपि स्वपुत्राय द्वावेकमिति विभजेत् । असत्यो विषमविभाग ॥

## औरसे तूत्पन्ने सवर्णास्तृतीयांशहराः ॥११

औरसपुत्रो वक्ष्यते 'सवर्णाया संस्कृतायाम्' इति । तस्मिन्नुत्पन्ने सवर्णास्तृतीयांशहरा भवेयु । सर्वधनजात त्रेधा विभज्य तेषामेक पोढा सम्पाद्य त्रीन् द्वावेकमिति कल्पयेत् ॥ ११ ॥

## सवर्णापुत्रानन्तरापुत्रयोरनन्तरापुत्रश्चेद्गुणवान् स ज्येष्ठांशं हरेत् ॥ १२ ॥

गुणवान् हि श्रुतिशीलादिर्ज्येष्ठ ॥ १२ ॥

गुणवत्पुत्रस्य ज्येष्ठांशहरणे कारणमाह—

**गुणवान् हि शेषाणां भर्ता भवति ॥ १३॥**

आहारदानादिगुणवत्त्वे समर्थ एव । अतो ज्येष्ठ गुणवत्तया कृत ॥ १३ ॥

'औरसे तूत्पन्ने' इत्युक्तम्, तत्र सर्वस्यौरसनिमित्तग्रहणे प्राप्ते परिभाषते—

**सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात् ॥ १४ ॥***

पाणिग्रहणेन शास्त्रलक्षणेन तस्या स्वयमुत्पादित औरसो न क्षेत्रजात ॥ १४ ॥

एवं तत्प्रसङ्गात् पुत्रप्रतिनिधीनाह—

**अभ्युपगम्य दुहितरि जातं पुत्रिकापुत्रमन्यं दौहित्रम् ॥ १५ ॥**

विद्यादिति वर्तते अभ्युपगम्य सवाद्यारमदर्थनया दुहिता दीयते

---

* अथाप्युदाहरन्ति—

"अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥

इति सत्रपाठे श्लोकोऽधिको दृश्यते ॥

तस्यां जातं दौहित्रं पुत्रिकापुत्रं विद्यात् । अन्यत्वमौरसापेक्षया तस्यास्य गौणत्वप्रदर्शनार्थम् । अन्यं दौहित्रमित्यस्यापरा व्याख्या— अन्य. असंवादपूर्वकं दत्ताया जात त दौहित्रमेव विद्यात् ॥१५॥

पुत्रिकापुत्रस्त्वेवंलक्षणः पुत्रो मातामहस्यैवेतत्प्रकटयति—

अथाप्युदाहरन्ति—

आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरं तस्यास्तृतीये च पितामह-
मिति ॥ १६ ॥

पिण्डपितृयज्ञे क्रियमाणे प्रथम पिण्ड मातरमुद्दिश्य दद्यात् । स्त्रिया पिण्डदान वचनप्रामाण्याद्भवति । पितृस्थानीया हि सा द्वितीयं मातु पितरमात्मनो मातामहम् । तृतीय तस्या पितामहमात्मनो मातामहपितरम् । यद्वा—मातर परिहाप्यैव पिण्डदानम् । एतत्कर्मान्ते प्रदर्शितम् । तत्राप्युक्तम् । कथं नु खलु पुत्रिकापुत्रस्य पिण्डदानं भवति निमृष्टा एतत्तेऽमुष्यै तत मम पितामह ये च त्वामन्वेतत्तेऽमुष्यै पितामह प्रपितामह ये च त्वामन्वेतत्तेऽमुष्यै प्रपितामह ये च त्वामन्विति । अमुष्यै अमुष्या इति स्वमातर निर्दिशति ॥ १६ ॥

मृतस्य प्रसूतो यः क्लीवव्याधितयोर्वाऽन्ये-
नानुमते स्वे क्षेत्रे स क्षेत्रजः ॥ १७ ॥

मृतस्य स्वे क्षेत्रे प्रसूत इति सम्बन्ध । स्वक्षेत्रे स्वपाणिग्र-

हणादिना संस्कृते । कार्यानभिज्ञः क्लीबः तृतीया प्रकृतिः । व्याधितस्तीव्ररोगेण प्रजोत्पादनासमर्थो गृह्यते । एषां त्रयाणां भार्यायामन्येन भ्रात्रा वा पित्रा वाऽनुमते देवरेणोत्पादितः क्षेत्रजो भवति ॥ १७ ॥

स एष द्विपिता द्विगोत्रश्च द्वयोरपि स्वधारिक्थभाग्भवति ॥ १८ ॥

स एष क्षेत्रजः द्विपिता द्वौ पितरौ यो जनकः क्षेत्रवांश्च । द्विगोत्रत्वमप्यस्य तद्गोत्राभ्यामेव । गोत्रभेदे सत्यस्य प्रयोजनम्—स्वधा पिण्डोदकादि । रिक्थं मृतस्य यदतिरिच्यते द्रव्यम् ॥ १८ ॥

शुश्रूषाविवाहपिण्डदानग्रहणस्योपयोगमाह—

अथाप्युदाहरन्ति—

द्विपितुः पिण्डदानं स्यात्पिण्डेपिण्डे च नामनी । त्रयश्च पिण्डाप्पण्णां स्युरेवं कुर्वन्न मुह्यतीति ॥ १९ ॥

**नामनी** उत्पादयितुः क्षेत्रिणश्च नयोस्सह पिण्डदाने सति त्रय एव पिण्डाप्पण्णां भवेयुः । 'पित्रे पितामहाय' इति च वचनात् ॥ १९ ॥

मातापितृभ्यां दत्तोऽन्यतरेण वा योऽपत्यार्थे परिगृह्यते स दत्तः ॥ २० ॥

मातापितृभ्या वा दत्त ॥ २० ॥

सदृशं यं सकामं स्वयं कुर्यात्स कृत्रिमः॥

सादृश्य जात्यादिना सकामं अस्याहं पुत्रो भविष्यामि यदि मा ग्रहीष्यतीति यो मन्यते पुत्रार्थी च स्वयमेव पूजापूर्वकं यदि गृह्णाति एव गृहीत कृत्रिम उच्यते ॥ २१ ॥

गृहे गूढोत्पन्नोऽन्ते ज्ञातो गूढजः ॥ २२ ॥

गृहे अतिगुप्तायामपि स्त्रियामुत्पन्न उत्पादितोऽयमिति पूर्वमज्ञात । पश्चात्कालान्तरे येन केनचित् विभयाधारिणा कारणेन अस्यामुत्पादितोऽय पुत्र इति विज्ञायते तथाऽपि गूढ इत्यभिप्राय । अत्र गृहग्रहण प्रव्राजिताया गूढोत्पन्नस्य गूढ इति सज्ञा मा भूदित्येतदर्थम् ॥ २२ ॥

मातापितृभ्यामुत्सृष्टोऽन्यतरेण वा योऽपत्यार्थे परिगृह्यते सोऽपविद्धः ॥ २३ ॥

अत्रापि सदृश इत्यनवर्तते । उत्सृष्टस्त्यक्त ॥ २३ ॥

असंस्कृतामनतिसृष्टां यामुपयच्छेत्तस्यां यो जातस्स कानीनः ॥ २४ ॥

अनेन ज्ञायते गूढजः संस्कृतायां जायत इति । गूढात्संस्कृतामाहुः । अनतिसृष्टां अनभ्युपगतां गुरुभिः अतिसृष्टायामप्यसंस्कृतायां संस्कृतायामप्यनतिसृष्टायां स एव । सोऽयं सदृशग्रामुत्पादितो मातामहस्य पुत्रः ॥ २४ ॥

**या गर्भिणी संस्क्रियते विज्ञाता वाऽविज्ञाता वा तस्यां यो जातः स सहोढः ॥ २५ ॥**

गर्भिणी सती सगर्भा गर्भवत्यपि तादृशी या परिणीयते तज्जातस्सहोढो नाम । योढुश्चायं पुत्रः । विज्ञातायां तु संस्कार एव नास्ति ॥ २५ ॥

**मातापित्रोर्हस्तात्क्रीतोऽन्तरेण वा योऽपत्यार्थे परिगृह्यते स क्रीतः ॥ २६ ॥**

स्वद्रव्यं प्रदायेति शेषः ॥ २६ ॥

**क्लीबं त्यक्त्वा पतितं वा याऽन्यं विन्देत्तस्यां पुनर्भ्वां यो जातस्स पौनर्भवः ॥ २७ ॥**

मृतेऽप्यत्रानुज्ञातः । तथा च वसिष्ठः—'[1] मृते वा साऽपि पुनर्भूर्भवति'' इति ॥ २७ ॥

---

[1] १७-२०.

**मातापितृविहीनो यः स्वयमात्मानं दद्या-त्स स्वयंदत्तः ॥ २८ ॥**

स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च दानम् । अत्रापि शरी-रेन्द्रियाणामात्मीयत्वाद्दानव्यवहारः ॥ २८ ॥

**द्विजातिप्रवराच्छूद्रायां जातो निषादः ॥ २९ ॥**

द्विजः ब्राह्मणः ॥ २९ ॥

**कामात्पारशव इति पुत्राः ॥ ३० ॥**

द्विजातिप्रवरादेः । पूर्वं क्रमोढायास्तु पुत्रः । अयं तु का-मादूढायाः । अनन्तरप्रभवप्रकरणे तयोरपि पुनर्ग्रहणमनयोः पुत्रकार्येष्वपि प्रावण्यार्थम् ॥ ३० ॥

अथैतान् पुत्रान्विविधान्विविनक्ति —

**अथाप्युदाहरन्ति-**

**औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ ।**
**गूढजं चापविद्धं च रिक्थभाजः प्रचक्षते ॥**
**कानीनं च सहोढं च क्रीतं पौनर्भवं तथा ।**
**स्वयंदत्तं निषादं च गोत्रभाजः प्रचक्षते ॥**

औरसादयः गोत्रभाजश्च रिक्थभाजश्च । रिक्थं द्रव्यम् । कानीनादयश्च तद्गोत्रभाजः । पारशवः अभाग एव विद्यावत् ।

अस्मात्सूत्रादिदमप्यवगम्यते । निषादकन्याऽपि सुसमीक्ष्यासगोत्रादेव वोढव्या । अन्यथा सगोत्रागमनप्रसङ्गादिति । एते पुत्रिकापुत्रादय काशकुशस्थानीया पुत्रप्रतिनिधयो मन्तव्याः । अवश्यकरणीयत्वात् पुत्रोत्पत्ते । उक्तं च 'पुत्राश्चोत्पाद्य धर्मत' इति । योषिता पुत्रवत्या भवितव्यम् । 'अवीरायाश्च योषित ' इत्यभोज्यान्नप्रकरणे दर्शनात् ॥ ३१–३२ ॥

तदेतत्परमतेनोपन्यस्यति स्म—

**तेषां प्रथम एवेत्याहौपजङ्घनिः ॥ ३३ ॥**

औपजङ्घनिराचार्यो मन्यते स्म । प्रथमः औरस एव पुत्रो न पुत्रिकापुत्रादय इति ॥ ३३ ॥

स हि जनकं राजान प्रतिकृत्यैवमुवाच—

**इदानीमहमीर्ष्यामि स्त्रीणां जनक नो पुरा ।**
**यतो यमस्य सदने जनयितुः पुत्रमब्रुवन्॥**

यम कृतयुगे औपजङ्घनिमाहूय पप्रच्छ परदारेपूत्पादित पुत्रः किं जनयितुरिति उताहो क्षेत्रिण इति । एव प्रजा जनयितुरेवेति निश्चित्य तदिद पुरा यमस्य सदने जनयितु पुत्रमब्रुवन्। इदानीमहमित्यादि । सम्प्रति अहमीर्ष्यामीति न सहे । स्त्रीणामिति द्वितीयार्थे षष्ठी । अथवा—स्वार्थ एव । स्त्रीणा चरन्त पुरुष नेर्ष्यामीत्यर्थ । हे जनक! पुरा यस्माद्यमस्य धर्मराजस्य सदने स्थाने वेश्मनि जनयितुरेव पुत्रमब्रुवन् ऋषयो न क्षेत्रिण

इति । न हि यमराजसकाशे निश्चितोऽर्थो मिथ्या भवितुमर्हतीत्यौपजङ्घने मुनेर्मतम् ॥ ३४ ॥

रेतोधाः पुत्रं नयति परेत्य यमसादने ।
तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः ॥

रेतो दधातीति रेतोधाः बीजी पुत्रं मरणं नयति भुङ्क्ते पुत्रकृतं लभते परेत्य मृत्वा यमसादने पुण्यपापोपभोगस्थाने । नैव क्षेत्री । यस्मादेवं तस्मात्पररेतसो बिभ्यन्तो भार्यां रक्षन्ति ॥ ३५ ॥

एवं जनकादि कन्याशिष्यान् प्रत्याह—

अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः । जनयितुः पुत्रो भवति साम्पराये मोघं वेत्ता कुरुते तन्तुमेतमिति ॥ ३६ ॥

अन्ये बीजवपनं मा कार्षुः । तत्र को दोषः ? जनयितुः पुत्रो भवति साम्पराये परलोकेऽपि यदनेन पिण्डोदकदानादि जनयितुरेव भवेत् । न क्षेत्रिण इति । ननु भार्याया पुत्रस्य च रक्षणपोषणनिवृत्त्यादि सर्वं क्षेत्रिणा क्रियते न कथमस्मिन् पक्षे इति ? उच्यते मोघं वेत्ता कुरुते तन्तुमेतमिति ॥ वेत्ता लब्धा क्षेत्रस्य कुरुते एतं तन्तुं मोघं कुरुते निष्फलोऽस्य प्रयास इत्यभिप्रायः । इतिशब्द औपजङ्घनेरिच्छोपसंहाराय ॥ ३६ ॥

ओरसेरप्राप्तव्यवहारैरपि न कर्तव्य इत्युक्तम् ॥ ४२ ॥

पतितामपि तु मातरं बिभृयादनभिभाषमाणः॥४३

यद्यपि माता भापेत च । तथा च गौतम—"न कर्हिचिन्मातापित्रोरवृत्ति" इति । अवृत्तिरशुश्रूषा अरक्षणं वा॥४३

उक्तः पुत्राणां दायविभागः । दुहितरः किं लभेरन्नित्यत आह—

मातुरलङ्कारं दुहितरस्साम्प्रदायिकं लभेरन्नन्यद्वा ॥ ४४ ॥

साम्प्रदायिकमित्यलङ्कारविशेषः । सम्प्रदायतो लब्धस्साम्प्रदायिकः मातामहेन मातामह्या वा स्वमाने यद्दत्तं तत्साम्प्रदायिकं अन्यत् असाम्प्रदायिकं खट्वादिशयनप्रावरणादिकमात्मनः। एतावदेव दुहितरो लभेरन्, नान्यत् ॥ ४४ ॥

न स्त्री स्वातन्त्र्यं विन्दते ॥ ४५ ॥

दायलब्धे तस्याः स्वातन्त्र्यं भवेत् इतरत्स्वताभिमानेनेत्यभिप्रायः ॥ ४५ ॥

अथाप्युदाहरन्ति—

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हतीति॥

तस्यातस्यामवस्थायामरक्षतामेतेषा दोष ॥ ४६ ॥

## निरिन्द्रिया ह्यदायाश्च स्त्रियो मता इति श्रुतिः॥

'न स्त्रीत्वात-नच' सिद्धो दायप्रतिषेध पुनरनूद्यते निन्दाशेषतया । **निरिन्द्रिया** निर्गतरसा । तदेतदवश्यागन्तव्यानृततामदर्शना र्थम् । आह च—

> शय्यासनमलङ्कारं कामं क्रोधमनार्यताम् ॥
> द्रोहभाव कुचर्या च स्त्रीभ्यो मनुरकल्पयदिति[1] ॥ ४७

## भर्तृहिते यतमानास्स्वर्गं लोकं जयेरन् ॥४८॥

भर्तृहिते स्नापनप्रसाधनमर्दनादिभिर्भर्तारं नातिक्रमेदिति यावत्॥४८

अत्रैव प्रसङ्गात्प्रायश्चित्तमाह—

## व्यतिक्रमे तु कृच्छ्रः ॥ ४९ ॥

व्यतिक्रमः परपुरुषनिमित्तो मानसेन वाचिकेन व्यापार । समानजातीयविषयमेतद्बुद्धिपूर्वं च ॥ ४९ ॥

## शूद्रे चान्द्रायणं चरेत् ॥ ५० ॥

यदा पुन स्वभर्तृबुद्ध्या मैथुनाय सङ्कल्पयते सम्भाषते वा असमानजातीयेन शूद्रेण तदा चान्द्रायणम् । शूद्रे व्यवायस्य कर्तरि सति द्विजातिस्त्री चान्द्रायणं चरेत् कुर्यात् । अम जायमेतत् । कुत ?

---

[1] मनु ९ १७

ब्राह्मणक्षत्रियविशां स्त्रियश्शूद्रेण सङ्गताः ।
अप्रजाता विशुद्ध्यन्ति प्रायश्चित्तेन नेतराः ॥
इति वसिष्ठदृष्टे[1] ॥ ५० ॥

## वैश्यादिषु प्रतिलोमं कृच्छ्रातिकृच्छ्रादींश्चरेत् ॥

वैश्ये क्षत्रिये च व्यवायस्य कर्तरि सतीत्यर्थः । बहुवचनं ब्राह्मण्याः द्वौ कर्तारौ क्षत्रियायाः एक इति त्रयः । प्रतिलोम व्युत्क्रमेणेत्यर्थः । आदिशब्दात्प्राग्द्वौ गृहीतौ । कृच्छ्रातिकृच्छ्रः अतः कृच्छ्रप्रक्रमा एते त्रयः अस्मिन् क्रमेणैव प्रातिलोम्यं वैश्यसम्बन्धे ब्राह्मण्याः कृच्छ्रातिकृच्छ्रः । अस्या एव क्षत्रियसम्बन्धे सत्यतिकृच्छ्रः । क्षत्रियायास्तु वैश्यसंसर्गे कृच्छ्र इति । अमतिपूर्वे तु वसिष्ठ आह—

'प्रतिलोमं चरेयुस्ताः कृच्छ्रं चान्द्रायणोत्तरम्'[2] । इति ॥ अत्र प्रातिलोम्यं प्रथममभोजनं तत त्र्यहमयाचितमित्यादि । चान्द्रायणमुत्तरमस्य । 'चान्द्रायणं वा चान्द्रायणानि' इति गुरुलघुभावे वर्णविशेषे अभ्यासविशेषे चेति व्याख्यातं यज्ञस्वामिभिः ॥ ५१

उक्तं स्त्रीणां ब्राह्मण्यादीनाम् । अथ—

## पुंसां ब्राह्मणादीनां संवत्सरं ब्रह्मचर्यम् ॥ ५२ ॥

संवत्सरं प्राजापत्यमिहाभिप्रेतम् । अत्र पारदारश्च सवर्णाविषयः । मतिपूर्वं चैतत् । अमतिपूर्वे तु वसिष्ठः —'ब्राह्मणश्चेदप्रेक्षापूर्वं ब्राह्मणदारानभिगच्छेदनिवृत्तधर्मकर्मणः कृच्छ्रो निवृत्तधर्मकर्मणोऽ-

[1] वसि. ध. २१ १२.   [2] वसि. ध. २१-१२.

तिकृच्छ्रः । एवं राजन्यवैश्ययोः[1] इति । अनिवृत्तधर्मकर्मा कर्मादिनिवृत्तिहीनस्तद्भार्यागमने कृच्छ्रः । निवृत्तधर्मकर्मा वृत्तवान् । तद्भार्यागमनेऽतिकृच्छ्रः । 'अनिवृत्तधर्मकर्मा वृत्तवान् तद्भार्याया मतिकृच्छ्रः ' इति व्याख्यातम् ॥ ९२ ॥

शूद्रं कटाग्निना दहेत् ॥ ५३ ॥

राज्ञोऽयमुपदेशः । मरणान्तिकं चैतत् । कटः प्रकृतिद्रव्यं वीरणानि । उक्तं च—'शूद्रश्चेद्ब्राह्मणीमभिगच्छेत् वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत्' इति ॥ ९३ ॥

अथाप्युदाहरन्ति—

अब्राह्मणस्य शारीरो दण्डस्सङ्ग्रहणे भवेत्॥

अब्राह्मणः क्षत्रियो वैश्यश्च । तयोश्शारीरो दण्डः अग्नौ प्रक्षेपः कर्तव्यः । कचसङ्ग्रहणे अपराधे । निगुप्तब्राह्मणीगमने मतिपूर्वं वैश्यो लोहितदर्भैर्वेष्टयित्वा अग्नौ प्रक्षेप्तव्यः । राजन्यश्शरपत्रैरिति ॥

अथ प्रपञ्चः—

सर्वेषामेव वर्णानां दारा रक्ष्यतमा धनात्॥

अपीति शेषः ॥ ९९ ॥

अब्राह्मणवध उक्तः । अत्रापवदति—

न तु चारणदारेषु न रङ्गावतरे वधः ।
संसर्जयन्ति ता ह्येतान्निगुप्तांश्चालयन्त्यपि॥

---

[1] २१ ७ [2] वसि. २१ १.

चारणदाराः देवदास्यः । रङ्गावतारः पण्यस्त्रियः । तासु
गमने वधो न कर्तव्यः । येन तासंमंमर्जयन्ति सम्बन्धयन्ति
आत्मना निर्गुणान् रक्षितानपि पुंसो द्रव्यलिप्सया । तानेव स्त्री-
द्रव्यांश्चालयन्ति उत्सृजन्ति च । एवंस्वभावत्वात्तासां तद्गते
प्रायश्चित्तमप्यल्पमेव । 'पशुं वेश्यां च यो गच्छेत्प्राजापत्येन
शुद्ध्यति' इति । तथाऽन्यत्रापि—

जारयुक्तं पारदार्यं च गुरुतल्पत्वमेव च।
चारणादिस्त्रीषु नास्ति कन्यादूषणमेव चेति ॥ ५६ ॥

अथ नानाजीवायतनत्वादपवित्रं स्त्रीक्षेत्रम् । ततस्तत्रोत्पन्नमपि
पुत्रमगूढोत्पन्नकानीनसहोढपौनर्भवाख्यमित्यपवित्रमेतत् । परममत्रा-
देवदत्तव्यवहार्यमित्याशङ्क्याह—

स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासिमासि रजो ह्यासां दुरितान्यपकर्षति ॥

परपुरुषसंसर्गविषयाणि मानसानि वाचिकानि पापानि पुन-
र्दिषादिनिमित्तान्यपकर्षति ॥ ५७ ॥

किञ्च—

सोमश्शौचं ददत्तासां गन्धर्वश्शिक्षितां गिरम्।
अग्निश्च सर्वभक्षत्वं तस्मान्निष्कल्मषास्स्त्रियः॥

तासां स्त्रीणां सोमश्शौचं दत्तवान् । यत एवं तस्मात्ता-
भिर्यच्छौचं क्रियते तच्चैव परिरक्षणीयम् । देवताप्रसादप्रसङ्गा-

विदमन्यदुच्यते—गन्धर्वविशिक्षिता गिरम् भाषणप्रकारम् । अतोऽनुचितभाषणेऽपि तासु क्षान्तेन भवितव्यम् । तथा चोक्तम्—पात्रलक्षणे 'स्त्रीषु क्षान्तम्' इति । अग्निश्च सर्वभक्षत्वं सर्वैर्भोग्यत्व दत्तवान्, यत एव देवताभ्यो दत्तवरा स्त्रियः निष्कल्मषाः अपराधेष्वपि न त्याज्या इत्यभिप्राय ॥ ५८ ॥

किमेष उत्सर्ग ? नेत्याह—

**अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।**
**मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥५९॥**

अधिवेदनमत्र विवक्षितम्, न त्याग । तत्रपि सति सम्भवे । धर्माधिकार पुनरस्यैव । अप्रियवादिन्या तु विपन्न । तस्या अपि ग्रासाच्छादन देयम् ॥ ५९ ॥

अथ पर स्त्रीधर्म—

**संवत्सरं प्रेतपत्नी मधुमांसमद्यलवणानि वर्जये-दधश्शयीत ॥ ६० ॥**

मृत पतिर्यस्या तस्या अय सांवत्सरिको नियम । अत्यन्त ताम्बूलमपि । तद्ग्रहणमेव ब्रह्मचर्यस्यापि ग्रहणम् । तच्च याव ज्जीविकम् ॥ ६० ॥

**षण्मासानिति मौद्गल्यः ॥ ६१ ॥**

अशक्तावनुग्रहोऽयम् । अन्यथा पितृमेधकल्पोक्तेन 'यावज्जीव प्रेतपत्नी' इत्यनेन विरोधस्स्यात् ॥ ६१ ॥

**अत ऊर्ध्वं गुरुभिरनुमता देवराज्जनयेत्पुत्रमपुत्रा ॥ ६२ ॥**

अत ऊर्ध्वं संवत्सरात् पञ्चभ्यो मासेभ्यः गुरुभिश्श्वशुरप्रभृतिभिः अनुमता । सत्सु अन्येषु देवरेषु द्वितीयोऽवरश्च पत्युर्भ्रातृ तस्मात्पुत्रमेकं जनयेत् तावतैव सपुत्रत्वसिद्धेः विवक्षितत्वाच्चैकवचनस्य ॥ ६२ ॥

अत्र देवरनियोगो न स्यादित्याह—

**अथाप्युदाहरन्ति-**

**वशा चोत्पन्नपुत्रा च नीरजस्का गतप्रजा।**
**नाकामा सन्नियोज्या स्यात्फलं यस्यां न विद्यत इति ॥ ६३ ॥**

या पुरुषसम्बन्धं नेच्छति । यस्यामुपगमनफलं न विद्यते गर्भस्य स्रावणात् ॥ ६३ ॥

अन्यत्रापि देवरनियोगादगम्यामाह—

**मातुलपितृष्वसा भगिनी भागिनेयी स्नुषा मातुलानी सखिवधूरित्यगम्याः ॥ ६४ ॥**

स्वसृशब्दो मातृपितृशब्दाभ्यां प्रत्येकं सम्बध्यते । भगिनी सोदर्या । स्नुषा पुत्रस्य भार्या । मातुलानी मातुलस्य पत्नी । सखिवधूः सख्युश्च भार्या ॥ ६४ ॥

अगम्यानां गमने कृच्छ्रातिकृच्छ्रौ चान्द्रायण-
मिति प्रायश्चित्तिः ॥ ६५ ॥

अमतिपूर्वे गमन एतद्द्रष्टव्यम् । ये पुनर्मातुलस्य दुहितरं पितृष्वसुश्च मन्त्रेण संस्कृत्य बन्धुसमक्षं तस्यामेव पुत्रानुत्पादयन्ति चरन्ति च धर्मं तया सह तेषां निष्कृतिर्द्रष्टव्या ॥

एतेन चण्डालीव्यवायो व्याख्यातः ॥ ६६ ॥

व्यवायो गमनम् । एतदप्यबुद्धिपूर्वविषयम् ॥ ६६ ॥

तदाह—

अथाप्युदाहरन्ति-
चण्डालीं ब्राह्मणो गत्वा भुक्त्वा च प्रतिगृह्य च । अज्ञानात्पतितो विप्रो ज्ञानात्तु समतां व्रजेत् ॥ ६७ ॥

समशब्दात्प्रायश्चित्ताभावमाह । समस्तानां निमित्तानां, न व्यस्तानाम् । "अभिषत्य हुत्वा भक्षयेयाः" इतिवत् ॥ ६७ ॥

अथाविधिपूर्वपरिगृहीतगुरुदाराणामधिगमने, विधिपूर्वपरिगृहीतगुरुस्थानीयभार्यायाश्शयनदोषनिमित्तव्यामोहात्स्वभार्याबुद्ध्या ऽधिगमने प्रायश्चित्तान्तरमाह—

पितुर्गुरोर्नरेन्द्रस्य भार्यां गत्वा प्रमादतः । गुरुतल्पी भवेत्तेन पूर्वोक्तस्तस्य निश्चय इति ॥

गुरुः गुरुस्थानीयोऽभिप्रेतः । नरेन्द्रोऽभिषिक्तः । पूर्वोक्त इति अनन्तराभिहितं प्रायश्चित्तं, तच्च कृच्छ्रादित्रयम् ॥ १८ ॥

इदानीं ब्राह्मणस्य स्वकीयवृत्त्या जीवनाशक्तावनुकल्पमाह—

अध्यापनयाजनप्रतिग्रहैरशक्तः क्षत्रधर्मेण जीवेत्प्रत्यनन्तरत्वात् ॥ १९ ॥

अशक्तिः नित्यकर्मावसादो भृत्यावसादो वा । अध्यापनादिष्वेकेनैव जीवनाशक्तो द्वितीयं तृतीयं चाधितिष्ठेत् । तत्रापि एतदुपायासम्भवे गुरूपायः आधेयः । कुत एतत् ।

यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम् ॥ इति स्मरणात् ॥[1]

क्षत्रधर्मः शस्त्रधारणम् । प्रत्यनन्तरत्वात् । प्रतिशब्दोऽत्यन्तानन्तर्ये वर्तते । क्षत्रधर्मो हि वैश्यधर्मानन्तरं ब्राह्मणस्य । अनेनैव दर्शयति क्षत्रधर्मासम्भवे वैश्यधर्मेणोपजीवेदिति । सोपि प्रत्यनन्तर एव शूद्रधर्मव्यपेक्षया । अध्यापनयाजनप्रतिग्रहाणां पूर्वः पूर्वो गुरुः । तदभावे क्षत्रियवृत्तिः । तदलाभे वैश्यवृत्तिरिति ॥ १९ ॥

नेति गौतमोऽत्युग्रो हि क्षत्रधर्मो ब्राह्मणस्य ॥

न क्षत्रधर्मो ब्राह्मणेनास्थेय इति गौतमाचार्यो मन्यते स्म । प्रसिद्धगौतमीये 'तदलाभे क्षत्रियवृत्तिः'[2] इति वचनात् अन्यद्गौतमशास्त्रमस्तीति कल्प्यते । तथा 'आहिताग्निश्चेत्प्रवसन् म्रियेत पुनस्संस्कारं कृत्वा शववच्छौचमिति गौतमः'[3] इति वासिष्ठे । अस्तु

[1] मनु ४ ३ [2] ७-६ [3] ४ ३७

ग्रः अतितीक्ष्णः ' सङ्ग्रामे संस्थानमनिवृत्तिश्च न दोषो हिंसायामाहवे '[1] इत्येवंलक्षणो ह्यसौ ॥ ७० ॥

अथेदानीं विप्रविशोश्च शस्त्रग्रहणे कारणमाह—

अथाप्युदाहरन्ति-

गवार्थे ब्राह्मणार्थे वा वर्णानां वाऽपि सङ्करे ।
गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया ॥

अथशब्दश्चात्र रक्षणप्रयोजनवचनः । वर्णानां सङ्करः अनर्हस्त्रीपुंसलक्षणः । शस्त्रग्रहणे हेतुः—धर्मव्यपेक्षयेति । धर्मबुद्ध्येति यावत् ॥ ७१ ॥

प्रत्यनन्तरत्वादिति हेतुना वैश्यवृत्त्याऽपि जीवनमुक्तं, इदानीं त्वनुवदत्युत्तरविधित्सया—

वैश्यवृत्तिरनुष्ठेया प्रत्यनन्तरत्वात् ॥ ७२ ॥

न हीनवर्णेनोत्कृष्टवर्णवृत्तिरास्थेया । 'न तु कदाचिज्ज्यायसीम्'[2] इति वासिष्ठनिषेधात् । तत्र कृषिवाणिज्यलक्षणादिः वैश्यवृत्तिः । तत्र वाणिज्यविशेषो विहितः । 'तृणकाष्ठमविकृतं विक्रेयम्' इत्येवमादिना ॥ ७२ ॥

अथ कृषावाह—

प्राक्प्रातराशात् कर्षी स्यात् ॥ ७३ ॥

---

[1] गौ. ध. १०-१७

[2] २ २३.

प्रातराशो दिवाभोजनं, तेन च लक्ष्यते वासरस्य पञ्चमो भाग इति । तत्र हि भोजनं विहितं 'पञ्चमे भोजनं भवेत्' इति दक्षवचनात् । अह्नः कालान्तरात्ययोगे वाऽनडुद्भ्यां विहृत्या क्लिष्टौ ततो विसृजेत् ॥ ७३ ॥

तौ विशिनष्टि—

**अस्यूतनासिकाभ्यां समुष्काभ्यामतुदन्नारया मुहुर्मुहुरभ्युच्छन्दयन् ॥ ७४ ॥**

अविद्धघोणाभ्यामनुत्तनासाभ्यामित्यर्थः । अण्डोत्कर्तनेन हि बीजशक्तिः क्षीयते । अतुदन्नारया आरा नाम सलोहको दण्डः तयाऽनडुहः अतुदन् तयोर्व्यथामकुर्वन्नभ्युच्छन्दनमविहतयाऽनक्षल-प्रायाश्च मृदोऽपनयनं प्रियभाषणं कण्डूयनादिना लालनं च तं मुहुर्मुहुः कुर्वन्विलिखेत् भूमिमिति शेषः ॥ ७४ ॥

स्वकर्मणा जीवनाशक्तेन हीनवृत्त्याऽपि जीवनमुक्तम्, अस्यामप्यापदि न परित्याज्योऽग्निः कुत प्रभृति स गृहीत इत्यस्यामाकाङ्क्षायामाह—

**भार्यादिरग्निस्तस्मिन् कर्मकरणं प्रागग्न्याधेयात् ॥ ७५ ॥**

गौतमीयमनेन दायादिपक्षोऽप्यस्ति । आचार्यस्य पुनर्भार्यादिरेवाग्निरित्यभिप्रायः । कर्म गार्ह्यं यदग्न्याधेयात् पूर्वं तस्मिन् गृह्याणि कर्माणि क्रियन्त इति । गृह्योक्तानां कर्मणां पुनरनु-

वादोऽग्निहोत्रादितुल्ययोगक्षेमप्राप्ति हेतुत्वज्ञापनार्थं अग्न्याधेयात्पूर्वं गार्ह्याणां शूलगवादीनामनुष्ठानम् ॥ ७९ ॥

अग्न्याधेयप्रभृत्यथेमान्यजस्राणि भवन्ति यथैतदग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणमुदगयनदक्षिणायनयोः पशुः चातुर्मास्यानि ऋतुमुखे षड्ढोता वसन्ते ज्योतिष्टोम इत्येवं क्षेमप्रापणम् ॥ ७६ ॥

क्षेमप्रापणं मोक्षः । एवंनित्यकर्मनिरतः प्रतिषिद्धकर्मवर्जी गृहस्थोऽपि विमुच्यते इत्यभिप्रायः ।

निस्यनैमित्तिके कुर्यात्प्रत्यवायजिघांसया ।
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ इति ॥

इदानीं विहिताकरणे प्रतिषिद्धसेवने च दोषं वक्तुमुपक्रमते—

अथाप्युदाहरन्ति-

न दिवास्वप्नशीलेन न च सर्वान्नभोजिना ।
कामं शक्यं नभो गन्तुमारूढपतितेन वा ॥

न शक्यं गन्तुमिति सम्बन्धः । दिवास्वप्नशीलेनेति शब्देन विहिताकरणस्वभावो लक्ष्यते । स्वप्नो निद्रा मनोवृत्तिविशेषः । 'अभावप्रत्ययालम्बनावृत्तिर्निद्रा' इत्यागमः । हिताहितप्राप्तिपरिहारोपायभूतशुभाशुभकर्मानुष्ठानवर्जिताकलितचेतसो हि पुंसो नास्ति निद्राऽवसरः । अप्रसन्ने हि चेतसि निद्रा भवति । अलसो वा

दिवास्वप्नशील । सर्वान्नभोजिशब्देनापि प्रतिषिद्धमेवा कथ्यते । भोज्याभोज्य-व्यवस्था यस्य नास्तीत्यभिप्राय । मुनिरत्र व्यापार-मात्रोपलक्षणार्थं आरूढपतितः तापस परिव्राजकवृत्त्या व्यवस्थित । एतैर्नभस्स्वर्गं गन्तुं प्राप्नुमशक्यमित्यर्थ ॥ ७७ ॥

**दैन्यं शाठ्यं जैह्म्यं च वर्जयेत् ॥ ७८ ॥**

आत्मन क्षीणत्वप्रदर्शनेन वा विष्णुना दैन्यम् । शक्तौ सत्यामपि परोपकाराकरणं शाठ्यम् । जैह्मच कौटिल्यम् । चशब्दादश्लीलवादिकमपि । दन्य पुन प्रयत्नेन ? वर्जनीयम् ॥७८॥

अस्मिन्नर्थे गाथामाह—

**अथाप्यत्रोशनसश्च वृषपर्वणश्च दुहित्रोस्संवादे गाथामुदाहरन्ति ॥ ७९ ॥**

उशना शुक्र । तस्य दुहिता देवयानी । वृषपर्वा तु क्षत्रिय तस्य दुहिता शर्मिष्ठा । तयोस्संवादोपि सुवाद ॥ ७९ ॥

गाथाश्लोक —

**स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः । अ-**
**थाहं स्तूयमानस्य ददतोऽप्रतिगृह्णत इति ॥**

प्रतिशास्त्र प्रभाषते । तत्र पूर्वार्धेन देवयान्या पितुरुश-नसो दीनस्वभावत्व कथयति । उत्तरेण चात्मन पितुर्वृषपर्वण सर्वतो विपरीतस्वभावत्वम् ॥ ८० ॥

इति श्रीगोविन्दस्वामिविरचिते बौधायनधर्मसूत्र विवरणे द्वितीयप्रश्ने द्वितीयोऽध्याय.

भूयोपि नियमायोच्यते—

**तपस्यमपोऽवगाहनम् ॥ १ ॥**

तपसे हितं तपस्यम् । अवगाहनं स्नानम् । तपस उपक्रमे कर्तव्यमित्यर्थः ॥ १ ॥

**देवांस्तर्पयित्वा पितृतर्पणम् ॥ २ ॥**

ननु 'पितृतर्पणं भवेत्' इति ऋषितर्पणादनन्तरं पितृतर्पणं किलान्यत्रोच्यते । इह तु देवतर्पणादनन्तरम्, अत आनन्तर्ये विकल्पः । यद्वा—तपस्येऽवगाहने एव विशेषः ॥ २ ॥

**अनुतीर्थमप उत्सिञ्चेदूर्जं वहन्तीरिति ॥ ३ ॥**

अनुतीर्थं तीर्थमनुकूलमित्यर्थः । एतस्मादेव गम्यते जले तर्पणमिति । अयं हि स्नानविध्यनुवाके कृत्स्नशः पठ्यते । यद्वा—नदीतरणानन्तरमेतदुत्सेचनं कर्तव्यम् ॥ ३ ॥

**अथाप्युदाहरन्ति-**

**स्रवन्तीष्वनिरुद्धासु त्रयो वर्णा द्विजातयः ।**
**प्रातरुत्थाय कुर्वीरन् देवर्षिपितृतर्पणम् ॥**

तस्यामेव प्रातस्स्नानं विधीयते तटाकादिषु कुल्यासु वा ॥

इतरथा दोषमाह—

**निरुद्धासु न कुर्वीरन्नंशभाक्तत्र सेतुकृत् ॥ ५ ॥**

सेतुकृत् खननकृत् स्नानतर्पणादिपुण्यफलांशभाग्भवति । भवति च पुण्यकर्ता सेतुकृदेनोंशभाक् । आह च—

परकीयनिपानेषु न स्नायाच्च कदाचन ।
निपानकर्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते[1] ॥ इति ॥

निपानं तटाककूपादि ॥ ६ ॥

उपसंहरति—

**तस्मात्परकृतान् सेतून् कूपांश्च परिवर्जयेदिति ॥**

एवं निर्वाहकं परकीयकेनोपन्यस्यति स्म—

**अथाप्युदाहरन्ति—**

**उद्धृत्य वाऽपि त्रीन्पिण्डान् कुर्यादापत्सु नो सदा । निरुद्धासु तु मृत्पिण्डान् कूपात्त्रीनब्घटांस्तथेति ॥ ७ ॥**

सदा न कुर्यान्निरुद्धास्विति सम्बन्धः । अविशेषितेन पिण्डशब्देनावकरादीनां पिण्डा गृह्यन्ते । आपत्सु स्रवन्तीनां अनिरुद्धानां अभावे कूपे चेत् स्नानं समुपस्थितं तदा त्रीनपां पूर्णान् घटानुद्धृत्य स्नानम् ॥ ७ ॥

आपः प्रस्तुतास्तत्राह—

**बहु प्रतिग्राह्यस्य प्रतिगृह्याप्रतिग्राह्यस्य वाऽया-**

---

[1] मनु. ४-२०१

ज्यं वा याजयित्वाऽनाश्यान्नस्य वाऽन्नमशित्वा तरत्समन्दीयं जपेदिति ॥ ८ ॥

काश्यपो वामदेवो वा ऋषिः । अप्स्विति शेषः । उत्तरं च तुर्चं तरत्समन्दीयमप्सु जपेदिति । बहु भृत्यभरणक्षमादधिकं द्रष्टव्यम् । अप्रतिग्राह्यस्य पतितादेर्वा परिग्रहजुष्टमसुरादेर्वा स्वभावजुष्टम् । अभोज्यान्नोऽनाश्यान्नः । एतच्च रहस्यप्रायश्चित्तमाह गौतमः—'रहस्यं प्रायश्चित्तमविख्यातदोषस्य चतुरृचं तरत्समन्दी'[1] इत्यादि ॥ ८ ॥

एतेऽप्यनाश्यान्नाः, एनस्वित्वात्, के ते?

गुरुसङ्करिणश्चैव शिष्यसङ्करिणस्तथा । आहारमन्त्रसङ्कीर्णा दीर्घं तम उपासत इति ॥

गुरवो व्याख्याताः । प्रायश्चित्तीयतां प्राप्याकृतप्रायश्चित्तस्सद्भिः संसर्गं न व्रजेदिति । आह—

प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ।
न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥ इति ॥

नित्योदकीत्यत्र यदारब्धं तदेव पुनः प्रस्तौति प्रसक्तानुप्रसक्तं परिसमाप्य—

अथ स्नातकव्रतानि ॥ १० ॥

वक्ष्यन्त इति शेषः । एतान्यपि प्रजापतिव्रतानि । स्नातका अप्युक्ताः । अथावशिष्टानि ॥ १० ॥

---

[1] गौ. ध. २४-१.

**सायं प्रातर्यदशनीयं स्यात्तेनान्नेन वैश्वदेवं बलिमुपहृत्य ब्राह्मणक्षत्रियविट्छूद्रानभ्यागतान्यथाशक्ति पूजयेत् ॥ ११ ॥**

यदशनीयमित्यनेन हविष्यस्यापि ग्रहणं केचिदिच्छन्ति । तत्पुनर्युक्तायुक्ततया परामृश्यम् । वैश्वदेवं कृत्वा बलिं चोपहृत्य इत्यध्याहारः । बलिहरणानन्तरं चाभ्यागतान् यथाशक्ति पूजयेत् भोजयेदित्यर्थः । तृणभूम्युदकादीनां पूर्वमेवोक्तत्वात् ॥ ११ ॥

अथानुकल्पमाह—

**यदि बहूनां न शक्नुयादेकस्मै गुणवते दद्यात् ॥**

**यो वा प्रथममुपागतस्स्यात् ॥ १३ ॥**

गुणवान् कश्चन विद्यानुष्ठानसम्पन्नः पण्डित एव वा ।
वैश्वदेवे तु संप्राप्तः सोऽतिथिस्स्वर्गसङ्क्रमः[1] ॥ इति ॥

**शूद्रश्चेदागतस्तं कर्मणि नियुञ्ज्यात् ॥ १४ ॥**

ततस्तं भोजयेदिति शेषः । द्विजादीनां तु विद्यातपसी एव भोजयितुं पर्याप्ते । शूद्रस्याभ्यागतस्य तदसम्भवात्तत्स्थाने कर्मकरणम् । ततश्च निर्गुणे द्विजादावभ्यागते तमपि कर्मणि नियुञ्ज्यादित्युक्तं भवति । युक्तं चैतद्वासिष्ठवचनात्—'अश्रोत्रिया अननुवाक्या अनग्नयश्शूद्रसधर्माणो भवन्ति'[2] इति । आचार्योऽपि विवक्ष्यति—'ग्रामे तान् धार्मिको राजा शूद्रकर्मसु नियोजयेत्' इति । कर्म च काष्ठभेदनमृत्तिकासान्द्रीकरणादि ॥ १४ ॥

---

[1] पराशरस्मृति. १५८.  [2] वा. ध ३-१.

श्रोत्रियाय वाऽग्रं दद्यात् ॥ १५ ॥

यदि बहूनां न शक्नुयात् इत्यनुवर्तते । तत्राह–शिखण्डप्रमाणाः चत्वारो ग्रासा एकैकं भक्षं चतुर्गुणितं पुष्कलमित्युच्यते । तत्पुष्कलचतुष्टयं चाग्रम् ॥ १५ ॥

ये नित्या भाक्तिकास्स्युस्तेषामनुपरोधेन संविभागो विहितः ॥ १६ ॥

भक्तमन्नं नित्यं ये भजन्ते पुत्रदारभृत्यादयः । तेषामुपरोधः पीडा तदभावोऽनुपरोधः । विभागो दानम् । तदुपरोधे सति न कर्तव्यम् । आह च–

भृत्यानामुपरोधेन यः करोत्यौर्ध्वदेहिकम् ।
तद्भवत्यसुखोदर्कं जीवतश्च मृतस्य च ॥ . इति ॥ १६ ॥

न त्वेव कदाचिददत्वा भुञ्जीत ॥ १७ ॥

अदत्वा भोजने सति दोषगुरुत्वख्यापनार्थो निपातद्वयप्रयोगः ॥ १७ ॥

पुनरप्यदत्वा भोजननिन्दामाह—

अथाप्यत्रान्नगीतौ श्लोकावुदाहरन्ति–

यो मामदत्वा पितृदेवताभ्यो भृत्यातिथीनां च सुहृज्जनस्य । सम्पन्नमश्नन्विषम-

न्ति मोहात्तमद्म्यहं तस्य च मृत्युरस्मि॥
हुताग्निहोत्रः कृतवैश्वदेवः पूज्यातिथीन्
भृत्यजनावशिष्टम् । तुष्टश्शुचिश्श्रद्-
धदत्ति यो मां तस्यामृतं स्यां स च मां
भुनक्ति ॥ १८ ॥

अन्नाभिमानिन्या देवतया गीतावेतौ श्लोकौ निन्दास्तुतिरूपौ। अनयोः पूर्वः निन्दारूपः । उत्तमो विपरीतरूपः । पितृदेवताभ्योऽन्नदानं वैश्वदेवबलिहरणम् । महायज्ञे अतिथीनां जनस्यैव । चतुर्थ्यर्थे षष्ठी । सम्पन्नं मृष्टम् । तमद्म्यहं तस्य च मृत्युरस्मि दारिद्र्यं व्याधिं चोत्पादयामीत्यर्थः । अग्निहोत्रशब्दस्सायंप्रातः कर्तव्यहोमोपलक्षणार्थः ॥ १८ ॥

अथान्नदानप्रसङ्गाद्द्रव्यप्रदानमेतेभ्यः कर्तव्यमित्याह—

सुब्राह्मणश्रोत्रियवेदपारगेभ्यो गुर्वर्थनिवेशौ-
षधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसं-
योगवैश्वजितेषु द्रव्यसंविभागो यथाश-
क्ति कार्यो बहिर्वेदिभिक्षमाणेषु ॥१९॥

अस्मिन् सूत्रे चतुर्थ्यर्थे सप्तम्यौ द्रष्टव्यौ । यद्वा—निमित्तसयोग एव । चतुर्थ्यन्त वेदपारगेभ्य इत्यनुकृष्य द्रष्टव्य । एव च तेभ्य एव दानमप्युक्त भवति सुब्राह्मणः आचारस

म्पन्न ग्रासमात्रप्रयोजनवान् । श्रोत्रियस्तदनुष्ठानपर । वेदस्य पार पर्यन्त निष्ठा तदर्थज्ञान सद्गमयतीति वेदपारग विचार सिद्धवेदार्थज्ञानवानित्यर्थ । गुर्वर्थ गुरुसरक्षणपर । निवेशो विवाह । स च सन्तानार्थो यस्य स निवेशार्थ । औषध भेषजम् । वृत्तिक्षीणो विहीनधन । वक्ष्यमाण प्रसिद्ध । अध्ययनसयोगो ज्ञानैरशरण । अध्वसयोगः पन्था अवति । विश्वजिन्नामा सर्वस्वदक्षिण क्रतु तद्याजी वैश्वजित स चान्येषामपि सर्ववेदसदायिना प्रदर्शनार्थ । एतेभ्यो बहिर्वेदिना अक्रतुकालेऽपि याचमानेभ्यो द्रव्यदान यथाशक्ति कार्यम् । अत्र मनु —

सान्तानिक यक्ष्यमाणमध्वग सर्ववेदसम् ।
गुर्वर्थपितृमात्रर्थ स्वाध्यायार्थ्युपतापिन ॥

नवैतान् स्नातकान् विद्यात् ब्राह्मणान् धर्मभिक्षुकान् ।
निस्स्वेभ्यो देयमेतेभ्यो दान विद्याविशेषतः* ॥ इति ॥

## कृतान्नमितरेषु ॥ २० ॥

कृतान्न पकान्नम् । आह च—'इतरेभ्यो बहिर्वेदि कृतान्न देयमुच्यते'* इति । इतरेभ्योऽतिथिभ्य बहिर्वेदि कृतान्नमेव देय नियमत । सान्तानिकादिभ्य पुन कृतान्नमकृतान्न च ॥२०॥

तदिद पूर्वोक्तमातिथ्य, तददनमिहानूच्यते—

सुप्रक्षालितपादपाणिराचान्तश्शुचौ संवृते देशेऽन्नमुपहृतमुपसङ्गृह्य कामक्रोधद्रोह-

* मनु ११,१२

**लोभमोहानपहत्य सर्वाभिरङ्गुलीभिः शब्दमकुर्वन्प्राश्नीयात् ॥ २१ ॥**

आत्मयाजिनो भोजिनो विधिरयम् । सवृते देशे उपविश्य भुञ्जीतेति शेषः । फलकादौ पादं पात्रं वाऽऽरोप्य न भोक्तव्यमिति । उपहृतमानीतम् । उपसङ्गृह्य प्रीतिपूर्वकमभिवाद्य कामादीन्वर्जयित्वा शब्दं सीत्कारादयकुर्वन् ॥ २१ ॥

**न पिण्डशेषं पात्र्यामुत्सृजेत् ॥ २२ ॥**

जग्ध्वाऽवशिष्टस्य पिण्डस्याभोज्यत्वात्तत्पात्र्यामुत्सर्जने पुनरादानमसङ्गाच्च । अतः यावद्ग्रसितुं शक्नोति तावदेव आददीतेति गम्यते ॥

**मांसमत्स्यतिलसंसृष्टप्राशनेऽप उपस्पृश्याग्निमभिमृशेत् ॥ २३ ॥**

संसृष्टशब्दः प्रत्येकमभिसम्बध्यते । यावद्भिर्मांसपरमाणुभिर्मिश्रिते ओदने तद्रसोपलब्धिर्भवति तावद्भिःसंसृष्टस्य प्राशने इदं प्रायश्चित्तम् । ननु मांससंसृष्टनिषेधादेव मत्स्यसंसृष्टस्यापि निषेधप्रसिद्धेः कुतः • पृथगुपादानं, मत्स्यार्थमित्युच्यते । मत्स्यगन्धोपलब्धावपि प्रायश्चित्तं भवतीत्यभिप्रायः । तिलसंसृष्टं तिलौदनम् ॥ २३ ॥

**अस्तमिते च स्नानम् ॥ २४ ॥ पालाशमासनं पादुके दन्तधावनमिति वर्जयेत् ॥२५॥ नोत्सङ्गेऽन्नं भक्षयेत् ॥२६॥**

आसन्द्यां न भुञ्जीत ॥ २७ ॥ वैणवं दण्डं धारयेद्रुक्मकुण्डले च ॥ २८ ॥ पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेत् ॥२९॥ न बहिर्मालां धारयेत् ॥३०॥ सूर्यमुदयास्तमये न निरीक्षेत ॥ ३१ ॥

अदृष्टार्थमेतद्व्रतम् ॥ २४—३१ ॥

नेन्द्रधनुरिति परस्मै प्रब्रूयात् ॥ ३२ ॥ यदि ब्रूयान्मणिधनुरित्येव ब्रूयात् ॥ ३३ ॥

न परस्मा इत्यनेन आत्मनो निरीक्षणे न दोषः । इति करणलिङ्गात् शब्दोच्चारणनिषेधमध्यवस्यामः ॥ ३२—३३ ॥

पुरद्वारीन्द्रकीलपरिघावन्तरेण नातीयात् ॥

इन्द्रकीलः पुरद्वारे स्थापितः काष्ठविशेषः । परिघा तु प्रसिद्धा । तावन्तरेण न गच्छेत् ॥ ३४ ॥

प्रेङ्खयोरन्तरेण न गच्छेत् ॥ ३५ ॥

प्रेङ्खो निखातदारुलम्बमाना क्रीडाफलका तयोर्द्वयोरन्तरेण गमननिषेधः ॥ ३५ ॥

वत्सतन्त्रीं च नोपरि गच्छेत् ॥ ३६ ॥

तन्ती दाम तच्छ्रुन निषिध्यते । चशब्दात् गोतन्ती च ॥

भस्मास्थिरोमतुषकपालापस्नानानि नाधितिष्ठेत् ॥ ३७ ॥

रोमशब्द केशश्मश्रुणोरपि प्रदर्शनार्थः । अपस्नानं स्थलस्नानभूतजलं गात्रोद्वर्तनमलं वा ॥ ३७ ॥

गां धयन्तीं न परस्मै प्रब्रूयात् ॥ ३८ ॥

स्वकीयामपि ता न वारयेत् । एव न परस्मा आचक्षीत। किमयं स्तनधयनीयस्य ख्यापननिषेध, कि वा धेन्वा इति । तत्र गा धयन्तीमिति श्रवणाद्धेन्वा एव कश्चित्प्राशित् पिबन्त्या इति । केचित्पुनस्तस्यास्तथा प्रीत्यभावात् यथा वत्सस्य मातु' स्तनात् पिबत, तत्र हि सान्नेश प्रथयन्ति वारयन्ति च । कथ धयन्तीमितिशब्देन स्तनमपिबन्ती गम्यते' । गा धयन्तीं वत्समूत्रादिकमिति योजनया । अनेन चातीव प्रस्तुतावस्था लक्ष्यते ॥ ३८ ॥

नाधेनुमधेनुरिति ब्रूयात् ॥ ३९ ॥

क्षीरिणी गौर्धेनु । अधेनुस्तद्विपरीता । उच्चारणनिषेधाददृष्टकल्प्यम् ॥ ३९ ॥

शुक्ता रूक्षाः परुषा वाचो न ब्रूयात् ॥४०॥

यथाऽश्रोत्रिय वदन्ति श्रोत्रिया इति । रूक्षास्तु विद्यमाने दोषे गुणख्यापना । यथाऽन्ध चक्षुष्मानिति ॥ ४० ॥

**नैकोऽध्वानं व्रजेत् ॥ ४१ ॥**

मध्ये व्याध्याद्युत्पत्तिप्रसङ्गात् । अतस्सद्वितीयो व्रजेत् ॥४१

**न पतितैर्न स्त्रिया न शूद्रेण ॥ ४२ ॥**

सह व्रजेदिति शेषः । एतैस्सद्वितीयो न स्याद्गमन इत्यर्थ.

**न प्रतिसायं व्रजेत् ॥ ४३ ॥**

प्रमादभयादेव । नक्तं सायम् ॥ ४३ ॥

**न नग्नस्स्नायात् ॥ ४४ ॥**

**न नक्तं स्नायात् ॥ ४५ ॥**

अनयो पूर्वप्रतिषेध स्नानमात्रे । उत्तरस्तु नित्यनैमित्तिके तत्र हि—'शक्तिविषये मुहूर्तमपि नाप्रयतस्स्यात्' इत्युक्तम् नैमित्तिकस्यापि महानिशि प्रतिषेधं केचिदिच्छन्ति ॥ ४४–४५ ॥

**न नदीं वाहुकस्तरेत् ॥ ४६ ॥**

बाहुभ्या तरतीति बाहुकः ॥ ४६ ॥

**न कूपमवेक्षेत ॥ ४७ ॥**

आत्मान तत्र द्रष्टुमिति शेष । इतरथा कूपपतिताना बालादीनामुत्तारणाशक्ते ॥ ४७ ॥

**न गर्तमवेक्षेत ॥ ४८ ॥**

अधोमुख एव निम्नो हि भूभागः गर्तो भवति। को विशेषः कूपगर्तयोरिति चेत्—कूपो नाम दुःखेनाशयोदकं पातुं खात इत्यर्थः। यद्वा—कोऽस्य्दकमुद्धृत्य पातुमिति। अनेवंविधः गर्तः॥

**न तत्रोपविशेद्यत एनमन्य उत्थापयेत्॥४९**

सर्वत्र पारवश्यं पुरुषस्य दुःखमित्युपदेशः। राजभवननिर्दिष्टासनानिषेधोऽयम्। स्वयमारोढुमशक्यं देशं भृत्यारोहणनिरोधो वा 'सूर्यमुद्यास्तमये न निरीक्षेत' इत्यारभ्योक्तानां प्रतिषेधानां केचिददृष्टार्थाः केचिद्दृष्टार्थाः केचिदुभयार्थाः इत्यवश्यं परिग्रहणीया एव। नो चेत् 'स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्' इति विवरत्स्यात्॥४९॥

**पन्था देयो ब्राह्मणाय गवे राज्ञे ह्यचक्षुषे।**
**वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च॥**

अब्राह्मणेभ्योऽप्यचक्षुःप्रभृतिभ्यः पञ्चभ्यो वर्त्मसङ्कटे समुपस्थिते पन्थानं दातुं स्वयं तस्मादपसरेदेव। चशब्दोऽनुक्तोपसंहारार्थः। तेन 'चक्रिणेऽन्धकाय यज्ञसमुपजीविने तपस्विने हिताय वा' इत्यादि ब्राह्मणादि ग्राह्यं॥५०॥

ब्राह्मणेभ्यो दत्वा पन्थानं कथंलक्षणं ग्रामं प्रति गच्छेदित्यत आह—

**प्रभूतैधोदकयवससमित्कुशमाल्योपनिष्क्रमणमाढ्यजनाकुलमनलससमृद्धमार्यजनभूयिष्ठमदस्युप्रवेश्यं ग्राममावसितुं यतेत धार्मिकः॥५१॥**

प्रभूतशब्द एधादिभिस्तृभि प्रत्येकमभिसंबन्धनीय । एधः इन्धन यवस दोह्याना गवादीना भक्ष । उपनिष्क्रमणं विहारभूमि । आढ्याः धनवन्त । अलसा निरुत्साहा । तद्विपरीता अनलसाः । आर्याः पण्डिता । दस्यवश्चोरा तैरप्रवेश्य अदूष्यम् । यत्र हि धर्माश्रमाविरोधेन जीवन सुकर भवति तत्र धार्मिको नित्य निवसेदित्यर्थ ॥ ९१ ॥

उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
उषित्वा द्वादश समाः शूद्रसाधर्म्यमृच्छति ॥

उदपान कूप एवोदक नान्यन् यस्मिन् ग्रामे स एवमुक्त । वृषलीशब्द प्राक् प्रदानाद्रजस्वलाया वाचक । तथा हि—

पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः[1] ॥

वृषलीपतिरिति शूद्राया पतित्वे निषेक निन्दति । धर्मानुपपत्ते । एवंविधो धार्मिकोपि शूद्रसाधर्म्यमृच्छति । तस्मादल्पोदके ग्रामे धार्मिको न निवसेदित्यभिप्राय ॥ ९२ ॥

ग्रामनिवास उक्त, नगरे त्वनेवंविधेऽपि निवासनिषेधाय निन्दति—

पुररेणुकुण्ठितशरीरस्तत्परिपूर्णनेत्रवदनश्च ।
नगरे वसन् सुनियतात्मा सिद्धिमवाप्स्यतीति न तदस्ति ॥ ५३ ॥

---

1 मनु ३-१९

कुण्ठितं भच्छादितम् । तच्छब्देन पुरेणुरेव परामृश्यते । तेन परिपूरिते यस्य नेत्रे वदन च स तत्परिपूर्णनेत्रवदनः । उष्ट्रखरविड्वराहगजाश्वपुरीपमूत्रसुराकोच्छिष्टशवकपालास्थितुषभस्माद्युपहतसर्वावयव इत्यर्थ । एवंविधस्सुनियतेन्द्रियोपि नगरे वसन् परलोक नाप्नोतीत्यर्थ ॥ ५३ ॥

रेणु प्रस्तुतस्तत्राह—

**रथाश्वगजधान्याना गवां चैव रजश्शुभम् ।**
**अप्रशस्तं समूहन्याः श्वाजाविखरवाससाम्॥**

पूर्वाणि पञ्च रजांसि शुभानि । इतराणि षट् अप्रशस्तानि वर्ज्यानि । समूहनी समार्जनी ॥ ५४ ॥

**पूज्यान्पूजयेत् ॥ ५५ ॥**

अवसरौचित्योपायेनायमपि श्रेयस्करो नियम । उक्त च— 'प्रतिबध्नाति हि श्रेय पूज्यपूजाव्यतिक्रम '[1] । इति ॥ ५५ ॥

**ऋषिविद्वन्नृपवरमातुलश्वशुरर्त्विजः ।**
**एतेऽर्घ्याश्शास्त्रविहिताः स्मृताः कालविभा-**
**गशः ॥ ५६ ॥**

ऋषिर्मन्त्रार्थज्ञ । विद्वान् साङ्गस्येतिहासस्य प्रवक्ता । नृपोऽभिषिक्त क्षत्रिय । वरो वोढा दुहितु । इतरे प्रसिद्धा । अर्घ्या मधुपर्कार्हा इति शास्त्रेण वेदेन चोदिता स्मृताश्च

[1] रघुवंशे १ ७९

स्मृतिकर्तृभिः मन्वादिभिरप्यनुमोदिताः । यद्वा—कालविभागेन स्मृताः ॥ ९६ ॥

कोसौ कालविभाग इत्याह—

ऋषिविद्वन्नृपाः प्राप्ताः क्रियारम्भे वरर्त्विजौ ।
मातुलश्वशुरौ पूज्यौ संवत्सरगतागताविति ॥

प्राप्ताः प्रवासादभ्यागताः । क्रियारम्भः पुंसवनयागादीनामारम्भः । संवत्सरपर्यागतौ संवत्समुषित्वाऽऽगतौ ॥ ९७ ॥

अग्न्यगारे गवां मध्ये ब्राह्मणानां च सन्निधौ ।
स्वाध्याये भोजने चैव दक्षिणं बाहुमुद्धरेत् ॥

स्वाध्याये वर्तमाने भोजनेऽपि बाहोरुद्धरणं नमस्काररूपेण। चशब्दः प्रशस्तमंगल्यदेवायतनप्रज्ञातवनस्पत्यादिप्रदर्शनार्थः ॥

उत्तरं वासः कर्तव्यं पञ्चस्वेतेषु कर्मसु ।
स्वाध्यायोत्सर्गदानेषु भोजनाचमनयोस्तथा ॥

तृतीयं वस्त्रमुपवीतं व्यतिषज्यते तदुत्तरीयम् । तत् स्नातकस्य प्राप्यमप्येषु कर्मस्ववश्यं कर्तव्यमित्युच्यते । उत्सर्गो मूत्रपुरीषकरणम् ॥ ९९ ॥

हवनं भोजनं दानमुपहारः प्रतिग्रहः ।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥६०

जान्वोर्द्वयोरन्तरा दक्षिणं बाहुं निधायैतानि कार्याणीत्यर्थः ।

उपहारोऽध्यारोहणम् । यद्वा—प्रसिद्ध एवोपहारो देवगुरुविषय ॥

अन्नदान स्तूयते—

**अन्ने श्रितानि भूतानि अन्नं प्राणमिति श्रुतिः।**
**तस्मादन्नं प्रदातव्यमन्नं हि परमं हविः ॥ ६१॥**

अन्ने श्रितानि अन्नावष्टम्भानि जङ्गमानि च । 'अन्न प्राणमन्नमपानम्'* इति श्रुति । देवा अप्यन्नावष्टम्भा एव । हुत-प्रहुतादयस्तेषामन्नानि । तस्माद्यथाशक्त्या दातव्यम् ॥ ६१ ॥

**हुतेन शाम्यते पापं हुतमन्नेन शाम्यति ।**
**अन्नं दक्षिणया शान्तिमुपयातीति नश्श्रुतिरिति॥**

हुतं होम कूश्माण्डगणहोमादिलक्षण । तेन **पापं शाम्यते** । हुतविषय च न्यूनातिरिक्तमन्नदानेन शाम्यति । अन्नदानविषय च न्यूनातिरिक्तमस्वादुना कृत प्रियवचनाभावनिमित्तं च दक्षिणया शाम्यति । वक्ष्यति ह्येतान्—

भोजयित्वा द्विजानन्ते पायसेन च सर्पिषा ।
गोभूतिलहिरण्यानि भुक्तवद्भ्यः प्रदाय च ॥

इति । चशब्दोऽवधारणार्थ । सर्वत्रात्र प्रमाणमस्माक श्रुतिरेवेत्यर्थ । सा च 'तस्मादन्न ददन् सर्वाण्येतानि ददाति'† इत्येवमादीका ॥६२॥

इति बोधायनधर्मसूत्रविवरणे गोविन्दस्वामिकृते
तृतीयप्रश्ने तृतीयोऽध्याय



* तै ब्रा २ ८-८ † यात्तिरी ६१.

यथा स्नातकस्यान्नदानमवश्यं कर्तव्यं, एवमुपनीतमात्रस्य सन्ध्योपासनं प्रत्यहमवश्यं करणीयमित्याह—

**अथातस्सन्ध्योपासनविधिं व्याख्यास्यामः ॥१**

अथशब्दो मङ्गलार्थः । तस्मिन् खल्वर्थे स्मर्यते—

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ इति॥

माङ्गल्यहेतुतामुपदर्शयति सन्ध्योपासनं हि सर्वेभ्यः कर्मभ्यो मङ्गलकरम् । सन्ध्या नाम रात्रेर्वासरस्य चान्तरालकालवर्ती सूर्यः । उपासनं तत्र प्रणवव्याहृतिसहिततत्सवितुरितिमन्त्रोच्चारणजन्यस्तद्विषयस्सन्ततो मनसो व्यापारः । इदमेवात्र प्रधानम् । यदन्यत्तदङ्गम् । तथा च ब्राह्मणम्—'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते'* इति । कुर्वन् प्रदक्षिणं मन्त्रोच्चारणं वा । ब्राह्मणग्रहणं ऋणश्रुतिवत् । विधिमनुष्ठानक्रमं वक्ष्याम इति सङ्ग्रहः स्तः । तत्र कालो वक्ष्यते—'सुपूर्वामपि पूर्वामुपक्रम्य' इत्यत्र ॥ १ ॥

**तीर्थं गत्वाऽप्रयतोऽभिषिक्तः प्रयतो वाऽनभिषिक्तः प्रक्षालितपादपाणिरप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति ॥ २ ॥**

कर्तृसंस्कारोऽयम् । तीर्थं नदीदेवखातादि बहिर्ग्रामाज्जलाशयः।

---

* तै. आ, २-२.

तत्र गतम्मनः अप्रयतश्चेत्स्नायादेव । प्रयतस्तु न स्नायात् । स्नानाचमनयोर्विकल्पः । स च शक्त्यशक्त्यपेक्षः । प्रक्षालितपादपाणिरित्यादि अभिषिक्तानभिषिक्तयोस्साधारणम् । प्रक्षालनं चाचमनात् । 'अभ्यर्हितं पूर्वम्' इति पाणेः पूर्वनिपाताभावश्छान्दसः । अत्रापामाचमनं समन्त्रं वेदितव्यम् । मन्त्रश्च—'अग्निश्च मा मन्युश्च'* इत्यनुवाकस्सायंकाले । 'सूर्यश्च मा मन्युश्च'* इति प्रातः । प्रत्यहं हस्तपादादिभिः पापकरणस्यालेपार्थं भाषितत्वात्तदपलेपनसमर्थत्वाच्चानयोः । प्रक्षालनाचमनप्रोक्षणानि च बाह्याभ्यन्तरमलापलेपनार्थानि गम्यन्ते । प्रयतो भवतीति सूत्रान्ते निगमनात् । अत एव च स्नानमप्यत्र 'हिरण्यशृङ्गम्'† इत्येवमादिभिः समन्त्रकमेव द्रष्टव्यम् । वक्ष्यति सन्ध्योपासनफलप्रदर्शनव्याजेन मान्त्रवर्णिकमेव पापप्रमोचनम्—'यदुपस्पृशति पापम्' इत्येवमादिना । वसिष्ठश्चैतमर्थमनुमोदमान उपलक्ष्यते—'अथाचामेदग्निश्चेति सायं सूर्यश्चेति प्रातः मनसा पापं ध्यात्वा निवदन्'[1] इति । यद्यपि रहस्यप्रायश्चित्तप्रकरण इदं पठ्यते । तथाऽपि वाक्यादविगानसमाचारादहरहरप्यवगन्तव्यम् । सुरभिमती 'दधिक्राव्णः' इत्यृक् । अब्लिङ्गाः अब्देवत्याः ताश्च 'आपो हि'[1] इति तिस्रः । वारुण्यो वरुणदेवत्याः ताश्च 'यच्चिद्धि ते'[4] इति तिस्रः । केचित् 'अव ते हेड'[2] इति 'इमं मे वरुण'[5] इति चेच्छन्ति । 'हिरण्यवर्णाः'[3] इति चतस्रः । पावमान्यः 'पवमानः'[6] इत्यनुवाकः । अन्यानि पवित्राण्यघमर्षणादीनि स्वयमेव वक्ष्यति 'उपनिषदो वेदाः' इति प्रक्रम्य 'सावित्रीति चेति पावनानि' इत्यनेन । यद्वा—

* याज्ञिकी २५ २६
† याज्ञिकी १
1 वासि २३ २३
2 तै स १ ५ ११
3 तै स ५ ६ १
4 तै स ३-४ ११
5 ,, ,, २-१-११
6 ,, ब्रा १ ४-८

'अघमर्षणं देवकृतम्' इत्यत्र । प्रयतः पूतस्सन्ध्योपासनयोग्यो भवति ॥ २ ॥

अथ स्नानप्रोक्षणयोर्व्यवस्थामाह—

**अथाप्युदाहरन्ति-**
**अपोऽवगाहनं स्नानं विहितं सार्ववर्णिकम्।**
**मन्त्रवत्प्रोक्षणं चापि द्विजातीनां विशिष्यत इति ॥ ३ ॥**

अपोऽवगाहनमिति वारुणं स्नानमाह । तच्च सार्ववर्णिकं सर्ववर्णसाधारणम् । मन्त्रवत्प्रोक्षणं पूर्वोक्तैर्मन्त्रैर्मार्जनं तच्च ब्राह्मं त्रैवर्णिकानां विशिष्टं स्नानम् । एवं चाद्विजस्य वारुणमेव । द्विजातीनां पुनरुभयोस्समुच्चयः सति सम्भवे । असम्भवेऽपि तेषां मार्जनमवश्यंभावि ॥ ३ ॥

किञ्च—

**सर्वकर्मणामेवारम्भेषु प्राक्सन्ध्योपासनकालाच्चैतेनैव पवित्रसमूहेनात्मानं प्रोक्ष्य प्रयतो भवति ॥ ४ ॥**

सर्वकर्माणि श्रुतिस्मृतिशिष्टागमसिद्धानि । सर्वकर्मग्रहणेनैव सिद्धे सन्ध्योपासनस्य पृथग्ग्रहणं तस्यात्यन्तप्राशस्त्यप्रतिपादनार्थम्। तच्च प्रदर्शितमस्माभिरथातश्शब्दयोरभिप्रायं वर्णयद्भिः । पवित्रसमूहेन सुरभिमत्यादिस्तोमेन आत्मानं प्रोक्ष्याद्भिरेवात्मानं परितो-

पि रक्षा कर्तव्या । अत ऊर्ध्वं गायत्र्याऽभिमन्त्रितेनाम्भसा हतानि रक्षांस्यात्मानमाह मृत्युरिति । यच्च स्वाध्यायब्राह्मणे पठितम् 'सन्ध्यायां गायत्र्याऽभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति'[1] 'यत्प्रदक्षिणं प्रक्रमन्ति'[1] इति च । तदपि प्रसिद्धत्वादेव नोक्तमाचार्येण । 'अग्निश्च'[2] इत्यादिमन्त्रद्वयवत् । स्मृतिरप्यस्ति—

करांभ्यां तोयमादाय सावित्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखो भूत्वा प्रक्षिपेत्सन्ध्ययोर्द्वयोः[3] ॥ इति॥

एतदुक्तं भवति—सन्ध्योपासनवेलायां कर्तव्येषु समन्त्रकाचमनप्रोक्षणजलोत्क्षेपणसावित्रीजपोपस्थानेष्वाचार्येण स्वशाखायामनुक्ता उक्ताः। उक्तास्तु नोक्ताः सिद्धत्वादेव । न केवलोत्क्षेपणप्रदक्षिणे एव भवतः ॥

**अथाप्युदाहरन्ति-**

**दर्भेष्वासीनो दर्भान्धारयमाणस्सोदकेन पाणिना प्रत्यङ्मुखस्सावित्रीं सहस्रकृत्व आवर्तयेत् ॥ ५ ॥**

दर्भेष्वग्रथितेष्वनन्तर्गर्भेषु त्रिष्वासीनस्तादृशानेव दर्भान् सोदकेन पाणिना धारयमाणः । एकवचनाद्दक्षिणो गृहीतव्यः । सावित्रीं सवितृदेवत्यां 'तत्सवितुः'[4] इत्येतामृचं प्रणवव्याहृतिसाहिताम् । तथाहि—

एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् ।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥[5] ॥ इति ॥

---

[1] तै. आ. २-२. [2] याजुषी. २४,२५. [3] व्याससमृति..
[4] तै. स. १-५-६. [5] मनु, २-७८.

ऋषिच्छन्दोदेवताविनियोगस्मरणपूर्वको जपो द्रष्टव्य । न ह्येतज्ज्ञान-मृते श्रौतस्मार्तकर्मप्रसिद्धिरित्यभियुक्तोपदेशात् । तत्र प्रणवव्याहृतीना मृषिर्वामदेव । दैवी गायत्री छन्द । ओंकारस्सर्वदेवत्य पारमेष्ठ्य । व्यस्ताना व्याहृतीनामग्निर्वायुस्सूर्य इति देवता । सावित्र्या ऋषि विश्वामित्र गायत्री त्रिष्टुप्छन्द सविता देवता । सन्ध्योपासने विनियोग । यस्मिन् सर्वमोतं प्रोतं च भवतीति ओंकारेण ब्रह्मोच्यते । तच्च सवितृमण्डलमध्यवर्ति । तथा च श्रुति —'आदित्यो ब्रह्मेत्यादेश ' इति । स एव च भ भवतेस्सद्रूप पर ब्रह्म । भुव भावयते तदेन हि सर्वं भवतीति । देव स्व । तथा च यास्क — 'स्वरादित्यो भवति सु अरण सु ईरण स्वृतो रसान् स्वृतो भास ज्योतिषा स्वृतो भासेति'[1] । यो देवस्सविताऽस्माकं धियः कर्माणि पुण्यानि प्रति प्रेरयेत् तस्य यो भर्गः तपनहेतु वरेण्य वर्णीय वरद वरमण्डलमभिचिन्तयाम उपास्महे इति मन्त्रार्थ ॥ ५ ॥

अथ स एव कल्पान्तरमाह—

**प्राणायामशो वा शतकृत्वः ॥ ६ ॥**

'सावित्रीमावर्तयेत्' इत्यनुवर्तते । प्राणायामश्शासनिरोधनमात्रम् । प्रत्यावृत्ति श्वासनिरोध । अथ वा यावच्छक्ति नि नतु पञ्चकृत्व पठित्वा श्वासमुत्सृजेत् ॥ ६ ॥

**उभयतःप्रणवां ससप्तव्याहृतिकां मनसा वा दशकृत्वः ॥ ७ ॥**

सावित्रीं प्राणायामश इत्यनुवर्तते । उभयत प्रणवो यस्या

---

[1] निरुक्त. २ ४ २

स्तथा सप्तव्याहृतिभिस्मह वर्तेत इति सैवोच्यते । सप्तव्याहृतयो भूरादयस्सत्यान्ता । अत्रैव क्रम कल्प्य । प्रथम प्रणवस्तत सप्त व्याहृतय ततस्सावित्रीसहिताच्च ध्यानत प्रणव इति । केचित्सावित्र्या एवोभयत प्रणवत्वमिच्छन्ति । न तु सप्तानामपि व्याहृतीनाम् । अपरे पुनरादितस्सव्याहृतिक सावित्र्या दशकृत्वोऽभ्यास तत प्रणव इति । एतौ पक्षौ विचारणीयौ । आद्यस्य तु सम्प्रदायोऽस्ति ॥ ७ ॥

## त्रिभिश्च प्राणायामैस्तान्तो ब्रह्महृदयेन॥८॥

ब्रह्महृदयं 'ओ भू । ओ भुव '[1] इत्यनुवाक । अनेन न परुत्वो वचनेन त्रय प्राणायामा सम्पद्यन्ते । तान्तः क्षान्तिमापन्नस्सावित्रीमावर्तयेदिति सिंहावलोकनन्यायेन सम्बन्ध । स्मृतिशतसिद्धत्वात् । एव हि प्राणायामलक्षण प्रसिद्धम्—

> सव्याहृतिं सप्रणवा गायत्रीं शिरसा सह ।
> त्रि पठेदायतप्राणः प्राणायामस्स उच्यते ॥ इति[2] ॥

'ओमापो ज्योति '[1] इत्यनुवाकशेषपशिर । तत्र प्रणवो गत । व्याहृतित्रय च । महः महत पूजाकर्मणो वा ब्रह्म । जनो ब्रह्म जनेर्विपरीतलक्षण न जायत इत्यर्थ । तपस्तपतेराभिजनकर्मण । सत्यमिति त्रिधातुत्रयनिमित्तमेतत् । सर्वं ब्रह्मैवेत्युपसहारार्थ । सावित्री गता । आप आप्नोते । ज्योति द्योतते दीप्तिकर्मण शब्दरूप हि तद्ब्रह्म । अमृत अविनाशि हि । तद्ब्रह्म बृहतेर्वृद्धिकर्मण परिवृढ भवति ॥ ८ ॥

---

[1] याज्ञिकी २७ [2] मनु

वारुणीभ्यां रात्रिमुपतिष्ठत इमं मे वरुण तत्त्वा यामीति द्वाभ्याम् ॥ ९ ॥

'अहन्येष मन्त्रो रात्रौ वारुणः' इति श्रुतेः रात्रिमिति कालनिर्देशः । उपस्थेयस्तु सविता तत्कालविशिष्टः । उपस्थानं चोर्ध्वोत्थितेनैव यच्छतिसमाचारः । प्रसिद्धं प्रदक्षिणादि तदप्यत्र कर्तव्यं 'तृतीयशिरआगमः' इति लिङ्गात् ॥ ९ ॥

एवमेव प्रातः प्राङ्मुखस्तिष्ठन् ॥ १० ॥

एवमिति 'तीर्थं गत्वा' इत्यादि सर्वमतिदिशति । प्रातरिति कालनिर्देशः । प्राङ्मुख इति प्रत्यङ्मुखनिवृत्त्यर्थम् ॥१०

मैत्रीभ्यामहरुपतिष्ठते मित्रस्य चर्षणीधृतो मित्रो जनान् यातयतीति द्वाभ्याम्॥

अतिरोहितार्थमेतत् ॥ ११ ॥

सुपूर्वामपि पूर्वामुपक्रम्योदित आदित्ये समाप्नुयात् ॥ १२ ॥

सुपूर्वा नक्षत्रेषु दृश्यमानेषु पूर्वां सन्ध्यामुपक्रम्यादित्योदयोत्तरकाले समाप्नुयात् ॥ १२ ॥

अनस्तमित उपक्रम्य सुपश्चादपि पश्चिमाम् ॥ १३ ॥

मुपश्चात् यावन्नक्षत्रविभावनं तावदिति समाप्नुयादित्यर्थः ॥ १३॥

सायंप्रातस्सन्ध्योपासनकर्तुरायुर्विच्छेदो न भवतीत्याह—

**सन्ध्ययोश्च सम्पत्तावहोरात्रयोश्च सन्ततिः॥**

सन्ध्योपासनकर्तुर्भवतीति शेषः । सम्पत्तिस्सम्पूर्णता । सा च सन्ध्योपासनेन यथाविध्यनुष्ठानेन भवति । तस्यां च सत्यामहोरात्रयोस्सन्ततिरविच्छेदो भवति । उपासितुरायुरविच्छिन्नं भवतीत्यर्थः । आह च—

ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः ।
प्रज्ञां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च[1] ॥ इति ॥

अथानुपासितुर्दोषमाह—

**अपि चात्र प्रजापतिगीतौ श्लोकौ भवतः—**

**अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् । सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणास्स्मृताः ॥ सायं प्रातस्सदा सन्ध्यां ये विप्रा नो उपासते । कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेदिति ॥ १५ ॥**

प्रजापतिग्रहणमादरार्थम् । अनागतामनतिक्रान्तामिति चोदितकालाभिप्रायम् । कथं ते ब्राह्मणा इति विप्रग्रहणं च द्वि-

[1] यमस्मृति .

जात्युपलक्षणार्थम् । अत एव शूद्रकर्मस्वित्युक्तम् । इतरथा क्षत्रियकर्मस्वित्यवक्ष्यत् ।

न तिष्ठति तु यः पूर्वामुपास्ते न च पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यस्सर्वस्मात् द्विजकर्मणः ॥ इति[1] ॥

तदा कथम्?

**तत्र सायमतिक्रमे रात्र्युपवासः प्रातरतिक्रमे अहरुपवासः ॥ १६ ॥**

अतीता ता सन्ध्या दत्वेति शेष । उपवासोऽनशनम् ॥ १६ ॥

किञ्च—

**स्थानासनफलमवाप्नोति ॥ १७ ॥**

प्रायश्चित्तप्रशंसैषा ॥ १७ ॥

**अथाप्युदाहरन्ति-**

**यदुपस्थकृतं पापं पद्भ्यां वा यत्कृतं भवेत्। बाहुभ्यां मनसा वाऽपि वाचा वा यत्कृतं भवेत् । सायं सन्ध्यामुपस्थाय तेन तस्मात्प्रमुच्यते ॥ १८ ॥**

उपस्थकृतं परभार्यां प्रति बहुश प्रायश्चित्तस्याम्नानादिह स्वभार्यायामेवानृतुरागाद्युपयोगेऽनाम्नाते वेदितव्यम् । पद्भ्या यद्बुद्धिपूर्वप्रतिषिद्धगमनादि स्तम् । बाहुभ्यामपि हिंसाच्छेदनभेदनादि

[1] मनु. २-१०३.

हस्तचापलं तत् । तथा मनसा परद्रव्यस्याभिध्यानादि । वाचा कृतं अवद्यवदनादि । यत्रयत्र वाङ्मनःकायकृते प्रायश्चित्तान्तरादिना विरोधो नास्ति, तत्र एतदेव प्रायश्चित्तमित्यभिप्रायः । सन्ध्योपासनप्रशंसा चैषा ॥ १८ ॥

किञ्च—

**रात्र्या चापि सन्धीयते ॥ १९ ॥**

पुरुष इति शेषः । अभिसन्धानमभ्युदयः ॥ १९ ॥

**न चैनं वरुणो गृह्णाति ॥ २० ॥**

वरुणो नाम पापमप्सु मरणं जलोदरव्याधिर्वा ॥ २० ॥

**एवमेव प्रातरुपस्थाय रात्रिकृतात्पापात्प्रमुच्यते ॥ २१ ॥**

अर्थवादातिदेशः । फलातिदेशो वाऽयम् । रात्रावुपस्थादिभिः कृतादित्यर्थः ॥ २१ ॥

**अह्ना चापि सन्धीयते ॥ २२ ॥**

पूर्ववद् व्याख्या ॥ २२ ॥

**मित्रश्चैनं गोपायति आदित्यश्चैनं स्वर्गं लोकमुन्नयतीति ॥ २३ ॥**

इदमपि तथा ॥ २३ ॥

अथ संहृत्य स्तौति—

**स एवमेवाहरहरहोरात्रयोः सन्धिपूपतिष्ठमानो ब्रह्मपूतो ब्रह्मभूतो ब्राह्मणः शास्त्रमनुवर्तमानो ब्रह्मलोकमभिजयतीति विज्ञायते ब्रह्मलोकमभिजयतीति विज्ञायते ॥ २४ ॥**

ब्रह्मपूतः सावित्र्या पूतः । ब्रह्मभूतः शब्दब्रह्मप्रणवमापन्नः ॥

आह च—

योऽधीतेऽहन्यहन्येतांस्त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमानिति[1] ॥

विज्ञायते इति श्रुतिसंसूचनम् ॥ २४ ॥

इति श्रीगोविन्दस्वामिविरचिते बौधायनधर्मविवरणे
द्वितीयप्रश्ने चतुर्थोऽध्यायः.

---

प्रयतोऽभिषिक्त इत्युक्तम् । प्रसङ्गात्तद्विधिमाह—

**अथ हस्तौ प्रक्षाल्य कमण्डलुं मृत्पिण्डं च गृह्य तीर्थं गत्वा त्रिः पादौ प्रक्षालयते त्रिरात्मानम् ॥ १ ॥**

अथ स्नानविधिरुच्यते इति शेषः । तत्रारम्भे हस्तयोः प-

[1] मनु. २-८२.

क्षालनम् । यद्वा—तीर्थं गत्वा हस्तौ प्रक्षाल्येति सम्बन्धः । चशब्दात् गोमयदाहादीति । अनञ्पूर्वे हि समासे क्त्वो ल्यप् भवति, इह तु छान्दसः गृह्येति ल्यबादेशः । तीर्थम्

नदीषु देवखातेषु तटाकेषु सरस्सु च ।
स्नानं समाचरेन्नित्यमुत्सप्रस्रवणेषु च ॥ इति ॥ तथा—
सति प्रभूते पयसि नाल्पे स्नायात्कथंचन ।[1]

न त्वेवजातीयकम् । तत्र गत्वा मृत्पिण्डैकदेशेन कमण्डलूदकेन चैकैकं पादं त्रिस्त्रिः प्रक्षालयेत् । एवमात्मानमपि अनर्थज्ञ-तदङ्गन्यायेनात्मनश्शरीरं प्रक्षालयेदिति गम्यताम् ॥ १ ॥

अथेदानीं प्रक्षालितपादेनैव प्रवेष्टव्यान् देशानाह—

**अथ हैके ब्रुवते श्मशानमापो देवगृहं गोष्ठं यत्र च ब्राह्मणाः अप्रक्षाल्य पादौ तन्न प्रवेष्टव्यमिति ॥ २ ॥**

प्रथमान्तशब्दो निर्देशफलः । प्रातिपदिकार्थमात्रे हि प्रथमां स्मरति पाणिनिः । तेषां कर्मत्वख्यापनार्थम् । तस्माद्धो नञौ प्रकृतमर्थं सूचयतः । तस्मात्प्रक्षाल्यैव प्रवेष्टव्यं श्मशानादीति । 'अर्हे कृत्यतृचश्च' इति स्मरणेन प्रत्ययादर्हार्थो गम्यते । न तु कर्मत्वम्, प्रक्षाल्यैव प्रवेष्टुमर्हतीत्यर्थः ॥ २ ॥

**अथापोऽभिप्रतिपद्यते—**

**हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि या-**

[1] मनु ४-२०३

चितः । यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः । यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् । तन्म इन्द्रो वरुणो बृहस्पतिस्सविता च पुनन्तु पुनःपुनरिति ॥ ३ ॥

अथशब्दात्प्रक्षालनानन्तर्यमाह । गोमयेनात्मानमालिप्येति केचिदिच्छन्ति । हिरण्यशृङ्गमित्यृचोर्वामदेव ऋषि । काण्डर्षयो वा विश्वेदेवा । प्रथमा पुरस्ताद्बृहती, द्वितीया पङ्क्ति । उभे अपि लिङ्गोक्तदेवते । तत्र द्वयोरप्ययमर्थ —हिरण्यशृङ्गं हिरण्मयशृङ्ग वरुण त्वा शरण प्रपद्ये । मया याचितस्त्वं मम स्नानाय तीर्थं जलाशय देहि । वरुणो ह्यपा राजा 'यासा राजा वरुण '* इति लिङ्गात् । एप एव वा तुभ्य तीर्थमिति गृह देहीति । असाधूनामभोज्याना अन्नं यन्मया भुक्त यो वा मया न पापकर्मभ्य प्रतिग्रह कृत । यच्च मनोवाक्कायकर्मभि दुष्कृत कृत भवति । तत्सर्वमाद्य जलाशयस्नानेन इन्द्रादय । विमत यन्मया पुन पुन प्रार्थयितु शक्यते इति ॥ ३ ॥

एतदन्यो भवति—

अथाञ्जलिनाऽप उपहन्ति सुमित्रा न आप ओषधयस्सन्त्विति ॥ ४ ॥

द्विहस्तसयोगोऽञ्जलि । तेनाञ्जलिना जलप्रवेशादनन्तरमुप

* तै. सं. ५ ६-१.

हन्ति गृह्णाति । नः अस्माकं आपश्चौषधयश्च तदुत्पादितास्सुमित्रा सुखहेतवस्सन्त्विति मन्त्रार्थ ॥ ४ ॥

अथैना अप —

तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति ॥ ५ ॥

अस्य स्नातु द्वेष्यो यस्या दिशि अस्ति ता दिशं अपोऽभ्युक्षति । य पुरुष अस्मान् द्वेष्टि य वा वय द्विष्म तस्मै दुर्मित्रा दु खहेतव आपो भूयासुरिति मन्त्रार्थ ॥ ५ ॥

अथाप उपस्पृश्य त्रिः प्रदक्षिणमुदकमावर्तयति यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतादिति ॥ ६ ॥

व्यक्तो मन्त्राभिप्राय ॥ ६ ॥

अप्सु निमज्ज्योन्मज्ज्य ॥ ७ ॥

नाप्सु सतः प्रयमणं विद्यते न वासःपल्पूलनं नोपस्पर्शनम् ॥ ८ ॥

यद्युपरुद्धास्स्युरेतेनोपतिष्ठते नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्य इति ॥ ९ ॥

## उत्तीर्याचम्याचान्तः पुनराचामेत् ॥ १० ॥

उन्मज्ज्याचान्तः पुनराचामेदिति सम्बन्धः । निमज्जनमद्भिरात्मनः प्रच्छादनम् । उन्मज्जनं ताभ्य आविर्भावः । अत्रोन्मज्जनानन्तरभाविनियममनुक्त्वा मनस्याविर्भूतं प्रतिषेधं विस्मरणभयादाचार्य उपदिशतिस्म—नाप्सु सत इति । प्रयमणं शौचं मूत्रपुरीषाद्यपनयलक्षणं मलापनयनं पाणिभ्यामवस्फोटनं उपस्पर्शनं आचमनम् । एतत्त्रयमप्सु सता न कर्तव्यमित्यर्थः । 'तपस्यमवगाहनम्' इत्यस्मिन्नध्याये 'स्रवन्तीष्वनिरुद्धासु' इति निरुद्धास्वप्सु प्रतिषेध उक्तः । तस्येदानीं प्रायश्चित्तमाह—यद्युपरुद्धास्स्युरेतेनोपतिष्ठते नमोऽग्नय इति । नात्र मन्त्रे तिरोहितं किञ्चिदस्ति । जलाशयादुत्तीर्य प्राङ्मुख उदङ्मुखो वा आचामेत् । अप आचम्य आचान्तः पुनरिति चोक्तम् । तस्यायमभिप्रायः—मन्त्राचमनं सर्वत्राचान्त एव कुर्यादिति ॥ ७-१० ॥

## आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्। पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहेति ॥ ११ ॥

वामदेवा ऋषयः, विश्वेदेवा वा ऋषयः । द्वे अध्येते अनुष्टुभौ आपः प्रार्थ्यन्ते । आपदशोषयन्तु । इह पृथिवीशब्देन तन्मयं शरीरमुच्यते । ताभिरद्भिः पूतं शरीरं पुनातु माम् ।

पुनातु ब्रह्मणस्पतिरिति । एकस्मिन् बहुवचनं पूजायाम् । 'एतद्वेष्णवान् खनामि' इति यथा । पृथिवीं पुनात्वित्यर्थः । ब्रह्मपूतं बृहस्पतिपूतं शरीरम् । यदुच्छिष्टमन्यत् यदभोज्यं मया भुक्तं यद्वा दुश्चरितं मम तत्सम्बन्धीति शेषः । सर्वं पुनन्तु मां सर्वस्मादस्मात् मामापः पुनन्तु । मामापोऽसतां च प्रतिग्रहम् । असन्तश्शूद्राः पापकर्माणो वा तत्प्रतिग्रहजाता-दिनसो मामापः पुनन्त्विति । स्वाहेति प्रदानप्रतिपादकश्रवणा-द्धव्येयमित्यवेहि ॥ ११ ॥

मन्त्राचमनानन्तरम्—

**पवित्रे कृत्वाऽद्भिर्मार्जयत्यापो हिष्ठा मयोभुव इ-ति तिसृभिर्हिरण्यवर्णाश्शुचयः पावका इ-ति चतसृभिः पवमानस्सुवर्जन इत्येतेना-नुवाकेन मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन त्रीन् प्राणायामान् धारयित्वोत्तीर्य वासः पीडयित्वा प्रक्षालितोपवाताक्लिष्टानि वासां-सि परिधाय दर्भेष्वासीनो दर्भान् धारय-माणः प्राङ्मुखस्सावित्रीं सहस्रकृत्व आवर्त-येच्छतकृत्वोऽपरिमितकृत्वो वा दशावरम्॥**

पवित्रे इति द्विवचनाद्द्वाभ्यां मार्जनम् । अन्तर्जलं जलम-ध्यम् । तेनैव सिद्धे गतग्रहणं जलेनैव सर्वाङ्गीणाच्छाद-

नार्थम् । अघमर्षणं नामार्चम् । 'ऋतं च सत्यं च'* इति तृचम् । तेन त्रि:पठितेन एकः प्राणायामो भवति । एवमेव त्रयः प्राणायामाः । वासःपीडनमिह पितृणां तृप्त्यर्थम् । उपवातं शोषितम् । अक्लिष्टमच्छिद्रम् । बहुवचनादन्तर्वासो बहिर्वासश्च । उत्तीर्येति ग्रहणं मध्याह्नसन्ध्याग्राहकम् । आचमनानन्तरं च माविव्यभिमन्त्रितानां अपामादित्याभिमुखं सदाचारसिद्धं द्रष्टव्यम् ॥ १२ ॥

अथादित्यमुपतिष्ठते उद्वयं तमसस्परि । उदुत्यम् । चित्रम् । तच्चक्षुर्देवहितम् । य उदगादिति ॥ १३ ॥

ऋज्वेतत् ॥ १३ ॥

अथाप्युदाहरन्ति—

प्रणवो व्याहृतयस्सावित्री चेत्येते पञ्च ब्रह्मयज्ञा अहरहर्ब्राह्मणं किल्बिषात्पावयन्ति ॥ १४ ॥

यज्ञशब्देन जपो लक्ष्यते । आह च प्रणवादीन् प्रकृत्य—

विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुस्स्याच्छतगुणः साहस्रो मानसस्स्मृतः ॥

इत्यादि । तुल्यवत्प्रसङ्ख्यानात् प्रणवव्याहृतीनामपि सावित्र्याः

*शाखा. १.

पुरस्तात् प्रतिपादनमवगम्यते । अहरहरिति नित्यस्नानार्थतामाह । किल्बिषं पापम् ॥ १४ ॥

पूतः पञ्चभिर्ब्रह्मयज्ञैरथोत्तरं देवतास्तर्पयति ॥

अतिरोहितार्थमेतत् ॥ १५ ॥

अग्निः प्रजापतिस्सोमो रुद्रोऽदितिर्बृहस्पतिस्सर्पा इत्येतानि प्राग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि ॥ ओं वसूंश्च तर्पयामि ॥ १६ ॥

पितरोऽर्यमा भगस्सविता त्वष्टा वायुरिन्द्राग्नी इत्येतानि दक्षिणाद्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि ॥ ओं रुद्रांश्च तर्पयामि ॥ १७ ॥

मित्र इन्द्रो महापितर आपो विश्वेदेवा ब्रह्मा विष्णुरित्येतानि प्रत्यग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि ॥ ओमादित्यांश्च तर्पयामि ॥

वसवो वरुणोऽजएकपादहिर्बुध्न्यः पूषाऽश्विनौ यम इत्येतान्युदग्द्वाराणि दैवतानि सनक्ष-

त्राणि साहोरात्राणि समुहूर्तानि तर्पयामि॥

ओं विश्वेदेवांस्तर्पयामि । साध्यांस्तर्पयामि । ब्रह्माणं त । प्रजापतिं त । चतुर्मुखं त । परमेष्ठिनं त । हिरण्यगर्भं त । स्वयंभुवं त । ब्रह्मपार्षदांस्त । ब्रह्मपार्षदीश्च त ॥ अग्निं त । वायुं त । वरुणं त । सूर्यं त । चन्द्रमसं त । नक्षत्राणि त ॥ सद्योजातं त ॥ ओं भूः पुरुषं त । ओं भुवः पुरुषं त । ओं सुवः पुरुषं त । ओं भूर्भुवस्सुवः पुरुषं त । ओं भूस्त । ओं भुवस्त । ओं सुवस्त । ओं महस्त । ओं जनस्त । ओं तपस्त । ओं सत्यं त ॥ ओं भवं देवं त । ओं शर्वं देवं त । ओमीशानं देवं त । ओं पशुपतिं देवं त । ओं रुद्रं देवं त । ओं उग्रं देवं त । ओं भीमं देवं त । ओं महान्तं देवं त ॥ भवस्य देवस्य पत्नीं त । शर्वस्य देवस्य पत्नीं त । ईशानस्य देवस्य पत्नीं त । पशुपतेर्देवस्य पत्नीं त । रुद्रस्य देवस्य पत्नीं त । उग्रस्य देवस्य पत्नीं त । भीमस्य देवस्य

पत्नीं त । महतो देवस्य पत्नीं त । भवस्य देवस्य सुतं त । शर्वस्य देवस्य सुतं त । ईशानस्य देवस्य सुतं त । पशुपतेर्देवस्य सुतं त । रुद्रस्य देवस्य सुतं त । उग्रस्य देवस्य सुतं त । भीमस्य देवस्य सुतं त । महतो देवस्य सुतं त । रुद्रांस्तर्पयामि । रुद्रपार्षदांस्तर्पयामि । रुद्रपार्षदीश्च तर्पयामि ॥ २० ॥

ओं विघ्नं त । विनायकं त । वीरं त । स्थूलं त । वरदं त । हस्तिमुखं त । वक्रतुण्डं त। एकदन्तं त । लम्बोदरं त । विघ्नपार्षदांस्त। विघ्नपार्षदीश्च तर्पयामि ॥ २१ ॥

ओं सनत्कुमारं त । स्कन्दं त । इन्द्रं त । षष्ठीं त । षण्मुखं त । जयन्तं त । विशाखं त। महासेनं त । सुब्रह्मण्यं त। स्कन्दपार्षदांस्त। स्कन्दपार्षदीश्च तर्पयामि ॥ २२ ॥

ओमादित्यं त । सोमं त । अङ्गारकं त । बुधं त । बृहस्पतिं त । शुक्रं त । शनैश्चरं त ।

राहुं त । केतुं तर्पयामि ॥ २३ ॥

ओं केशवं त । नारायणं त । माधवं त । गोविन्दं त । विष्णुं त । मधुसूदनं त । त्रिविक्रमं त । वामनं त । श्रीधरं त । हृषीकेशं त । पद्मनाभं त । दामोदरं त । श्रियं देवीं त । सरस्वतीं देवीं त । पुष्टिं देवीं त । तुष्टिं देवीं त । विष्णुं त । गरुत्मन्तं त । विष्णुपार्षदांस्त । विष्णुपार्षदीश्च तर्पयामि ॥

ओं यमं त । यमराजं त । धर्मं त । धर्मराजं त । कालं त । नीलं त । मृत्युंजयं त । वैवस्वतं त । चित्रं त । चित्रगुप्तं त । औदुम्बरं त । वैवस्वतपार्षदांस्त । वैवस्वतपार्षदीश्च तर्पयामि ॥ २५ ॥

ओं भूमिदेवांस्त । काश्यपं त । अन्तरिक्षं त । विद्यां त । धन्वन्तरिं त । धन्वन्तरिपार्षदांस्त । धन्वन्तरिपार्षदीश्च तर्पयामि ॥ २६ ॥

अथ निवीती—ओमृषींस्त । महर्षींस्त । परमर्षींस्त । ब्रह्मर्षींस्त । देवर्षींस्त । राजर्षींस्त ।

श्रुतर्षींस्त । जनर्षींस्त । तपर्षींस्त । सत्यर्षींस्त । सप्तर्षींस्त । काण्डर्षींस्त । ऋषिकांस्त । ऋषिपत्नीस्त । ऋषिपुत्रांस्त । ऋषिपौत्रांस्त । काण्वं बोधायनं त । आपस्तम्बं सूत्रकारं त । सत्याषाढं हिरण्यकेशिनं त । वाजसनेयिनं याज्ञवल्क्यं त । आश्वलायनं त । शौनकं त । व्यासं त । वसिष्ठं त । प्रणवं त । व्याहृतीस्त । सावित्रीं त । गायत्रीं त । छन्दांसि त । ऋग्वेदं त । यजुर्वेदं त । सामवेदं त । अथर्ववेदं त । अथर्वाङ्गिरसं त । इतिहासपुराणानि त । सर्ववेदांस्त । सर्वदेवजनांस्त । सर्वभूतानि तर्पयामि ॥ २७ ॥

अथ प्राचीनावीती—ओं पितॄन् स्वधानमस्तर्पयामि । पितामहान् स्वधानमस्त । प्रपितामहान् स्वधानमस्त । मातॄस्स्वधानमस्त । पितामहीस्स्वधानमस्त । प्रपितामहीस्स्वधानमस्त । मातामहान् स्वधानमस्त । मातुः पितामहान् स्वधानमस्त । मातुः प्र-

पितामहान् स्वधानमस्त । मातामहीस्स्वधानमस्त । मातुः पितामहीस्स्वधानमस्त। मातुः प्रपितामहीस्स्वधानमस्तर्पयामि ॥

ओमाचार्यान्स्वधानमस्त । आचार्यपत्नीः स्वधानमस्त। गुरून्स्वधानमस्त । गुरुपत्नीस्स्वधानमस्त । सखीन्स्वधानमस्त । सखिपत्नीस्स्वधानमस्त। ज्ञातीन्स्वधानमस्त। ज्ञातिपत्नीस्स्वधानमस्त। अमात्यान्स्वधानमस्त । अमात्यपत्नीस्स्वधानमस्त । सर्वान्स्वधानमस्त । सर्वास्स्वधानमस्तर्पयामि ॥ २९ ॥

अनुतीर्थमप उत्सिञ्चति—ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधा स्थ तर्पयत मे पितॄन्। तृप्यत तृप्यत तृप्यतेति॥

अनुतीर्थं तीर्थं प्रति । अनेनैनत् ज्ञापितं भवति—नत्वतर्पणं भवतीह महदिति । ऊर्जं अन्न अमृतादिपञ्चकम् । यद्यपि कीलालमन्नम् । तथाऽपि परिस्रुतमभिधानात् यवागूरभिप्रेता। यूयं स्वधा अमृता· स्थ तर्पयत मम पितृपितामहप्रपितामहान् । यूयं च तृप्यत वीप्सावचनमादरार्थम् ॥ ३० ॥

**नैकवस्त्रो नार्द्रवासा दैवानि कर्माण्यनु सञ्चरेत्। पितृसंयुक्तानि चेत्येकेषां पितृसंयुक्तानि चेत्येकेषाम् ॥ ३१ ॥**

नार्द्रवासाः साक्षादार्द्रवासोनिषेधार्थः । अनुसंचरेत् अनु-
ष्ठेत् । पितृसंयुक्ताः । अत्रापिशब्दोऽध्याहर्तव्यः ॥ ३१ ॥

इति श्रीगोविन्दस्वामिविरचिते बोधायनधर्मविवरणे
द्वितीयप्रश्ने पञ्चमोऽध्यायः.



देवऋषिपितृतर्पणमुक्तम्—

**अथेमे पञ्चमहायज्ञास्तान्येव महासत्राणि देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति ॥ १ ॥**

फलत एषां यज्ञानां महत्त्वं न स्वरूपतः, दीर्घकालप्रयोग सामा-
न्याच्च महासत्रसमाख्या । 'देवयज्ञः' इत्यादिसंज्ञाकरणं संव्य-
वहारार्थम् ॥ १ ॥

अथैतान्विविच्याह—

**अहरहस्स्वाहाकुर्यादा काष्ठात् तथैतं देवयज्ञं समाप्नोति ॥ २ ॥**

अत्र 'देवेभ्यस्स्वाहा' इति मन्त्र उद्धर्तव्यः । द्रव्यमोदनप्रभृ-

ति आकाशात् । स्वयं वीप्सावचनं नित्यत्वख्यापनार्थम् । समाप्नोति अनुतिष्ठेत् । एवमुत्तरेष्वपि यथासंभव योजना ॥ २ ॥

अहरहस्स्वधाकुर्यादोदपात्रात्तथैतं पितृयज्ञं समाप्नोति ॥ ३ ॥

'पितृभ्यस्स्वधानमः' इति मन्त्रोऽध्याहार्यः । उदपात्रं उदकं आज्यौदनप्रभृति तत्पर्यन्तमित्यर्थः ॥ ३ ॥

अहरहर्नमस्कुर्यादा पुष्पेभ्यस्तथैतं भूतयज्ञं समाप्नोति ॥ ४ ॥

'भूतेभ्यो नमः' इति मन्त्रोद्धारः । एते त्रयो महायज्ञाः वैश्वदेवबलिहरणैरेव सम्पादिता इति । केचित्कर्तव्या इति । एतत्तु युक्ततया विचारणीयम् ॥ ४ ॥

अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादा मूलफलशाकेभ्यस्तथैतं मनुष्ययज्ञं समाप्नोति ॥ ५ ॥

बहुभ्यो दातुं शक्त्यभावे एकस्मा अपि ॥ ५ ॥

अहरहस्स्वाध्यायं कुर्यादा प्रणवात्तथैतं ब्रह्मयज्ञं समाप्नोति ॥ ६ ॥

ब्रह्मयज्ञः कर्तव्यः । ब्रह्मेव यज्ञस्स च यागः ॥ ६ ॥

तदाह—

स्वाध्यायो वै ब्रह्मयज्ञः ॥ ७ ॥

ऋग्वेतत् ॥ ७ ॥

**तस्य ह वा एतस्य ब्रह्मयज्ञस्य वागेव जुहूर्मन उपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथस्स्वर्गो लोक उदयनं यावन्तं ह वा इमां वित्तस्य पूर्णां ददत्स्वर्गं लोकं जयति तावन्तं लोकं जयति भूयांसं चाक्षय्यं चाप पुनर्मृत्युं जयति य एवं विद्वान् स्वाध्यायमधीते ॥ ८ ॥**

**मेधा** उपस्नावा । तस्मिन् तत्तद्भावयेदित्यर्थ । वाचि जुहूबुद्धिरित्यादि । उदयनं परिसमाप्ति । एतस्मादपि मायणीयोऽप्युन्नेय । प्रारम्भापेक्षत्वात् परिसमाप्ते । तदानीमस्मिन् लोके मायणीयबुद्धि । **वित्तस्य** वित्तेन स्वाध्याययज्ञेन स्वाध्याययज्ञमुपासिता जयति ततोपि भूयांसमक्षय्यमनन्तमपवर्गं मोक्षमित्यर्थ । अपमृत्युरकालमरणम् ॥ ८ ॥

अथ निगमनम्—

**तस्मात्स्वाध्यायोऽध्येतव्य इति हि ब्राह्मणम् ॥**

हिशब्दो हेतौ । इत्य ब्राह्मणस्य भावादित्यर्थ ॥ ९ ॥

**अथाप्युदाहरन्ति—**

**स्वभ्यक्तस्सुहितः सुखे शयने शयानो यंयं क्रतुमधीते तेनतेनास्येष्टं भवतीति ॥ १० ॥**

स्वभ्यक्तः तैलादिना । सुहितः तृप्तो भोजनादिना । 'यं यं क्रतुम्'* इत्यस्मिन् विधावन्यानर्थक्यात् प्रशंसैषा ॥ १० ॥

एवं तावद्गार्हस्थ्यमुक्तम् । अधुनाऽस्यैव प्रशंसा—

**तस्य ह वा एतस्य धर्मस्य चतुर्धा भेदमेक आहुरदृष्टत्वात् ये चत्वार इति कर्मवादः ॥**

योऽसौ धर्मः श्रुतिस्मृतिशिष्टागमैः प्रसिद्धः तस्यैतस्य धर्मस्य चातुर्विध्यमाश्रमचतुष्टयकृतमिति एके ऋषयः आहुः । किमिति? यावत् दृष्टत्वान्मन्त्रार्थस्य ते, य दृष्ट्वैवमाहुः । तस्यैतत्प्रतीकग्रहणं ये चत्वार इति । चत्वारोऽप्याश्रमाः देवलोकायनाः पन्थान इति । एवं सत्यपि तावन्मन्त्रः कर्मवादः कर्मभेदमेव्यदाश्रमभेदम् ॥ ११

कानि पुनस्तानि कर्माणीत्याह—

**ऐष्टिकपाशुकसौमिकदार्वीहोमाणाम् ॥१२॥**

स्वार्थे एव तद्धितः ॥ १२ ॥

**तदेषाऽभिवदति—ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषां यो अज्यानिमजीतिमावहात्तस्मै नो देवाः परिदत्तेह सर्व इति ॥ १३ ॥**

तत्कर्मचातुर्विध्यमृगेषाऽभिवदति । वयम्? ऋषिर्वामदेवः त्रिष्टुप्छन्दः नवसस्यानि देवता । अज्यानिहोमे तदुपधाने च

*तै आ २ १५.

विनियोग । य इमे चत्वारः पथयः पन्थानः देवयानाः देवलोकाः । भीमसेन इतिवत् तद्गमनहेतवः । ऐष्टिकादयः द्यावापृथिव्योरन्तरा मध्ये वियन्ति विविधं गच्छन्ति विदिता इत्यर्थः । तेषामिति कर्मणि षष्ठी । तानि अज्यानिमजीतिं क्रियाविशेषणे । अज्यानिं अहानिं अविगुणं अजीतिं मध्यं यः आवहात् आवहेत् अनुतिष्ठेत् । तस्मै नः अस्माकं मध्ये सत्यानि हे सर्वे देवाः परिदत्त प्रयच्छतेति श्रौतकर्मानुष्ठाने निःश्रेयसं दत्तेति मन्त्रार्थः । तदेतदैकाश्रम्ये सत्युपपद्यते । नाश्रमचातुर्विध्ये । कथं तदाह—'गृहस्थ एव स्यात् । तत्र च गृहस्थो वैदिकैः कर्मभिरधिक्रियते नेतरे' । तदेतदैकाश्रम्ये उपपन्नं भवति । ननु भेदपक्षेऽपि गृहस्थो वैदिकानि करोत्येव । सत्यं, अल्पविषयत्वं तदा शास्त्रस्य स्यात् । सर्वाधिकारं चेदं कर्मशास्त्रं विना कारणेन बाधितुं युक्तम् । किञ्च—बहुद्रव्यव्ययप्रयाससाध्यं कर्मजातं परित्यज्य पारिव्राजकान्येवारवन्ध्येयुः पुरुषाः । यतस्तेनापि निःश्रेयसं लभन्ते । 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात् । ततश्च प्रत्यक्षश्रुतानामग्निहोत्रादिवाक्यानामप्रामाण्यमेवापद्येत । तस्मादेषा चातुर्विध्यमेषाऽभिवदतीत्युपगन्तव्यम्॥

अमुमेवार्थमाध्यायपरिसमाप्ते पूर्वोक्तपक्षभङ्ग्या प्रदर्शयितुं आश्रमचातुर्विध्यं तावदुपन्यस्यति स्म—

ब्रह्मचारी गृहस्थो वानप्रस्थः परिव्राजक इति ॥ १४ ॥

ब्रह्मचार्यत्र नैष्ठिको गृह्यते । नोपकुर्वाणः ॥ १४ ॥

अथैतेषां क्रमेण धर्मानाचष्टे—

**ब्रह्मचारी गुरुशुश्रूष्यामरणात् ॥ १५ ॥**

शुश्रूषाऽस्मिन्नस्तीति शुश्रूषी । आमृत्यो गुरुकुले वसेत् । ये पुनरग्नीन्धनादयो धर्मा उपकुर्वाणस्योक्ता तेऽप्यस्य विद्यन्त एव ॥ १५ ॥

**वानप्रस्थो वैखानसशास्त्रसमुदाचारः ॥ १६ ॥**

**वैखानसो वने मूलफलाशी तपश्शीलः सवनेषूदकमुपस्पृशञ्छ्रामणकेनाग्निमाधायाग्राम्यभोजी देवपितृभूतमनुष्यर्षिपूजकः सर्वातिथिः प्रतिषिद्धवर्जं भैक्षमप्युपयुञ्जीत न फालकृष्टमधितिष्ठेद्ग्रामं च न प्रविशेज्जटिलश्चीराजिनवासा नातिसंवत्सरं भुञ्जीत ॥**

वने प्रतिष्ठित इति वानप्रस्थः । वैखानसोपि वानप्रस्थ एव । सञ्ज्ञान्तरकरण तु संव्यवहारार्थम् । विखनसा ऋषिणा प्रोक्त वैखानसशास्त्रम् । तत्र हि बहवो वानप्रस्थस्योक्ता 'ग्रीष्मे पञ्चतपा ' इत्यादयस्समुदाचारा समाचारा इत्यर्थ । वने मूलफलान्यश्नन् प्रतिषिद्धानि परिहरेत् । तपश्शीलः तप पर । सवनेषूदकोपस्पर्शन त्रिषवणस्नानम् । श्रामणकेनामाधानविधिरीरित वैखानसशास्त्रे । तेनाग्निमाधाय जुहुयादिति शेष । ग्रामे भवमन्न ग्राम्य व्रीह्यादिप्रभव तन्न भवतीति अग्राम्य श्यामाक आरण्यौषधिप्रभवम् । तद्भोजी स्यात् । मूलफलै प्राणधारणाशक्तौ वेतद्विज्ञेयम् । देवादिपूजा च तेनैवान्नेन यथासम्भव कार्या ।

सत्वे आगतोऽतिथिः ततस्तेनैव पूजयेदित्यर्थः । तत्रापि प्रतिषिद्धवर्जं प्रतिषिद्धः पतितादिः । व्याघ्रादिहतं मांसं कुद्दालादिनार्जितं मूलादि वा फालकृष्टप्रतिषेधात् अफालकृष्टाधिष्ठाने न दोषः । ग्रामो वासमुदायः । चशब्दान्मनुष्यसमुदायश्च । जटिलः अलुप्तकेशः अप्रसाधितकेशश्च । चीरवासा अजिनवासाश्च । चीरं वृक्षादानीतं वासः फलजं वा जीर्णम् । अजिनं व्याघ्रादिचर्म । चीराजिनयोर्मिमानात् समुच्चयो गम्यते । तत्र नैकमधोवासोऽपरमुत्तरीयमिति । सांवत्सरिकान्नं न भुञ्जीत । अनेनैतद्गम्यते तावन्तं कालं सञ्चयो द्रव्यस्यास्ति ॥ १६–१७ ॥

## परिव्राजकः परित्यज्य बन्धूनपरिग्रहः परिव्रजेद्यथाविधि ॥ १८ ॥

बन्धवो मातापितृव्यतिरिक्तयोनिसम्बन्धिन । कुत एतद्गम्यते? 'न कदाचिन्मातापित्रोरशुश्रूषा' इति विशेषवचनारम्भसामर्थ्यात् । सात्त्विकौपाधिकादधिकः परिग्रह । तथा च गौतमः—'अनिचयो भिक्षुः'[1] इति । परितो ग्रहणं परिग्रहः परिस्सर्वतोभावे । सैर्वैर्वर्णैर्दत्तः परिग्रह । प्रशस्तं ब्राह्मणकुले भिक्षेतेति यावत् । परिव्रजेत् संन्यसेत् यथाविधि । विधिश्च वक्ष्यते—'अथातः संन्यासविधिः' इति ॥ १८ ॥

## अरण्यं गत्वा ॥ १९ ॥

तत्र वसेदिति शेष ॥ १९ ॥

## शिखामुण्डः ॥ २० ॥

[1] गौ. ध. ३-११.

शिखाव्यतिरिक्तं मुण्डितं यस्येति विग्रहः ॥ २० ॥

## कौपीनाच्छादनाः ॥ २१ ॥

परिव्राजकाः स्युरिति शेषः । कौपीनमाच्छादनं येषामिति 'कृत्य ल्युटो बहुलम्' इति कर्मणि ल्युट् । कुत्सितमाच्छादनं कौपीनमिति वैयाकरणः । सोऽयं व्यञ्जनप्रदेशे उक्तः । तथाच गौतमः—'कौपीनाच्छादनार्थं वासो विभृयात्प्रहीणमेके निर्णिज्य'[2] ॥ इति ॥२१॥

## वर्षास्वेकस्थः ॥ २२ ॥

वर्षानाम ऋतुः । तस्मिन्नेकस्मिन्नेव देशे तिष्ठेत् । 'ध्रुवशीलो वर्षासु'[3] इति गौतमः ॥ २२ ॥

'कौपीनाच्छादनाः' इत्युक्तं, तत्राह—

## काषायवासाः ॥ २३ ॥

कषायेण रक्तं काषायम् ॥ २३ ॥

अथ भिक्षाकालमाह—

## सन्नमुसले व्यङ्गारे निवृत्तशरावसम्पाते भिक्षेत ॥ २४ ॥

सन्नं मुसलं यस्मिन् काले निवृत्तमुसलव्यापारे इति यावत् । व्यङ्गारे विगताश्शान्ता अङ्गारा यस्मिन् । शरावोऽन्नप्रदानपात्रं उ-

---

[2] गौ. ध. ३-१९.    [3] गौ. ध. ३-१३.

पलक्षणार्थः । सम्पातसम्मार्जनं उच्छिष्टावमार्जने वृत्ते इत्यर्थः । एतैर्विशेषणैरपराह्ण उपलक्ष्यते । आह च—

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥ इति ॥[1]

## वाङ्मनःकर्मदण्डैर्भूतानामद्रोही ॥ २५ ॥

दण्डो दमनादित्याहुः । वागादिभिर्भूतानि न दमयेत् । अभयं सर्वभूतेभ्यो दद्यादित्ति यावत् ॥ २५ ॥

## पवित्रं बिभृयाच्छौचार्थम् ॥ २६ ॥

पवित्रं कुशमुष्टिः पञ्चमुष्टिर्वनमटीपवित्रं, विभ्रद्वर्तेतेति शेषः । तद्धरणं चात्मशुद्ध्यर्थं देशाद्देशाद्वा जन्तूनां शोधनार्थम् ॥२६॥

## उद्धृताभिरद्भिः कार्यं कुर्यात् ॥ २७ ॥

मूत्रपुरीषप्रक्षालनम्, न त्वाचमनम् ॥ २७ ॥

## अपनिध्य वैदिकानि कर्माण्युभयतः परिच्छिन्ना मध्यमं पदं संश्लिष्यामह इति वदन्तः॥

अस्माल्लोकादमुष्माच्च उभयतः परिच्छिन्नाः विच्छिन्नाः भ्रष्टा वयमस्मै वै लोकाय प्रजोत्पादनं अमुष्मै वैदिकानि कर्माण्यग्निहोत्रादीनि । उभयं च गार्हस्थ्यनिबन्धनं 'मनुष्यलोकः पुत्रेण

---

[1] मनु. ६-५६.

जयति नान्येन कर्मणा पितृलोकम्' इति श्रुतेः पितृलोकः देवलोकः। तस्मादुभयभ्रष्टा वयं, गृहस्थमानववचनात्। अतो वयं **मध्यमं पदं** मत्या सर्वभूतान्तर्गतं पद्यते गम्यते तदुपासकैरिति-पदं आत्मनि **संश्लिष्यामहे** ॥ २८ ॥

नैवं भविष्यतीति चेत् अत्र ब्रूमः—

## ऐकाश्रम्यं त्वाचार्या अप्रजननत्वादितरेषाम् ॥ २९ ॥

तुशब्दः पक्षं व्यावर्तयति। यदुक्तं 'चतुर्धा भेदमेक आहुः' इति तन्न, **ऐकाश्रम्यं** एकश्चासावाश्रमश्च तद्भावस्तैकाश्रम्यम्। तच्च गृहस्थेनैव प्रव्राज्यादीनां भेदानामन्यतममित्याचार्यो मन्यते स्म। कुतः? **अप्रजननत्वादितरेषां** परिव्राज्यादीनाम्। प्रत्यक्षश्रुतिविधानाच्च गृहस्थस्य 'प्रजातन्तुं मा व्यवच्छेत्सीः[1],' 'तस्मात्प्रजननं परमं वदन्ति'[2] इत्येवमादीनाम्। तथा 'यावज्जीवं जुहुयात्,' 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः'[3] 'तं यज्ञपात्रैर्दहन्ति च' इति। नन्वितरेषामपि प्रत्यक्षश्रुतिविधानमस्ति। तथा छान्दोग्ये धर्मस्कन्धश्रुतिः—'त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः'[4] इति। तपश्शब्देनात्र तापसपरिव्राजकयोर्ग्रहणम्। सत्यं—यद्यत्र विधिप्रत्ययोऽस्ति। नाप्यध्याहारः, अनुपपत्तेरभावात्। प्रायणस्यैव स्तुत्यत्वात्तेषामुपादानस्य। तस्मादैकाश्रम्यमेव साधीयः। अपि च अप्रजननत्वादितरेषाम्। प्रज-

[1] तै. उ. १-११  [2] या उ २२-१
[3] ई. उ. २.  [4] छा. उ. २-२३.

ननमत्रोत्पत्तिः । सा चेतरेषां नास्ति तया चावश्यं भावितव्यमित्युक्तं 'प्रजातन्तुम्'[1] इति श्रुतिप्रदर्शनेनाह ॥ २९ ॥

यदि न श्रुतिप्रभवा इतरे त्रय आश्रमाः किंप्रभवास्तर्हि? रागद्वेषादिमत्पुरुषबुद्धिप्रभवा इत्याह—

**तत्रोदाहरन्ति–प्राह्लादिर्ह वै कपिलो नामासुर आस । स एतान्भेदांश्चकार देवैस्सह स्पर्धमानस्तान्मनीषी नाद्रियेत ॥ ३० ॥**

प्रह्लादस्यापत्यं प्राह्लादिः । भेदान् आश्रमाणाम् । देवस्पर्धयाऽसुरेण । यस्मात्कृता आश्रमभेदाः तस्मात् तान् मनीषी प्राज्ञ इत्यनर्थान्तरम् ॥ ३० ॥

**अदृष्टत्वात् । ये चत्वार इतिकर्मवादः ऐष्टिकपाशुकसौमिकदार्वीहोमानाम् ॥ ३१ ॥**

निगमनार्थः पुनरुपन्यासः । अतोऽप्रजननत्वादितरेषां प्रत्यक्षश्रुतिविधानाच्च गार्हस्थ्यस्यैकाश्रम्यमेव निश्रेयसकरम् । उक्तं च—'गृहस्थोपि विमुच्यते' इति । स्यादेतत्—नैव हि कर्मणां मोक्षोपायत्वमस्ति । प्रमाणाभावात् । न तावत्प्रत्यक्षं प्रमाणं विद्यमानोपलम्भत्वात्तस्य । नाप्यनुमानं सम्बन्धग्रहणाभावात् । न खल्वपि शब्दः । कथं? लैकिकस्तावत् मूलज्ञानाभावादसमर्थः । वेदवाक्यानि पुनः प्रातिस्विकफलदायीनि कर्माणीति श्रूयन्ते । यद्यपि 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति'[2] इति । तदेतदपि

[1] तै. उ. १-११.   [2] आपस्तम्बश्रौ. ८-१-१.

चिरेण क्षयमालोच्य भवतीति । यथा नक्त सस्थापनवचनं अस स्थितो हि तर्हि यज्ञ इति चिरेण सस्थामालोच्य, तद्वदेवापातत । न कृत्स्नेभ्योपि वेदकर्मभ्यो मोक्ष इतीदृश वाक्यमस्ति । यद्यप्य स्ति तथाऽपि तदन्यार्थत्वेन नेतु शक्यते । उपमानादि तु दूरोत्सारितम् । यच्च भगवद्गीतासु वचनम्—

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।[1] इति ॥

तदपि सिद्धे सत्युपायत्वे कर्मणोऽवधारणं ब्रूयात् । तदेवाद्या- प्यसिद्धम् । अतस्तदप्यन्यार्थमेव । तस्मात्कर्मणा न मोक्षोपा- यत्वे प्रमाणमस्ति । अस्ति तु ज्ञानस्य 'ब्रह्मविदाप्नोति परम्'[2] इति ।

अधुना केवलज्ञानात् कर्मरहितादेव मुक्तिरित्यस्मिन्नर्थे ऋगप्यस्ती त्याह—

तदेषाऽभ्यनूच्यते-एष नित्यो महिमा ब्राह्म- णस्य । न कर्मणा वर्धते नो कनीयान् । तस्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेनेति ॥ ३३ ॥

वामदेव ऋषि काण्ड ऋषिर्वा । त्रिष्टुप्छन्द । ज्ञानप्रशमा । एष आत्मेति सम्बध्यते । नित्यो महिमेति पदद्वय स्वयमेव न्यास- वि गै विवरिष्यते 'अपुनर्भव नयतीति नित्यो महत्त्वेन गमयतीति महिमा' इत्यत्र । यद्वा—नित्यस्सर्वदा स । महिमा महान् सर्वत्रास्तीति स एष परमात्माऽभिमेत । ब्राह्मणस्येति जात्यवच्छि-

---

[1] ३-२०. [2] तै. आ. ५-१४.

ब्रह्मोपाधिकक्षेत्रज्ञवर्ती च तयोरव्यतिरेकार्थः । परमात्मा न कर्मणा अग्निहोत्रादिना वर्धते तत्फलभुग्भवति । अतस्ततोऽन्यः कर्ता भोक्ता च । तथाऽपि कनीयान् कर्मणा ब्रह्महत्यादिना निकृष्टो न भवतीत्यर्थः । यतोऽसौ पापमपि न करोति तस्मादेव तस्य ब्राह्मणस्य सोपाधिकस्य एवशब्दः पादपूरणः अवधार्याभावात् । तस्यात्मा परमात्मा पदवित् गम्यतेऽनेनार्थ इति वेदः पदं अत एव 'नावेदविन्मनुते तं बृहन्तम्'[1] इत्युक्तम् । सततमात्मानमभेदेन विदित्वा न कर्मणा लिप्यते पापकेन शुभेन च । तदुक्तम्—सम्यग्दर्शने कर्मभिर्न संबध्यते इति । यथा—

> भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
> क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥[2] इति

एवं स्पष्टभाषिणा केवलज्ञानवादिना यः पर्यनुयुक्तः—

**स ब्रूयात्—येन सूर्यस्तपति तेजसेद्धः पिता पुत्रेण पितृमान्योनियोनौ । ना वेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं साम्पराये ॥ ६३ ॥**

स ब्रूयात् परिभावयत्वेनामयस्तनीसूत्रमित्यर्थः । सत्यमाह भव न् यदि केवलादेव ज्ञानात्सर्वभेदप्रत्ययनिबर्हणा-मोक्ष इति, न त्वेतत् । एवमपि कर्मणः । ननु 'एष नित्यो महिमा'[1] इत्युक्तं, सत्यं,

[1] तै. ब्रा. ३-१२-९. [2] मुण्ड. २-२-८.

ज्ञानात्, तत्तु न कर्मनिषेधः । ननु—कर्मणा मोक्षं प्रत्यनुपायत्वात् निषेधत्येवेत्युक्तम् । मोक्षानभिज्ञः कर्मद्वेषी देवानां प्रिय मोक्षेऽपि नात्मनश्शरीरपरिग्रहाभावस्त । *प्रागभावः प्रध्वंसाभावो वा? न तावदात्मज्ञानेन शरीरं प्रध्वस्तं प्रत्यक्षविरोधात् तदुक्त 'बुद्धे चेत्क्षेमप्रापणं इहैव न दुःखमुपलभेत'[1] इति । अथ मन्यसे सुखदुःखोपभोगार्थानि देहारम्भकाणि पुण्यापुण्यान्यदृष्टानि कर्माणि क्षीयन्त इति । तदुक्तं—'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'[2] इति । तदपि न, न हि कर्म क्षीयते अनपगमादित्याहुः । ननु प्रायश्चित्तेन क्षीयत इति तथाऽभ्युपगतमेव । न हि तत्रापि चान्द्रायणादिभिः पापकर्मप्रध्वंसः दुःखानुभवप्रकारोऽयं वाचनिकः यथौषधपानम् । यथा चोपवासादिना शुष्कगात्रो ज्वरादिना नाभिभूयते तद्वदेतदपि । कथं तर्हि तदा? मोक्षप्रागभाव इति, वदामः । सुखदुःखोपभोगार्थं देहग्रहणम्, न च सुखदुःखे काम्यप्रतिषिद्धकर्मसेवाभावात्, नित्यनैमित्तिककर्मानुष्ठानाच्च मोक्षसिद्धिः । आहुश्च मीमांसकाः—

नित्ये नैमित्तिके कुर्यात्प्रत्यवायजिघांसया ।
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ इति ॥

तद्धेतुकमात्मज्ञानं तदर्थानि चोपनिषद्वाक्यानि । एवमुपपद्यमाने नान्यथा कल्पयितुं युक्तम् । न चात्मानं नेक्षयेदेव, न चोच्यते आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं, न च चोद्यते कर्मप्रसिद्ध्यर्थमात्मज्ञानस्य लभ्यतामिति । कथं तर्हि? अयं परिहारः—'येन सूर्यः'[3] इति ज्ञानकर्मसमुच्चयाभिधानात् । साकल्येन तत् यथावस्था

---

* अत्र ग्रन्थो गलित इव भाति.
[1] आप धर्म १-२३-२६
[2] मुण्ड. २-२-८.
[3] तै. ब्रा. ३-१२-९.

त् । प्रजनने प्रजनन इत्यर्थः । ईदृक्षं मोक्षायाप्यलं भवतीत्यभिप्रायः । अतो नावेदविन् अवेदार्थवित् तत्कर्मरच मनुते जानाति कर्मठः परमात्मानं बृहन्तं सर्वानुभवितारं साम्पराये इत्यत्रसज्जाति । निमित्तमत्रप्येषा ॥

अवेदविन्न मनुत इत्येतदुक्तं विस्तरेण किञ्च—

इमे ये नार्वाङ्न परश्चरन्ति न ब्राह्मणासो नसुतेकरासः । त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञय इति ॥३४॥

· बृहस्पत्यार्षं त्रिष्टुप्छन्दः । अज्ञाननिन्दया ज्ञानकर्मप्रशंसा । यतवेद्ध्येत्यास कर्तव्य इमे जनाः वाचं वेदं अभिपद्य अधीत्य पापया पापमतिरूपया धीरास्तमसि शेरते इति सिरीः तन्वते विस्तारयन्ति पोषयन्तीत्यर्थः । तन्त्रं कर्म अप्रजज्ञयः अजानन्तः अपेतज्ञाना इति शास्त्रे वेदे । ते नार्वाङ् अर्वाञ्चः नापि पराञ्चः चरन्ति उभयभ्रष्टा इत्यर्थः ॥ ३४ ॥

प्रजाभिरग्ने अमृतत्वमश्याम् । जायमानो वै ब्राह्मणस्त्रिभिर् ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति । एवमृणसंयोगादीन्यसंख्येयानि भवन्ति ॥ त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम् । य एतानि

**कुर्वते तैरित्सह रमो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्निति प्रशंसन्निति ॥ ३५-३६ ॥**

त्रिविधोऽत गृहस्थ उच्यते श्रेष्ठस्स । श्रीनेतान्विभजति वे दश्रुत्या । गृहस्थस्य स्त्र्यादानप्रभृत्याश्मशानकरणात्सर्वं विधीयते स्मृत्या । भाष्यकारोऽपि बहु मन्यते स्मास्य च गृहस्थाश्रमस्य देवश्रुतिविधानत श्रैष्ठ्यवचनात्तदविरोधेनाश्रमानन्तरमति पत्तिरवगम्यते इति वादम् । गौतमोऽपि तुशब्देन इतरौ पक्षौ व्यावृत्य सहेतुकमगु पक्षमेवोपसहृतवान् 'ऐकाश्रम्य त्वाचार्या प्रत्यक्षविधानात् गार्हस्थ्यस्य' इति । आचार्याभिप्रायस्तु विस्तरेण प्रदर्शित तस्मात्सूक्त 'ये चत्वार पथयो देवयाना इति कर्मवादो नाश्रमवाद' इति ॥ ३५ ३६ ॥

इति श्रीगोविन्दस्वामिविरचिते बोधायनधर्मसूत्र विवरणे द्वितीयप्रश्ने पष्ठोऽध्याय

---

स्नानमुक्त महायज्ञाश्च । अथेदानीं अवसरप्राप्त भोजनमारभते—

**अथ शालीनयायावराणामात्मयाजिनां प्राणाहुतीर्व्याख्यास्यामः ॥ १ ॥**

शालीनयायावराश्च गृहस्था एव केन चिद्वृत्तिविशेषेणोच्यन्ते । आत्मयाजी पुन 'जीर्णस्स्यात् तस्याग्निहोत्रनेष्ट याध्' इत्यनेन विधानेन तनि समारूढाग्नि । 'तस्यैवं वि॒षो यज्ञस्यात्मा यजमान [1] इत्यत्रोक्तो वा । एतेषामुपादान मुनेरपि च य

[1] तै आ. ९ १४.

माणेन विधिना भोक्तव्यम्, किमङ्ग पुनरन्यैराश्रमिभिरित्येतत्प्रदर्शयितुम् । प्राणवत आहुतय । प्राणशब्दोऽपानादीनामप्युपलक्षणाय ॥ १ ॥

**सर्वावश्यकावसाने संमृष्टोपलिप्ते देशे प्राङ्मुख उपविश्य तद्भूतमाह्रियमाणं भूर्भुवस्सुवरोमित्युपस्थाय वाचं यच्छेत् ॥ २ ॥**

अवश्य भाव्यावश्यक तन्नियोगतोऽहरह कर्तव्यम् । सर्वावश्यक परिसमाप्य मध्यंदिनात्प्रागेव 'पूर्वाह्णे वै देवाना मध्यंदिने मनुष्याणामपराह्णे पितृणाम्' इति श्रुते । तथा दाररक्षणमप्युक्तम्—'पञ्चमे भोजन स्मृतम्' इति । सम्मृष्टः शोधित । उपलिप्तो गोमयेनोदकेन च । देशग्रहण भूमौ पादनिधानार्थम्। तेन पादावासनमारोप्य न भुञ्जीतेति गम्यते । प्राङ्मुखत्व नित्यवत्कर्तव्यम् । उपवेशनग्रहणात् आसनशयननिवृत्ति क्रियते । तेनानेन मन्त्रेण उपस्थाय नमस्कृत्य मौनी भवेत् ॥ २ ॥

**न्यस्तमन्नं महाव्याहृतिभि प्रदक्षिणमुदकं परिषिच्य सव्येन पाणिनाऽविमुञ्चन्नमृतोपस्तरणमसीति पुरस्तादपः पीत्वा पञ्चान्नेन प्राणाहुतीर्जुहोति प्राणे निविष्टोऽमृतं जुहोमि शिवो माऽऽविशाप्रदाहाय प्राणाय स्वाहेति ॥ ३ ॥**

अन्नं महाव्याहृतिभिः 'भूरग्नये च पृथिव्यै च'[1] इत्यादिभिः प्रदक्षिणमुदकं परिषिच्य सव्येन पाणिना भोजनपात्रं अविमुञ्चन् अविसृजन् 'अमृतोपस्तरणमसि'[2] इत्यपः पिबेत् । पुरस्ताद्ग्रहणात् परिधानमन्नस्येति ज्ञापयति । तथोपरिष्टादिति । इतरथाऽन्यदन्नं भवेत् । 'अन्नममृतंच' इति श्रुतिः । अमृतमन्नं तस्योपस्तरणमुदकं तदेवापिधानं तत्त्वमसीत्युदकमामन्त्र्यते । 'अपोशान कर्म कुरु'[3] इति यदुक्तमुपनयनसमये तदिदम् । 'प्राणे निविष्टः'[4] इत्यन्तेन जुहोतीति सम्बन्धः । प्राणे प्राणार्थमभिनिविष्टोऽहममृतमन्नं जुहोमीति मय्येव । मां च शिवसुखहेतुः आविश अप्रदाहाय च भव स्वाहेति प्रदानप्रतिपादकः प्रयच्छामीति यावत् । एवमुत्तरेष्वपि यथासम्भवं योजनीयम् ॥ ३ ॥

पञ्चान्नेन प्राणाहुतीर्हुत्वा तूष्णीं भूयो व्रतयेत्प्रजापतिं मनसा ध्यायन्नान्तरा वाचं विसृजेयदन्तरा वाचं विसृजेद्भूर्भुवस्सुवरोमिति जपित्वा पुनरेव भुञ्जीत ॥ ४ ॥

अन्नेन पञ्चप्राणाहुत्यनन्तरं यथेष्टं व्रतयेद्भुञ्जीत । तूष्णींग्रहणेन वाग्यमनिवृत्तिः मन्त्रनिवृत्तिर्वा गृह्यते । ध्यायेदिति शेषः तेषामपाठः । तथा भूयश्शब्दात् 'अष्टौ ग्रासाः' इति गृह्यते ॥४॥

त्वक्केशनखकीटाखुपुरीषाणि दृष्ट्वा तद्देशपिण्डमुद्धृत्याद्भिरभ्युक्ष्य भस्मावकीर्य पु-

---

[1] तै. आ. १०-४. [2] तै. आ. १०-३२.
[3] तै. मं. २-६. [4] तै. आ. १०-३४.

**नरद्भिः प्रोक्ष्य वाचा च प्रशस्तमुपयुञ्जीत ॥ ५ ॥**

केशग्रहणं लोमनखादीनामपि प्रदर्शनार्थम् । कीटाः बृहतीफलादिषु भवेयुः । पुनः तद्ग्रहणं चाजीवमक्षिकापिपीलिकादीनामपि प्रदर्शनार्थम् । जीवतामपवादश्रवणात् 'मशकैर्मक्षिकैश्च निलीनं नोपहन्यते' इति । आखुपुरीषं गुदादिपुरीषग्रहणार्थं विड्वराहश्लोकसंगृहीतपरिग्रहार्थं च । यो देशः कीटादिसंयुक्तः तं देशम् । वाचा प्रशस्तस्योपयोगः प्रशस्तमित्युच्चरिते उपयोगः । उच्चारयिता च स्वयं वाऽन्यो वा ॥ ५ ॥

**अथाप्युदाहरन्ति—**

**आसीनः प्राङ्मुखोऽश्नीयाद्वाग्यतोऽन्नमकुत्सयन् । अस्कन्दयंस्तन्मनाश्च भुक्त्वा चाग्निमुपस्पृशेदिति ॥ ६ ॥**[1]

आसीनप्राङ्मुखत्वयोः पुनरुपादानं पञ्चप्राणाहुत्यन्ते तयोः पर्यवसानं मा भूदिति । वाग्यतोऽन्नं प्रतयेत् । तूष्णीग्रहणेनैव सिद्धत्वादनुवादः । अकुत्सयन् अगर्हयन् अपक्वाशृतादिदोषात् । अस्कन्दयन् भूमावनवकिरन् तन्मनाः अन्नमेव चिन्तयन् भुक्त्वा चाचान्तश्चाग्निमुपस्पृशेदिति योजना ॥ ६ ॥

---

1 "शूद्ररजस्वलापतितदर्शने नेत्रे प्रक्षाल्य भुञ्जीत" इत्यधिकं सूत्रम्.

सर्वभक्ष्यापूपकन्दमूलफलमांसादीनि दन्तै-
र्नावद्येत् ॥ ७ ॥

सर्वभक्ष्योदाहरणत्वेनापूपादिग्रहणम् । एतद्दन्तैर्नावद्येत् न खण्डयेत् दन्तखण्डितावशिष्टं पुनर्भक्षणाय नादद्यादित्यर्थः ॥ ७ ॥

नातिसुहितः ॥ ८ ॥

अत्यशनं वर्जयेत् । उक्तं च—न भुञ्जीतोद्धृतस्नेहं नाति सौहित्यमाचरेत्[1] । इति । अतो मिताशनमिति ॥ ८ ॥

अमृतापिधानमसीत्युपरिष्टादपः पीत्वाऽऽचान्तो हृदयदेशमभिमृशति प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्वेति ॥ ९ ॥

अमृतस्यापिधानमुपरि प्रच्छादनं उदकं तत्त्वमसीति मन्त्रार्थः । अभिमर्शनमन्त्रस्य वामदेव ऋषिः काण्डर्षिर्वा निचृद्गायत्रं छन्दः जीवो देवता । हृदयं जीवायतनं तत्रस्थो जीवः आमन्त्र्यते । ग्रन्थिः बन्धनं प्राणायतनं असि रुद्रः अन्तकः अन्तकरसन् मा अन्न विश अन्तको माभूरित्यर्थः । यज्जीवितं मम तेनान्नेन मां आप्यायस्व वर्धय ॥ ९ ॥

पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणी[2] निस्रा-

---

[1] मनु. ४-६२. [2] दक्षिणेन पादाङ्गुष्ठे पाणिना.

**वयति। अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः। ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुगिति ॥ १० ॥**

द्वाभ्यां हस्ताभ्यामुदकं निस्रावयेत्। अङ्गुष्ठमात्र इत्यृचः वामदेव ऋषिः अनुष्टुप्छन्दः आत्मा देवता। मात्रच्प्रत्ययः। आद्यः परमात्मा स्मृतः पुरुषः पुरि शेत इति व्युत्पत्त्या। आह च कृष्णद्वैपायनस्सावित्र्युपाख्याने—

अङ्गुष्ठमात्रं पुरुषं विचकर्ष यमो बलात् ॥ इति ॥

तत्परिमाणश्च तदाश्रयश्चासावीश्वरः जगतो जङ्गमस्य शास्ता वैवस्वतः प्रभुः प्रभूतं प्रीयतां विश्वं भुनक्ति भुङ्क्ते इति विश्वभुक् ॥ १०

**हुतानुमन्त्रणमूर्ध्वहस्तस्समाचरेत् श्रद्धायां प्राणे निविश्यामृतं हुतं प्राणमन्त्रेनाप्यायस्वेति पञ्च ॥ ११ ॥**

पञ्चैते मन्त्राः हुतानुमन्त्रणं तत्साधनं हुतस्य भुक्तस्यानुमन्त्रणमन्विष्य वदनं तदूर्ध्वहस्तस्समाचरेत् ॥ ११ ॥

**ब्रह्मणि म आत्माऽमृतत्वायेत्यात्मानम् ॥ १२**

स्वशरीरमनुमन्त्रयत इति शेषः। जीवपरमात्मानावेकीभावयेदिति मन्त्रार्थः ॥ १२ ॥

अक्षरेण चात्मानं योजयेत् ॥ १३ ॥

अक्षरं प्रणवः तेन आत्मानं प्रणवं क्षेत्रज्ञं वा एकीभूय ध्यायेदित्यर्थः ॥ १३ ॥

सर्वक्रतुयाजिनामात्मयाजी विशिष्यते ॥

विदुषः प्रशंसैषा । तथा च श्रुतिः—'स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत् स्यात्'' इति ॥

अथाप्युदाहरन्ति—

यथा हि तूलमैषीकमग्नौ प्रोतं प्रदीप्यते ।
तद्वत्सर्वाणि पापानि दह्यन्ते ह्यात्मयाजिनः ॥

इषीकं तृणविशेषः । तूलग्रहणात् शुष्कमिति शेषः । आत्मयाजी यथाविधि भुञ्जानः सर्वाणि इह जन्मनि जन्मान्तरे च कृतानि । श्रुतिरपि 'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति'' इति ॥ १५ ॥

केवलाघो भवति केवलादी । मोघमन्नं विन्दत इति ॥ १६ ॥

एवमविदुषो निन्दया विदुषः प्रशंसा । अघं पापं इतरथा केवलाघो भवेत् । कोऽसौ? केवलादी केवलाहारीत्यर्थः । स एव मोघमन्नं विन्दत इति अनया ऋचा निन्द्यते इति शेषः ।

[1] छा. ५-२४.

अस्य ऋषिर्भिक्षुः त्रिष्टुप्छन्दः । अन्नदानप्रशंसा । मोघमप्रधानं अन्नमप्रचेताः विन्दते भुङ्क्ते तस्य केवलाशनं वध एवेत्यर्थः । अथ वा--एतद्विशेषोर्वाक्यं, तस्य वध इत्युक्तं, तमाचेष्टयति नार्यमणं पुष्यति देवतार्थं न प्रयच्छतीति । नो सखायं नाप्यभ्यागतं पूजयति स एव केवलाघो भवति केवलादित्वात् । तदेतद्द्वितयेन गतश्लोकदर्शितविस्तरः ॥ १६ ॥

स एवमेवाहरहस्सायंप्रातर्जुहुयात् ॥१७॥

एतन्मन्यते 'सर्वावश्यकावसाने' इत्यस्य दिवसे कर्तव्यानामन्ते दिवाभोजिन इव एवं रात्रावित्ययमर्थ इति ॥ १७ ॥

रात्रौ भोजनद्रव्याभावे कथम् ?

अद्भिर्वा सायम् ॥ १८ ॥

भोजनीयम्, आचमनभोजनसामान्यात् ॥ १८ ॥

मनुष्याणां पौर्वापर्यमाह—

अथाप्युदाहरन्ति—

अग्रे भोजयेदतिथीनन्तर्वत्नीरनन्तरम् ।
बालवृद्धांस्तथा दीनान्व्याधितांश्च वि-
शेषतः ॥ १९ ॥

अन्तर्वत्नी गर्भिणी । ऋज्वन्यत् ॥ १९ ॥

अन्यथाकरणनिन्दा—

अदत्वा तु य एतेभ्यः पूर्वं भुङ्क्ते यथाविधि।
भुज्यमानो न जानाति न स भुङ्क्ते स
भुज्यते ॥ २० ॥

भुज्यमानः क्षीयमाणोपि न जानात्यात्मनोऽन्तर् । न हि स भोजनकर्ता । किं तर्हि? स भुज्यते कर्म भवति । यथा भुज्यमानं द्रव्यं क्षीयते एवं केवलादीत्यभिप्रायः ॥ २० ॥

पितृदैवतभृत्यानां मातापित्रोर्गुरोस्तथा ।
वाग्यतो विघसमश्नीयादेवं धर्मो विधीयत
इति ॥ २१ ॥

विघसः शेषः । तथा वसिष्ठोऽप्यतिथिपूजाप्रकरणेऽप्याह— 'श्रेयांसंश्रेयांसमानुपूर्व्येण । स्वगृह्याणां कुमारीबालवृद्धतरुणप्रजाताः । ततोऽपरान् गृह्यान् । श्वचण्डालपतितवायसेभ्यो भूमौ निर्वपेत् । शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यात् । शेषं दम्पती भुञ्जीयाताम्'* इति । वाग्यत इति पुनर्वचनमादरार्थम् ॥ २१ ॥

अथाप्युदाहरन्ति—

अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।
द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः॥

---

*वा. ध. ११-११.

अपरिमितं ग्रासाना परिमाणसङ्ख्यानियमो नास्तीत्यर्थः ॥ २२ ॥

**आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।**
**अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नतामिति ॥ २३ ॥**

अनडुद्ग्रहणं दृष्टान्तार्थम् । नैतेषां परिमितमित्येतत्सिध्यति । कर्मकर्तृत्वेनानश्नतामेषां न सिद्धिः कर्मणः । उपवासप्रतिषेधश्चायम्, आहिताग्नेर्ब्रह्मचारिणश्च उपवासे सति शुश्रूषाया कर्मणश्च लोपप्रसङ्गात् ॥ २३ ॥

किञ्च—

**गृहस्थो ब्रह्मचारी वा योऽनश्नंस्तु तपश्चरेत् ।**
**प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः ॥ २४ ॥**

प्राणाग्निहोत्रलोपनिन्दैषा । नन्वेवं सति पञ्चाहुतिलोप एव दोषस्स्यात्, नेतरग्रासलोपे । यथाऽग्निहोत्रहोमे हुतशेषप्राशनाभावे दोषो नास्ति तद्वदेतदपि । वक्तव्यो वा विशेषः । उच्यते । स्यादेतदेवं यद्यनशननिन्दा स्यात्, अपि तु अदन्तदशननिन्दैषा ॥ २४

किमेष एवोत्सर्गः सर्वदाऽशितव्यमेव नेत्याह—

**अन्यत्र प्रायश्चित्तात्प्रायश्चित्ते तदेव विधानम् ॥ २५ ॥**

उपवास एव साधीयानित्यर्थः ॥ २९ ॥

अथाप्युदाहरन्ति—

अन्तरा प्रातराशं च सायमाशं तथैव च ।
सदोपवासी भवति यो न भुङ्क्ते कदाचनेति

कालयोरन्तराऽनशनं तदुपवासफलं भवेत् । अतश्च नान्तरा भोजनं कर्तव्यम् ॥ २६ ॥

प्राणाग्निहोत्रमन्त्रांस्तु निरुद्धे भोजने जपेत् ।
त्रेताग्निहोत्रमन्त्रांस्तु द्रव्यालाभे यथा जपेदिति ॥ २७ ॥

निरुद्धे भोजने व्याध्यादिना द्रव्यासम्भवेन वा तदानीं 'भूर्भुवस्स्वः' इत्यादीन् प्राणाहुतिमन्त्रान् वा जपेत् उत्तमः ॥ २७ ॥

एवमाचरन् ब्रह्मभूयाय कल्पते ॥ २८ ॥

प्राणो ब्रह्म तद्रूपं तद्भावः ॥ २८ ॥

इति श्रीगोविन्दस्वामिकृते बोधायनधर्मविवरणे द्वितीयप्रश्ने सप्तमोऽध्यायः.



येन विधिना स्वयं भुञ्जीत तत्प्रतिपादयितुमधुना परभोजनं कारयितुं काम्यस्य विधानमुच्यते । द्विविधं भवत्यतिथिभोजनं श्रा-

द्धभोजनं च । तद्दिशनी श्राद्धमुच्यते —

**पित्र्यमायुष्यं स्वर्ग्यं यशस्यं पुष्टिकर्म च ॥ १॥**

पितृदेवत्यं पित्र्यं श्राद्धम् । तदेव आयुष्यमायुषे हितम् । स्वर्ग्यं स्वर्गसाधनम् । यशस्यं यशंसनीयम् । पुष्टिकर्म सर्वसुखसम्प्राप्ति भावलक्षण श्राद्धं करिष्याम इति सङ्कल्प क्रियते ॥ १ ॥

कान् पुनश्श्राद्धे भोजयेदित्याह—

**त्रिमधुस्त्रिणाचिकेतस्त्रिसुपर्णः पञ्चाग्निष्षडङ्गविच्छीर्षको ज्येष्ठसामिकस्स्नातक इति पङ्क्तिपावनाः ॥ २ ॥**

त्रयो मधुशब्दवन्तो मन्त्रा 'मधु वाता ऋतायते'[1] इत्यादयः । ते येन बहुशोऽभ्यस्ता स त्रिमधुः । त्रिणाचिकेतो नामाध्वर्यूणां व्रतं तच्चारी 'अयं वाव यः पवते'[2] इत्यनुवाकत्रयं विद्वान् । त्रिसुपर्णो नाम बह्वृचानां व्रतं तच्चारी त्रिसुपर्णं 'ब्रह्म मेतु माम्'[3] इत्यनुवाकत्रयं विद्वान् । पञ्चाग्निः सभ्यावसथ्याभ्यां सह । षडङ्गवित् प्रसिद्धः । शीर्षकः शिरोव्रतिकः अथर्वणामेतच्छिरोव्रतनाम । ज्येष्ठसाम 'मूर्धानं दिवः'[4] इत्यस्यामुत्पन्नं तद्योऽधीते स ज्येष्ठसामिकः । एवमुक्तलक्षणः स्नातको वेदितव्यः । पङ्क्तिपावनाः पङ्क्तिशोधकाः ॥ २ ॥

**तदभावे रहस्यवित् ॥ ३ ॥**

रहस्यमरण्ये पठितव्यो ग्रन्थो यः तमर्थतो ग्रन्थतश्च वेत्ति

[1] ऋसं १-९-१८ [2] तै आ ३-११-७
[3] याज्ञिकी ४८ [4] ऋसं ४-५-९

चः 'मधु वाता'[1] इत्यादीनि त्रीणि। पवित्राणि 'पवमानस्सुवर्जन'[2] इत्यादीनि । भुञ्जानान् ब्राह्मणान् श्रावयेत् ॥ ५ ॥

**चरणवतोऽनूचानान्योनिगोत्रमन्त्रासम्बन्धाञ्छुचीन्मन्त्रवतस्त्र्यवरानयुजः पूर्वेद्युः प्रातरेव वा निमन्त्र्य सदर्भोपक्लृप्तेष्वासनेषु प्राङ्मुखानुपवेशयत्युदङ्मुखान्वा ॥ ६ ॥**

चरणमाचारः । यद्वा—गुरुपूर्वक्रमागतं शाखाध्ययनं तद्विहितोपनयनं च येषां ते चरणवन्तः । वेदाङ्गाध्यायिनोऽनूचानाः । योन्यसम्बन्धाः मातृपित्रसम्बन्धाः । गोत्रासम्बन्धाः असगोत्राः । मन्त्रासम्बन्धाः अशिष्योपाध्यायाः । शुचयो बाह्यान्तरयोः । मन्त्रवन्तः श्रोत्रियाः । त्रिप्रभृतीनयुग्मानेतेषां च समस्तभावः कल्प्यः । निमन्त्रणं श्वः करिष्यामि प्रसीदन्तु भवन्तः भोक्तुमित्येवमादि ॥ ६ ॥

**अथैनांस्तिलमिश्रा अपः प्रतिग्राह्य गन्धैर्माल्यैश्चालङ्कृत्याग्नौ करिष्यामीत्यनुज्ञातोऽग्निमुपसमाधाय सम्परिस्तीर्याग्निमुखात्कृत्वाऽऽज्यस्य तिस्र आहुतीर्जुहोति । सोमाय पितृपीताय स्वधा नमस्स्वाहा । यमायाङ्गिरस्वते पितृमते स्वधा नमस्स्वाहा । अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमस्स्वाहेति ॥ ७ ॥**

---

[1] ऋक्सं १ ६ १८ [2] तै ब्रा १-४ ८

करिष्यामीत्युक्ते कुरुष्वेत्यभ्यनुज्ञात इति शेषः । अन्यतो हि प्राप्त्यर्थमाग्निमुखादित्युक्तम् ॥ ७ ॥

**तच्छेषेणान्नमभिघार्य अन्नस्यैता एव तिस्र आहुतीर्जुहुयात् ॥ ८ ॥**

तच्छेषेण आज्यशेषेण अन्नस्य अन्नेनेत्यर्थः एता इत्याहुतिमन्त्रान्व्यपदिशति ॥ ८ ॥

**वयसां पिण्डं दद्यात् ॥ ९ ॥**

वयश्शब्देन इह काका गृह्यन्ते ॥ ९ ॥

पितृभ्यो दातव्ये वयोभ्यः पिण्डदाने कारणमाह—

**वयसां हि पितरः प्रतिमया चरन्तीति विज्ञायते ॥ १० ॥**

प्रतिमया आकारेण ॥ १० ॥

**कराङ्गुष्ठेन पाणिनाऽभिमृशति ॥ ११ ॥**

भोक्तुकामस्य ब्राह्मणस्य कराङ्गुष्ठेन अनगेन स्वपाणिना भोज्यद्रव्यमभिमृशति । स्वपाणिर्व्यवहितकारणम् ॥ ११ ॥

तत्रैते मन्त्राः—

**पृथिवीसमं तस्य तेऽग्निरुपद्रष्टर्चस्ते महिमा दत्तस्याप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितॄणां क्षेष्ठा अमुत्रामुष्मिन्**

लोक इति । अन्तरिक्षसमं तस्य ते वायुरुपश्रोता यजूंषि ते महिमा दत्तस्याप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितामहानां क्षेष्ठा अमुत्रामुष्मिन् लोक इति। द्यौस्समं तस्य त आदित्योऽनुख्याता सामानि ते महिमा दत्तस्याप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा प्रपितामहानां क्षेष्ठा अमुत्रामुष्मिन्लोके इति॥१२॥

एते त्रयो मन्त्राः पृथिव्यन्तरिक्षद्युक्रमाः । लोकानां तावन्महिमा एष वेदितव्यः यदेतद्दीयतेऽन्नं तदामन्त्रवचने । पृथिव्या समं तस्यैवंविधस्य तव अग्निरुपद्रष्टा साक्षिभूतः एवमुपश्रोता अनुख्यातेति च । ऋचस्ते महिमा महत्त्वम् । एवमुपासनया दत्तस्यान्नस्याप्रमादो भवति । पृथिव्येव तव पात्रं आधारः द्यौरेवापिधानं ब्रह्मणो ब्राह्मणस्य मुखे त्वा जुहोमि ब्राह्मणानामित्यादि जुहोमीत्यन्तं प्रतिपत्तिमात्रम् । अक्षितमसि मा क्षेष्ठाः क्षयं मा गाः । पित्रादीनां परस्मिन् लोके ॥ १२ ॥

अग्नौ करणशेषेण तदन्नमभिघारयेत् ।
निरङ्गुष्ठं तु यद्दानं न तत्प्रीणाति वै पितॄन् ॥

हस्ताङ्गुष्ठेनाभिमर्शनमुक्तम् । तदभावे निन्दैषा ॥ १३ ॥

उभयोश्शाखयोर्मुक्तं पितृभ्योऽन्नं निवेदितम् ।
तदन्तरमुपासन्ते असुरा दुष्टचेतसः ॥१४॥

सव्येन पाणिना भाजनमुपस्पृश्यैव भुञ्जीतेत्येतदनेन विधीयते शाखयोः हस्तयोः ॥ १४ ॥

यातुधानाः पिशाचाश्च प्रतिलुम्पन्ति तद्धविः ।
तिलदाने ह्यदायादास्तथा क्रोधवशोऽसुराः ॥

भोजनस्थानेषु आसनस्थानेषु च तिलविकिरणस्याक्रोधस्य च प्रशंसैषा ॥ १५ ॥

काषायवासा यान्कुरुते जपहोमप्रतिग्रहान् ।
न तद्देवगमं भवति हव्यकव्येषु यद्धविः ॥

दैवे कर्मणि पित्र्ये च काषायवासोनिषेधः श्वेतवाससा भवितव्यं इति विधानार्थम् । किञ्च—काषायवाससो यतीश्वराः । तेऽपि पित्र्ये दैवे कर्मणि च जपहोमप्रतिग्रहान् कुर्वते तद्देवगमं पितृगमं च न भवतीति शेषः । हव्यं देवदेवत्यं कव्यं पितृदेवत्यम् ॥ १६ ॥

यत्र दत्तमनङ्गुष्ठं यत्रैव प्रतिगृह्यते ।
आचामति च यस्तिष्ठन् न स तेन समृध्यत इति ॥ १७ ॥

प्रदानप्रतिग्रहयोरङ्गुष्ठस्यान्तर्हिर्भावार्थः, तिष्ठतः आचमननिषेधार्थश्चायं श्लोकः ॥ १७ ॥

**आद्यन्तयोरपां प्रदानं सर्वत्र ॥ १८ ॥**

सर्वत्र दाने श्रद्धानेनादावन्ते च जलदानं कर्तव्यम् । तथा च गौतमः—'भिक्षादानमप्पूर्वं ददातिषु'[1] इति ॥ १८ ॥

**जयप्रभृति यथाविधानम् ॥ १९ ॥**

दार्विहोमिकमुत्तरतन्त्रं कर्तव्यमित्यर्थः ॥ १९ ॥

**शेषमुक्तमष्टकाहोमे ॥ २० ॥**

इतोऽधिकमष्टकाहोमादाववगमयितव्यम् । 'आशयेष्वन्नशेषान् सम्प्रकिरन्ति'[2] इत्यादि । अनेनैतत् ज्ञापितं भवति मासिश्राद्धे सोऽपि वेदितव्यः प्रयोगान्तरमिति ॥ २० ॥

**द्वौ देवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।**
**भोजयेत्सुसमृद्धोपि न प्रसज्जेत विस्तरे ॥२१**

देवे वैश्वदेवे ॥ २१ ॥

इतरथा दोषमाह—

**सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम् । पञ्चैतान्विस्तरो हन्ति तस्मात्तं परिवर्जयेत् ॥ २२ ॥**

कारुण्यात् स्नेहात् लोकगर्हाभयाद्वा श्राद्धविस्तरे प्रसक्ते सति प्रतिषेधः ॥ २२ ॥

---

[1] ५-१८. [2] गो. गृ. ४-११-४१.

**उरस्तः पितरस्तस्य वामतश्च पितामहाः। दक्षिणतः प्रपितामहाः पृष्ठतः पिण्डोदका इति ॥ २३ ॥**

श्रद्धासंजननोऽर्थवादः । पिण्डोदकाः पिण्डचिन्तकाः मातामहादयः ॥ २३ ॥

इति श्रीगोविन्दस्वामिकृते बोधायनधर्मविवरणे
द्वितीयप्रश्नेऽष्टमोऽध्यायः.

---

औरसेन हि पुत्रेणर्णापाकरणं भवति । अतस्तत्प्रशंसार्थमाह—

**प्रजाकामस्योपदेशः ॥ १ ॥**

प्रजा सत्पुत्रः तत्कामस्योपदेशः करिष्यते ॥ १ ॥

**प्रजननिमित्ता समाख्येत्यश्विनावूचतुः ॥**

प्रजननमुत्पादनं तन्निमित्ता पुत्र इति समाख्या प्रसिद्धिरित्यर्थः । न तु दानादिनिमित्ता पुत्रसमाख्या अतो दत्तादिरत्र प्रतिनिधिः । तत्रैते ऋचौ भवतः—'परिषद्यं ह्यरणस्य रेक्णो, न हि ग्रभाय'[1] ॥ २ ॥

प्रजाकामस्योपदेश इत्युक्तम् । कोऽसावुपदेश इत्याह—

**आयुषा तपसा युक्तस्स्वाध्यायेज्यापरायणः । प्रजामुत्पादयेद्युक्तस्स्वेस्वे वंशे जितेन्द्रियः ॥ ३ ॥**

आयुश्शब्देन तत्करणं लक्ष्यते । तच्च विधिवत्सन्ध्योपासनं विप्रापवादाभाव इत्यादि । आह च—

---

[1] ऋक्सं. ५-२-६.

ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः ।
आयुर्विमापवादेन सन्ध्यावन्दनहानतः ॥
अतिथिपूजाहानाच्च नश्यत्यायुरपि ध्रुवम् ।
नाधितिष्ठेत केशांस्तु न भस्मास्थिकपालकान् ।
न कार्पासास्थि न तुषान् दीर्घमायुर्जिजीविषुः ॥ इति ॥

तथा—

न हीदृशमनायुष्यं लोके किञ्चन विद्यते ।
यादृशं पुरुषस्येह परदारोपसेवनम् ॥
लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः ।
स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च ॥[1]

इत्येवमादि द्रष्टव्यम् । तपो दानम् । 'एतत्खलु वाव तप इत्याहुर्यस्स्वं ददाति' इति श्रुते । वक्ष्यमाणं वा ब्रह्मचर्यादि । स्वाध्यायेज्ये तु प्रसिद्धे एव । स्वे इति । स्वयं ब्राह्मणो ब्राह्मण्यामित्यादि । इन्द्रियमिह उपस्थमभिप्रेत पुत्रकारणत्वात् । जय परदारादिवर्जनम्, स्वदारेष्वप्यकालवर्जनं च । एते प्रजोत्पत्त्युपाया यथा विधानं क्रियमाणाः प्रजोत्पत्त्युपाया भवन्तीत्यभिप्रायः ॥ ३ ॥

ब्राह्मणस्यर्णसंयोगस्त्रिभिर्भवति जन्मतः ।
तानि मुच्यात्मवान् भवति विमुक्तो धर्मसंशयात् ॥ ४ ॥

ब्राह्मणग्रहणात् स्वमूलश्रुतिप्रमाणं द्रष्टव्यम् । त्रिभिः अवश्य-

[1] मनु. ४ ७१, १३४

कर्तव्यैरिति शेषः । जन्म उपायनं ततः प्रभृति ऋणवान् भवति । ततः प्राक् शूद्रसमत्वात् । तानि कर्माणि ऋणानि विमुच्य यथाविधि सम्पाद्य आत्मवान् स्वतन्त्रो भवति । यस्मादयं धर्मसंशयात् किमेतानि यथावत् सम्पादयितुं शक्ष्यामो न वेत्येवंरूपसंशयाद्विमुक्तो भवति ॥ ४ ॥

केन कर्मणा तदृणमपाक्रियत इत्याह—

स्वाध्यायेन ऋषीन् पूज्य सोमेन च पुरन्दरम् । प्रजया च पितॄन्पूर्वाननृणो दिवि मोदते ॥ ५ ॥

सोमेन सोमयागेन ॥ ५ ॥

आयुषा युक्तः प्रजामुत्पादयेदित्युक्तम् । तत्राह—

पुत्रेण लोकान् जयति पौत्रेणामृतमश्नुते । अथ पुत्रस्य पौत्रेण नाकमेवाधिरोहतीति ॥ ६ ॥

पुत्रेण दृष्टेन । तत्पुत्रेण तत्पौत्रेण इत्यत्रापि दृष्टेनेतिशेषः । अमृतं देवैस्सायुज्यम् । नाकं कमिति सुखमेतस्मातिषिध्यते । दुःखाननुविद्धं सुखं ब्रह्मणः पदमिति यावत् । 'दिवि मोदते' इति सिद्धे पुनरुपादानं बहुपुत्रोत्पादनार्थम् । अथाहुः पौराणिकाः—

एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत्।
एष्टव्या बहवः पुत्राः नीलं वा वृषमुत्सजेत्॥ इति ॥

अथेदानीं ऋणसंयोगतदपाकरणे श्रुतिप्रमाणके इत्याह—

विज्ञायते च—जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इत्येवमृणसंयोगं वेदो दर्शयति ॥ ७ ॥

तदपाकरणं चेति शेषः ॥ ७ ॥

किंच—

सत्पुत्रमुत्पाद्यात्मानं तारयति ॥ ८ ॥

सत्पुत्रस्साधुपुत्रः अध्ययनविज्ञानानुष्ठानसम्पन्नो यथा भवति तथोत्पादनीयः पुत्र इत्यर्थः । 'अनुशिष्टं लोक्यं पुत्रमाहुः तस्मादेनमनुशासति' इतिश्रुतेः ॥ ८ ॥

इदं चान्यत्—

सप्तावरान् सप्तपूर्वान् षडन्यानात्मसप्तमान्।
सत्पुत्रमधिगच्छानः तारयत्येनसो भयात् ॥

अधिगच्छानः प्राप्नुवान् सप्तपूर्वापरानात्मसप्तमान् अन्यान् अकृतपुत्रान् एनसस्तारयतीति सम्बन्धः ॥ ९ ॥

**तस्मात्प्रजासन्तानमुत्पाद्यफलमवाप्नोति ॥**

**तस्माद्यत्नवान् प्रजामुत्पादयेत् ॥ ११ ॥**

**औषधमन्त्रसंयोगेन ॥ १२ ॥**

ओषधिसंयोगेन हि प्रजा भवति, शुक्लपानां क्रिमीणामपनयनात् । तथा मन्त्रसंयोगेनापि रक्षःपिशाचाद्यपनयनात् । 'तस्माद्यत्नवान् प्रजामुत्पादयेत्' इत्यस्य विस्तरः ॥ १०–१२ ॥

न चैतावता—

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः[1] ॥

इत्येवमाशङ्कनीयमित्याह—

**तस्योपदेशः श्रुतिसामान्येनोपदिश्यते ॥**

तस्य प्रजोत्पादने यत्नतः औषधाद्युपदेशोऽस्माभिरुपदिश्यते । केन मूलज्ञानेनेति? श्रुतिसामान्येन श्रुतेस्समानभावस्तुल्यता ऐकरूप्यं श्रुतिसामान्यं तेन । किमुक्तं भवति? प्रजामुत्पादयेदित्यस्याः श्रुतेः पुत्रकामेष्ट्यौषधमन्त्रादिषु नैकरूपेणापेक्षिकत्वादिति ॥

इदानीमृणश्रुतौ ब्राह्मणग्रहणं क्षत्रियवैश्ययोरपि प्रदर्शनार्थमेतदित्याह—

**सर्ववर्णेभ्यः फलवत्त्वादिति फलवत्त्वादिति ॥ १४ ॥**

---

[1] मनु. १२-९५.

**फलवत्त्वात्** प्रयोजनवत्त्वात् । फलमिहोपनयनस्याध्ययनं तच्च वेदार्थज्ञानाद्युपयुक्तत्वात् त्रैवर्णिकानामित्यर्थः । यद्वा—फलवत्त्वात् औषधमन्त्रादेरपि ॥ १८ ॥

इति श्रीगोविन्दस्वामिकृते बोधायनधर्मविवरणे
द्वितीयप्रश्ने नवमोऽध्यायः



## अथातस्संन्यासविधिं व्याख्यास्यामः ॥ १॥

सम्यक् न्यासः मतिप्रहाणं संन्यासः विधिर्विधानमितिकर्तव्यता ॥ १ ॥

## सोऽत एव ब्रह्मचर्यवान् प्रव्रजतीत्येकेषाम्॥

**स** इति सर्वनाम्ना प्रसिद्धो निर्दिश्यते । स च गर्भाधानादिसंस्कारैस्संस्कृतः अधीतवेदो चीर्णव्रतो गृहस्थाश्रमप्राप्तियोग्यो गृह्यते । तत्रापि दृष्टानुश्रविकविषयवितृष्णस्य ब्रह्मविदो ब्रह्मचर्यादेव संन्यासेऽधिकारो नान्यस्य । इदमपरं तस्य विशेषणं **ब्रह्मचर्यवानिति** । अतश्चाविप्लुतब्रह्मचर्यस्यापि चरितनिर्वेषस्य गृहस्थसंन्यासवनाश्रमाधिकारः । **प्रव्रजति** प्रकर्षेण व्रजति न प्रत्यावर्तते इत्यर्थः । तत्र दोषमाह—

चण्डालादिमत्यवसिता परिव्राजकतापसाः ।
तेषां जातान्यपत्यानि चण्डालैस्सह वासयेत् ॥

संवासात्तत्र प्रायश्चित्तं संवर्त आह—

सन्यस्य दुर्मतिः कश्चित्प्रत्यापत्तिं भजेत यः ।
स कुर्यात्कृच्छ्रमश्रान्तं षाण्मासात्प्रत्यनन्तरम् ॥ इति ॥

एतदेकेषां मतम् ॥ २ ॥

अथ परेषामाह—

अथ शालीनयायावराणामनपत्यानाम् ॥

शालीनयायावरा इति च गृहस्थानामेव केनचिद्वृत्तिविशेषेण संज्ञामुत्तरस्मिन्नध्याये वक्ष्यति । अनपत्याश्चेदेतेऽपि प्रव्रजेयुः ॥३॥

एवमथ सापत्यानामपि—

विधुरो वा ॥ ४ ॥

स्वस्मिन् संजात इति शेषः । विधुरो मृतभार्यः भार्यान्तरोपादानार्थमसमर्थश्च गृह्यते ॥ ४ ॥

साम्प्रतमविधुरस्यापि सापत्यस्याह—

प्रजाः स्वधर्मे प्रतिष्ठाप्य वा ॥ ५ ॥

अयमसमर्थस्याग्निहोत्रादिषु समर्थापत्यस्याधिकारः ॥ ५ ॥

अयमपरः कालनियमः पूर्वैस्समुच्चीयते विकल्पार्थः तत्तैकराश्यापेक्षया—

सप्तत्या ऊर्ध्वं संन्यासमुपदिशन्ति ॥ ६ ॥

प्रायशस्सप्तत्या ऊर्ध्वमेव भार्यानिवृत्तिरस्य गार्हस्थ्यधर्मानुष्ठानासामर्थ्यं वा भवतीति तत्त्वत उक्तं सप्तत्या ऊर्ध्वमिति ॥ ६ ॥

## वानप्रस्थस्य संसारकर्मविरामे ॥ ७ ॥

विरामोऽवसानम् । असामर्थ्यमाश्रमविहितधर्मानुष्ठाने । अस्यामवस्थायां मव्रज्याप्रव्रज्य वा वानप्रस्थेनापि ध्यानपरायणेन भवितव्यं वानप्रस्थान्तरेभ्य एव भैक्षमाददानेन । उक्तावस्थाव्यतिरिक्तावस्थासु कृतोपि संन्यासोऽकृत एव भवति ॥ ७ ॥

संप्रत्युक्तलक्षणानामप्यनात्मविदां संन्यासाधिकाराभावं दर्शयितुमृचं पठति—

## एष नित्यो महिमा ब्राह्मणस्य
## न कर्मणा वर्धते नो कनीयान् ।
## तस्यैवात्मा पदवित्तं विदित्वा
## न कर्मणा लिप्यते पापकेनेति ॥ ८ ॥

सैषाऽऽश्रमचातुर्विध्यप्रस्तावेऽस्माभिर्व्याख्याता । तं विदित्वैवेत्येतदत्रोपयुज्यते ॥ ८ ॥

अस्यामृचि नित्यो महिमेति पदद्वयमस्ति । तत्तावदुपपादयति—

## अपुनर्भवं नयतीतिनित्यः ॥ ९ ॥

पुनर्भवः पुनर्जन्म तदभावं नयतीति नित्यः पदविन्यासेनेत्यर्थः ॥

## महत्त्वं गमयतीति महिमा ॥ १० ॥

स्पष्टार्थमेतत् ॥ १० ॥

विधिं व्याख्यास्याम इत्युक्तं, तमाह—

**केशश्मश्रुलोमनखानि वापयित्वोपकल्पयते ॥ ११ ॥**

पूर्वाह्णे वपनं कृत्वा अपराह्णे उपकल्पयते आर्जयति ॥ ११ ॥ किं तदित्याह—

**यष्टयश्शिक्यं जलपवित्रं कमण्डलुं पात्रमिति ॥ १२ ॥**

यष्टयो दण्डाः द्वितीयार्थे प्रथमा । शिक्यं रज्जुनिर्मितं भिक्षापात्रधारणम् जलपवित्रमुदकस्यापनयनहेतुभूतं आचमनार्थं वस्त्रम् । तच्चाभिनवं केशादिरहितं च द्विगुणं त्रिगुणं चाष्टाङ्गुलं प्रादेशमात्रं भवति । उक्तः कमण्डलुः । पात्रं भैक्षाचरणार्थम् । तत्र विकल्पः—'अलाबुं दारुपात्रं वा मृण्मयं वैणवं तथा'[1] इति । इतिशब्दः पादुकाद्युपलक्षणार्थः । तथा हि—

पादुकामजिनं छत्रं तथा सूत्रमुपानहौ ।
सूचीपल्लवपल्कं च त्रिविष्टब्धं कमण्डलुम् ॥

एतेष्वन्यतमाभावेऽपि दोषाभावख्यापनार्थमिदम् ॥ १२ ॥

**एतत्समादाय ग्रामान्ते ग्रामसीमान्तेऽग्न्यगारेवाऽऽज्यं पयो दधि त्रिवृत्प्राश्य उपवसेदपो वा ॥ १३ ॥**

आपरिसमाप्तेर्न भुञ्जीत । अपां त्रिवृता सह विकल्पस्सम्प्रदेश ॥ १३ ॥

---

[1] मनु. ६-५४.

तस्य प्राशनमन्त्रः—

**ओं भूस्सावित्रीं प्रविशामि तत्सवितुर्वरेण्यम् । ओं भुवस्सावित्रीं प्रविशामि भर्गो देवस्य धीमहि । ओं सुवस्सावित्रीं प्रविशामि धियो यो नः प्रचोदयात् । पच्छोऽर्धर्चशस्ततस्समस्तया च व्यस्तया च ॥**

प्रणवव्याहृतिसावित्रीपादैः सावित्र्याः पच्छो विहरणमेतदित्यर्थः । अर्धर्चशः सावित्र्या प्रणवव्याहृतिभिर्विहरेत् । ततश्च समस्तयाऽनवानमुच्चरितयैव विहरेत् । व्यस्तया पच्छोऽन्ते विरम्योच्चरितया विहरेदेव ॥ १४ ॥

**आत्मानमात्मन आश्रमादाश्रममुपनीय ब्रह्मपूतो भवतीति विज्ञायते ॥ १५ ॥**

आश्रमान्तरमितिवचनात्त्रिवृत्प्राशनादूर्ध्वं प्रत्यापत्तिर्नास्तीति दर्शयति । ब्रह्म सावित्री तया पूत त्रिवृत्प्राशनेनैव संन्यासः कृत इत्येतदेकीयं दर्शनम् ॥ १९ ॥

तथा परेषाम्—

**अथाप्युदाहरन्ति—**

**आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः ।**

**भिक्षाबलिपरिश्रान्तः पश्चाद्भवति भिक्षुक इति ॥ १६ ॥**

न केवलं त्रिवृत्प्राशनादेव भिक्षुकः । किं तर्हि? वक्ष्यमाणैर्होमादिभिरपि । भिक्षुकः इति 'सञ्ज्ञायाम्' इति कन्प्रत्ययः ॥

**स एष भिक्षुरानन्त्याय ॥ १७ ॥**

तदेवानन्त्यं स चात्मा तद्भावाय भवतीत्यर्थः ॥ १७ ॥

हुतहोम इत्युक्तं, तदिदानीं प्रपञ्चयति—

**पुराऽऽदित्यस्यास्तमयाद्गार्हपत्यमुपसमाधायान्वाहार्यपचनमुपसमाहृत्य ज्वलन्तमाहवनीयमुद्धृत्याज्यं गार्हपत्ये विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्याहवनीये पूर्णाहुतिं जुहोति ओं स्वाहेति ॥**

नात्र तिरोहितं किञ्चिदस्ति ॥ १८ ॥

**एतद्ब्रह्मान्वाधानमिति विज्ञायते ॥ १९ ॥**

यथा दर्शपूर्णमासयोरन्वाधानं तथैतदपि ब्रह्मप्रवेशस्य ॥ १९ ॥

**अथ सायं हुतेऽग्निहोत्र उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु द्वन्द्वं न्यञ्चि पात्राणि**

**सादयित्वा दक्षिणेनाहवनीयं ब्रह्मायतने दर्भान् संस्तीर्य तेषु कृष्णाजिनं चान्तर्धायैतां रात्रिं जागर्ति ॥ २० ॥**

आहवनीयशब्द परिगृहीताग्निपरिग्रहार्थ । अत ओपवसन्तीत्योपवसम् । तेनापि तत्सान्निकर्षं इदं कर्तव्यम् । जागर्ति बुध्यते । एषा हि ब्रह्मरात्रि । अन्यदसंवृतम् ॥ २० ॥

**य एवं विद्वान् ब्रह्मरात्रिमुपोष्य ब्राह्मणोऽग्नीन् समारोप्य प्रमीयते सर्वं पाप्मानं तरति तरति ब्रह्महत्याम् ॥ २१ ॥**

अग्नीन् समारोप्य आत्मनीति शेष । वक्ष्यमाणस्यात्मसमारोपणस्य अस्मिन्नप्यवसरे पाठोऽप्यन्त परस्मिन्नपि कमेऽग्निसमारोपणाभ्यनुज्ञानार्थं । एतदवस्थापन्नस्य मृतस्याश्रमफलप्राप्तिर्भवतीत्यभिप्राय ॥ २१ ॥

**अथ ब्राह्मे मुहूर्त उत्थाय काल एव प्रातरग्निहोत्रं जुहुयात् ॥ २२ ॥**

रात्रे पश्चिमो याम पञ्चघटिकावशेषो ब्राह्मो मुहूर्त । उपप्रभृत्योदयादित्येके । तत्र शक्त्यपेक्षो विकल्प । कालग्रहण उपोदयाभ्युषितोदयकालाना यस्य योऽङ्गीकृत वाऽस्तत्प्रदर्शनार्थम् ॥ २२ ॥

अथ पृष्ठ्यांस्तीर्त्वाऽपः प्रणीय वैश्वानरं द्वादशकपालं निर्वपति सा प्रसिद्धेष्टिस्सन्तिष्ठते ॥ २३ ॥

अग्निर्वैश्वानरो देवता अस्य । औपासननिष्ट आत्मसमारोपश्चेत् तद्दैवत्यः चरुः । अन्यत्प्रसिद्धम् ॥ २३ ॥

आहवनीयेऽग्निहोत्रद्रव्याणि प्रक्षिपेदमृण्मयान्यनायसानि ॥ २४ ॥

उत्तरत्र मन्त्रविधानात् तूष्णीमेवात्र प्रक्षेपः ॥ २४ ॥

गार्हपत्ये अरणी भवतं नस्समनसाविति ॥

प्रक्षिपतीत्यनुवर्तते ॥ २५ ॥

अथात्मन्यग्नीन् समारोपयते या ते अग्ने यज्ञिया तनूरिति त्रिस्त्रिरेकैकं समाजिघ्रति ॥

एकैकमग्निं सभ्यावसथ्यावपि यदि विद्येते, तथा औपासनमपि । जिघ्रतिः गन्धोपादाने वर्तते । ततश्च धूपायने* नाग्नेराघ्राणं कर्तव्यमिति गम्यते । सर्वत्रायमात्मसमारोपणप्रकारः ॥ २६ ॥

अथान्तर्वेदि तिष्ठन् ओं भूर्भुवस्सुवः संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति त्रिरुपांशूक्त्वा त्रिरुच्चैः ॥ २७ ॥

---

* धूपायमाने. (पा)

जुहुयादिति वाक्यसमाप्तिः । संन्यस्तमित्युक्तम् ॥ २७ ॥

त्रिपत्या हि देवा इति विज्ञायते ॥ २८ ॥

त्रिपत्याः । सुपामादिषु पाठात् पत्वम् । देवा हि सकृद्विर्वोक्तिनामिति मन्यतेऽनृतम्, 'अनृतसम्मिता मनुष्याः' इति श्रुतेः । त्रिरुक्ते प्रतियन्ति श्रद्दधति ॥ २८ ॥

अभयं सर्वभूतेभ्यो मत्तः इति चापां पूर्णमञ्जलिं निनयति ॥ २९ ॥

अस्मत्तः निर्भयानि भूतानि सन्त्विति मन्त्रार्थः । अद्भिः पूर्णोऽञ्जलिः द्विहस्तसंयोग ॥ २९ ॥

अथाप्युदाहरन्ति –

अभयं सर्वभूतेभ्यो दत्वा यश्चरते मुनिः। न तस्य सर्वभूतेभ्यो भयं चापि हि जायते इति ॥ ३० ॥

अभयदानप्रशंसेषा । एतदन्तश्च सन्यासविधिः । ये पुनरनग्नयो विधुरादयः तेषामप्युपकल्पप्रभृति दानान्तः प्रायोऽग्निकार्यरहितो द्रष्टव्यः ॥ ३० ॥

सन्यासाश्रमधर्मविधानायान्त प्रपञ्च —

स वाचंयमो भवति ॥३१॥

यः एवंकृतसंन्यासः स वाचंयमस्स्यात् आत्मनिरूमैतदुक्तम-

न्यंत्र स्वाध्यायान्मन्त्रोच्चारणाच्च । उक्तं च—'स्वाध्यायादिषु विसृजन्तो वाचम्' इति ॥ ३१ ॥

यष्टयश्शिक्यं जलपवित्रं कमण्डलुं पात्रमुद्धृत्यैतत्समादाय यत्रापस्तद्गतस्स्नात्वाऽप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरिति मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन षोडशप्राणायामान् धारयित्वोत्तीर्य वासः पीडयित्वाऽन्यत्प्रयतं वासः परिधायाप आचम्यों भूर्भुवस्सुवरिति जलपवित्रमादाय तर्पयति—ओं भूस्तर्पयाम्यों भुवस्तर्पयाम्यों सुवस्तर्पयाम्यों महस्तर्पयाम्यों जनस्तर्पयाम्यों तपस्तर्पयाम्यों सत्यं तर्पयामि ॥ ३२ ॥

आश्रमसाधारणविहितानां स्नानादीनामनुक्रमणं षोडशप्राणायामानामपि विधानार्थं तर्पणान्तरविधानार्थं च । तर्पणं जलपवित्रनिस्सृतेन ॥ ३२ ॥

देववत्पितृभ्योऽञ्जलिमुपादाय ओं भूस्स्वधों भुवस्स्वधों सुवस्स्वधों भूर्भुवस्सुवर्महर्नम इति ॥ ३३ ॥

तर्पयतीति प्रकृतम् । देववदिति प्राचीनावीतनिवृत्त्यर्थम् । मन्त्रा अपि स्वाकरणमात्रा । न चतुर्थीनमस्कारान्ता ॥

एवं तर्पणे कृते—

**अथोदु त्यं चित्रमिति द्वाभ्यामादित्यमुपतिष्ठते ॥ ३४ ॥**

द्व जपित्वा वक्ष्यमाणमुपस्थानम् ॥ ३४ ॥

**ओमिति ब्रह्म ब्रह्म वा एष ज्योतिः य एष ज्योतिः य एष तपत्येष वेदो य एष तपति वेद्यमेवैतद्य एष तपति एवमेवैष आत्मानं तर्पयत्यात्मने नमस्करोति आत्मा ब्रह्मात्मा ज्योतिः ॥ ३५ ॥**

प्रणवप्रशंसया । प्रणवो ब्रह्मणो नेदिष्ठमभिधानम् । वदयतीति प्रणवो वेदः वेद्यं वेदितव्यम् । एष इत्यपरोक्षनिर्देश सर्वदा आदित्यप्रणवब्रह्मतादात्म्यप्रतिपत्त्यर्थं । एवमादित्योपस्थानेच्छया मनस्समाधानं कर्तव्यमित्यर्थं । तथा च पातञ्जलसूत्रम्— 'तस्य वाचक प्रणव । तज्जप तदर्थभावनम्' इति च । तदन्यदप्य यमेवागमप्रकार । एवमेवैषः भिक्षुरात्मानं तर्पयतिनमस्करोति ब्रह्म ज्योतिः ब्रह्म परिवृढ सर्वत ज्योतिः ज्योतिर्दीप्तिरर्थं ॥ ३५ ॥

**सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा ॥ ३६ ॥**

विवृतमेतत्तत्रतत्र ॥ ३६ ॥

कमण्डलूदकग्रहणार्थमाह—

ओं भूर्भुवस्स्वरिति पवित्रमादायापो गृह्णाति।

पवित्रं तेन पावयित्वा जन्त्वादिवारणार्थम् ॥ ३७ ॥

नातऊर्ध्वमनुद्धृताभिरद्भिरपरिस्रुताभिरपरिपूताभिर्वाऽऽचामेत् ॥ ३८ ॥

अनुद्धृताभिः अन्तर्जलाशयात् । अपरिस्रुताभिः परिमिताभिः । पवित्रान्तेनापरिपूताभिः ॥ ३८ ॥

न चातऊर्ध्वं शुक्लं वासो धारयेत् ॥३९॥

शुक्लप्रतिषेधात् कुङ्कुमकुसुममञ्जिष्ठरक्तमनुज्ञातमेव ॥ ३९ ॥

एकदण्डी त्रिदण्डी वा ॥ ४० ॥

उक्तेऽपि दण्डत्रित्वे विकल्पाभिधानं किमर्थम्? उच्यते—सकलाश्रमधर्मानुष्ठाने सति दण्डसङ्ख्यायां नाभिनिवेशः कर्तव्य इत्यभिप्रायः ॥ ४० ॥

भिक्षोर्हि द्विविधानि व्रतानि भवन्ति महाव्रतान्युपव्रतानि च । तत्र महाव्रतान्याचष्टे—

अथेमानि व्रतानि भवन्ति । अहिंसा सत्यमस्तैन्यं मैथुनस्य च वर्जनं त्याग इति ॥

गुरुशुश्रूषा पित्रोश्च परिचारणम् । विद्यागुरोर्वा । यद्यपि विदितवेदितव्यस्य सन्यासेऽधिकार । तथाऽपि संशयनिरोधनं संभाव्यत इति गुरुशुश्रूषया भवितव्यम् । असमीक्ष्यकारित्व प्रमादः तदभावोऽप्रमादः । आहारदोषोऽपि त्रिधा भवति जात्याश्रयनिमित्तैर्लशुनपतितकेशादिभिस्तदाहारशुद्धिः । चशब्दस्सन्तोषादिपरिग्रहार्थ । व्रतोपव्रतयोर्भेदेन विधान प्रायश्चित्तगुरुलघुत्वस्योपपादनार्थम् ॥ ४१ ॥

**अथ भैक्षचर्या ब्राह्मणानां शालीनयायावराणामपवृत्ते वैश्वदेवे भिक्षां लिप्सेत ॥**

भिक्षाणा समूहो भैक्ष तच्चर्या तदार्जनम् ब्राह्मणानां गेहेष्वित्यध्याहार । भिक्षां भिक्षितव्यद्रव्य लिप्सेत याचेत ॥४२॥

अथ भिक्षामन्त्र —

**भवत्पूर्वां प्रचोदयेत् ॥ ४३ ॥**

'भवति भिक्षाम्' इत्यादिसिद्धे सत्यारम्भात्क्षत्रियवैश्यभिक्षुकयोरयमेव मन्त्र । तयोरपि सन्यासेऽधिकारोऽस्तीति ज्ञापित भवतीति । तत्पुनर्ब्राह्मणपरिव्राजकन्यायकरूपमादिक प्रसिद्ध समीक्ष्य युक्तायुक्ततया विचारणीयम् ॥ ४३ ॥

**गोदोहनमात्रमाकांक्षेत् ॥ ४४ ॥**

मन्त्रमुक्त्वेति शेष ॥ ४४ ॥

**अथ भैक्षचर्यामुपाहृत्य शुचौ देशे न्यस्य हस्तपादान्प्रक्षाळ्यादित्यस्याग्रं निवेद्य उदु**

त्यं चित्रमिति प्रक्षाळ्याचम्य ब्रह्मणे निवेदयते ब्रह्मजज्ञानमिति ॥ ४५ ॥

पृथगेतौ पिटकस्थौ शुचौ देशे निधाय ॥ ४५ ॥

अथास्य प्राणाहुतय एवाग्निकार्यं इत्यस्मिन्नर्थे श्रुतिमुदर्शयति–

विज्ञायते–आधानप्रभृत्ययमेवा[1]ग्नयो भवन्ति तस्य प्राणो गार्हपत्योऽपानोऽन्वाहार्यपचनो व्यान आहवनीय उदानसमानौ सभ्यावसथ्यौ ॥ ४६ ॥

आधीयन्तेऽग्नय आत्मनीत्यात्मसमारोपणमाधानं तत्प्रभृतीत्यर्थः ॥

पञ्च वा एतेऽग्नय आत्मस्थाः ॥ ४७ ॥

उक्तानुवादोऽयम् । पञ्चसंख्या सभ्यावसथ्यकरणपक्षमाश्रित्य । अकरणपक्षेऽपि तत्सङ्कल्पोऽस्त्येव । 'आहवनीये सभ्यावसथ्ययोस्सङ्कल्पः' इत्याधानपरिभाषावचनात् ॥ ४७ ॥

यस्मादेव तस्मात्—

आत्मन्येव जुहोति ॥ ४८ ॥

एवशब्दः 'यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम्[2]' इत्येवमाशङ्कानिवृत्त्यर्थः ॥ ४८ ॥

स एष आत्मयज्ञ आत्मनिष्ठ आत्मप्रतिष्ठ आत्मानं क्षेमं नयतीति विज्ञायते ॥४९॥

[1]प्रभृति यजमान एव

[2]आप. ध. २-१५-११

यत एवमस्यात्मयज्ञता भवति आत्मप्रतिष्ठा तथा सिद्ध्यति। आत्मोपासकस्यात्मसुखप्राप्तचर्या यस्यैकरूपा बुद्धिः असावात्मप्रतिष्ठ। सेषा पूर्वोपासनाय प्रशस्ता ॥ ४९ ॥

भूतेभ्यो दयापूर्वं संविभज्य शेषमद्भिस्संस्पृश्यौषधवत्प्राश्नीयात् ॥ ५० ॥

भूतानि पक्षिसरीसृपादीनि। दया अनुकम्पा। तत्पूर्वं संविभज्य प्रदायाद्भिस्संस्पृश्य शुद्ध्यर्थं दृष्टार्थमेतत्। औषधमिति गरं विवक्षितम्। तथाऽप्यसौ बलिविधिर्भवतीत्यभिप्रायः ॥ ५० ॥

प्राश्याप आचम्य ज्योतिष्मत्याऽऽदित्यमुपतिष्ठते उद्वयं तमसस्परीति ॥ ५१ ॥

भैक्षभोजनादन्यत्राप्येतद्वेदितव्यम् ॥ ५१ ॥

अथ भिक्षाप्रकारः —

अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया। आहारमात्रं भुञ्जीत केवलं प्राणयात्रिकमिति ॥

अयाचितमप्रार्थितम्। असंक्लृप्तमनवक्लृप्तं मनसाऽपि। यदृच्छयोपपन्नमिति केचित्। यदृच्छयोपपन्नं प्रयोजनान्तरवशादानीतम्। आहारमात्रं सूपोपदंशादिविस्ताररहितम्। प्राणयात्रिकं यथा प्राणो नापगच्छति ॥ ५२ ॥

अथाप्युदाहरन्ति—अष्टौ ग्रासा मुनेर्भक्ष्याः

षोडशारण्यवासिनः । द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥ ५३ ॥

अल्पान्नाभ्यवहारार्थोऽयं नियमः ॥ ५३ ॥

भैक्षं वा सर्ववर्णेभ्य एकान्नं वा द्विजातिषु। अपि वा सर्ववर्णेभ्यो न चैकान्नं द्विजातिष्विति ॥ ५४ ॥

सर्ववर्णग्रहणात् शूद्रान्नमप्यभ्युपगतम् । अतश्चैकान्नपक्षेऽपि बीजादिग्रहणं मुख्यस्यैव ॥ ५४ ॥

अथ यत्रोपनिषदमाचार्या ब्रुवते तत्रोदाहरन्ति । स्थानमौनवीरासनसवनोपस्पर्शनचतुर्थषष्ठाष्टमकालव्रतयुक्तस्य ॥ ५५ ॥

यत्र ग्रहणं चित्तप्रणिधानं तत्रोपनिषद्रहस्य कर्तव्यतयाऽऽचार्या ब्रुवते । तत्र तद्विशेषनियममुपदिशन्ति स्म । स्थानं हिमोत्तुङ्गः । मौनं स्वाध्यायतोपि । वीरासनमेकरूपेणासनम् । रात्रौ विशेषः । चतुर्थषष्ठाष्टमकालता एकाहद्व्यहत्र्यहानि क्रमः व्रतमनशनं त्रिभिस्संबध्यते ॥ ५५ ॥

कणपिण्याकयावकदधिपयोव्रतत्वं चेति ॥

क णास्तण्डुलावयवाः । पिण्याकं तिलपिष्टम् । यवतण्डुलक्षोदा यवागूर्वा यावकम् ॥ ५६ ॥

**तत्र मौने युक्तस्त्रयीविद्यवृद्धैराचार्यैर्मुनिभिरारण्यैराश्रमिभिर्बहुश्रुतैर्दन्तैर्दन्तान् सन्धायान्तर्मुख एव मौनयुक्तेन प्राप्यते सम्भाष्यानूच्यते ॥ ५७ ॥**

त्रयी ग्रन्थतोऽर्थतश्च यैरसमधिगता ते त्रयीविद्यवृद्धाः अप्याचार्या मुनय परिव्राजका । अन्त्याश्रमग्रहणान्नैष्ठिकतापसयोर्ग्रहणम् । दन्तैर्दन्तानिति सम्भाषादिकमन्यो यथा न शृणुयादित्यर्थ ॥ ५७ ॥

सर्वत्राशक्तावाह—

**स्थानमौनवीरासनानामन्यतमेन सम्प्रयोगो यत्रार्थं सन्निपतेत् ॥ ५८ ॥**

वक्ष्यमाण यत्तदपेक्षणीयम् ॥ ५८ ॥

अथ व्रतविषय एव किञ्चिदुच्यते—

**यत्र गतश्च यावन्मात्रमनुव्रतयेत् आपत्सु न यत्र लोपो भवतीति विज्ञायते ॥५९॥**

आपत्सु यथेष्टमाशित्वा कणादीनामप्यन्यतम पश्चादश्नीयादित्यर्थ ॥ ५९ ॥

अन्यदप्यस्याव्रतघ्नमाह—

**अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः ।**
**हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधमिति ।**

हविः क्षारलवणवर्जम् । ब्राह्मणकाम्या ब्राह्मणाभ्यर्थना । एवमहविष्यमपि गुरोर्वचनात् । औषधार्थमहविष्यमपि ॥ ६० ॥

**सायं प्रातरग्निहोत्रमन्त्रान् जपेत् ॥ ६१ ॥**

यदग्निहोत्रेऽधीयते तदाहिताग्नेस्ततो भिक्षुकस्य ॥ ६१ ॥

**वारुणीभिस्सायं सन्ध्यामुपतिष्ठेत मैत्रीभिः प्रातः ॥ ६२ ॥**

द्वयोर्द्वयोः प्राप्तयोः ऋग्नीनां विधानमेतत् । तच्च वारुण्यो 'यच्चिद्धि ते'* इति तिस्रः । मैत्र्यचः पुनः प्रसिद्धे द्वे 'प्रसमित्र'* इत्येषा च ॥ ६२ ॥

**अनग्निरनिकेतस्स्यादशर्माशरणो मुनिः ॥**

शर्म ग्रहणम् । शरणं परानुग्रहः । उक्तं च 'हिंसाऽनुग्रहयोरनारम्भी' इति । इतिशब्द एवंप्रकाराणां

न शब्दशास्त्राभिरतस्य मुक्तिर्न लोकचित्तग्रहणे रतस्य ।
न भोजनाच्छादनतत्परस्य न चैव रम्यावसथप्रियस्य ॥

इत्यादीनां प्रदर्शनार्थः ॥ ६३ ॥

**भिक्षार्थी ग्राममन्विच्छेत् ॥ ६४ ॥**

भिक्षाशब्दो जलपवित्रादेरपि प्रदर्शनार्थः ॥ ६४ ॥

**स्वाध्याये वाचमुत्सृजेदिति ॥ ६५ ॥**

---

*तै. स. ३-४-११.

स्वाध्यायः प्रणवः समस्तवेदो वा ॥ ६९ ॥

**विज्ञायते च—परिमिता वा ऋचः परिमितानि सामानि परिमितानि यजूंष्यथैतस्यैवान्तो नास्ति यद्ब्रह्म तत्प्रतिगृणत आचक्षीत स प्रतिगर इति ॥ ६६ ॥**

अस्ति द्वादशाहे दशमेऽहनि मानसे ग्रहे चातुर्होत्रविधानं 'अथ ब्रह्म वदन्ति' इति । ब्रह्म होतारः 'ब्रह्म वै चतुर्होतारः'* इति दर्शनात् । परिमिता वा इत्यादि । अयमर्थः—ऋगादयो मन्त्राः परिमिताः । एतस्य पुनश्चतुर्होत्राख्यस्य ब्रह्मणोऽन्तो नास्ति तस्मात्तदेव प्रतिगृणते अध्वर्यव आचक्षीत एताः । एवं कृते ब्रह्मणो ब्रह्मैव प्रतिगरस्सम्पद्यते । एवं हि तत्राध्वर्युः प्रतिगृणाति 'ओं होतः' इति । गृणातिश्शब्दकर्मा भाषणकरणमित्यर्थः । किमुक्तं भवति? यथा—मानसस्य प्रणवः प्रतिगरः एवं मौनिनोऽपि प्रणव एव स्वाध्याय इति ॥ ६६ ॥

**एवमेवैष आशरीरविमोक्षणाद्वृक्षमूलिको वेदसंन्यासिकः ॥ ६७ ॥**

गृहस्थः एवंकृतकरणीयोऽभिधीयते । न हि वेदसंन्यासोऽस्ति शास्त्रविरोधात् । अतस्तदर्थानुष्ठानाय प्रतिग्रहादिना वृत्तिकर्मणा सन्न्यासो वर्तयेत्यर्थः । अवसन्नशरीरो जरसा कृतसम्प्रतिविधानो वा पुत्रोपहृतवृत्तिस्तस्यायमुपदेशः आशरीरविमोक्षणात् वृक्षमूलिक इति । अथ यस्तावत्समर्थो गृहात् प्रव्रज्यायाः तस्य यथा

शास्त्र सैव भवति । असमर्थस्य पुनरस्तमृष्टाग्नेरशास्त्राद्वा इयमेव चोद्यते । प्रव्रज्या च वैकल्पिकी । एव च प्रव्रज्यानन्तरमुपदेशो युज्यत इति । आह च—

वेदसन्यासिकाना तु कर्मयोगं निबोधत[1] । इत्यभिप्राय कृत विधानो वा आसीन्मम दर्शनादिति(?) । एवमिति वक्ष्यमाण प्रणवध्यान परामृश्यते । एवमुक्त भवति—परमसयमिवत्परमात्मध्यानेन काल पुन पुत्रैश्वर्ये सुखमासीतेति ॥ ६७ ॥

वृक्षमूलिक इत्युक्तम्, तत्राह—

## वेदो वृक्षः तस्य मूलं प्रणवः ॥ ६८ ॥

वृक्षो व्रश्चनात् पापस्य । प्रणवपूर्वत्वाद्वेदारम्भस्य मूलव्यपदेश ॥ ६८ ॥

## प्रणवात्मको वेदः ॥ ६९ ॥

आत्मा सार प्रणवसारो वेद । तथा च श्रुति—'तेभ्योऽभितप्तेभ्य ओंकार प्रस्राव' इति । आह च—

अकार चाप्युकार च मकार च प्रजापतिः ।
वेदत्रयान्निरदुहत् भूर्भुवस्स्वरितीति च ॥[2]

## प्रणवो ब्रह्म ॥ ७० ॥

उक्तार्थमेतन् 'स प्रतिगर' इत्यत्र । परमात्मतादात्म्यध्यानमनेनाभिप्रेतम् ॥ ७० ॥

---

[1] मनु ६-८६ [2] मनु २-७६

**एवंव्रतः ब्रह्मभूयाय कल्पत इति होवाच प्रजापतिः ॥ ७१ ॥**

ब्रह्मभूयाय ब्रह्मभावाय । अमोघं हि प्रजापतेर्वाक्यम् ॥७१॥

**सप्तव्याहृतिभिर्ब्रह्मभाजनं प्रक्षाळयेदिति प्रक्षाळयेदिति ॥ ७२ ॥ १८ ॥**

सप्तव्याहृतयो भूराद्याःसत्यान्ताः । ब्रह्मभाजनं भिक्षापात्रं 'अन्नं ब्रह्म'* इति श्रुतेः । यद्वा—ब्रह्मभाजनं शरीरं तदुक्त्वा प्रक्षाळयेदिति ॥ ७२ ॥

इति श्रीगोविन्दस्वामिकृते बोधायनधर्मविवरणे
द्वितीयप्रश्ने दशमोऽध्यायः
द्वितीयः प्रश्नस्समाप्तः

---

यजनदण्डकृषिवाणिज्यादयो वर्णविशेषव्यवस्थया वृत्त्युपाया अभिहिताः । अथेदानीमाश्रमविशेषव्यवस्थया वृत्त्युपाया वक्तव्या इत्यत आह—

**अथ शालीनयायावरचक्रचरधर्मकाङ्क्षिणां नवभिर्वृत्तिभिर्वर्तमानानाम् ॥ १ ॥**

वृत्त्युपाया वक्ष्यन्त इति शेषः । गृहस्थविशेषाः केचिच्छालीनयायावराः । शालीनयायावरशब्दौ स्वयमेव व्युत्पादयति—'शालाश्रयत्वाच्छालीनत्वम्' इत्यादि । सर्वेषामप्याश्रमिणां स्वकीयधर्मकाङ्क्षित्वे सति विशेषोपादानमेतदर्थम् । तच्च क्षिप्रं पुरुषापेक्षणम् ॥ १ ॥

---

* तै. उ. ३. २.

याभिश्शरीरयात्रा वर्तते ता वृत्तय काश्चन भवन्ति। तत्राह—

**तेषां तद्वर्तनाद्वृत्तिरित्युच्यते ॥ २ ॥**

अनेन वृत्तिशब्दो व्युत्पाद्यते । तेषां शालीनयायावराणां तद्वर्तनाच्छरीरस्य वर्तनात् दर्शितमेतदस्माभि पूर्वसूत्रे ॥ २ ॥

**शालाश्रयत्वाच्छालीनत्वम् । वृत्त्या वरया यातीति यायावरत्वम् । अनुक्रमचरणाच्चक्रचरत्वम् ॥ ३ ॥**

अन्वर्थसंज्ञा एता । विस्तीर्णाभि शालाभिर्युक्ताश्शालीना । यथा—'जानश्रुतिर्ह पौत्रायण सर्वत आवसथान् मापयाचक्रे सर्वत एवमेऽन्नमत्स्यन्तीति'[1] । तद्वतेऽपीति । खप्रत्ययो मत्वर्थीय । अनुक्रमेण चरणमनुक्रमचरणम् । यायावराणामिवैषा संज्ञा । अनुक्रमचरणं नाम विप्रक्षत्रियविशां गेहेषु पूर्वस्यपूर्वस्याभावे उत्तरोत्तरचरणम् । वृत्त्या वरया उत्कृष्टया यापयत्यात्मानमिति । णिचो लोपो द्रष्टव्य ॥ ३ ॥

**ता अनुव्याख्यास्यामः ॥ ४ ॥**

क्रमेण ता वृत्तीः विविच्य व्याख्यास्याम ॥ ४ ॥

**षण्णिवर्तनी कौद्दाली ध्रुवा सम्प्रक्षालिनी समूहा पालिनी सिलोञ्छा कापोता सिद्धेच्छेति नवैताः ॥ ५ ॥**

एता अप्यन्वर्थसंज्ञा एव । एतासामिन्न रूपमुपरितनेऽध्याये स्वयमेव निपुणतर विवरिष्यते ॥ ५ ॥

---

[1] छा उ ४-१-१

तासामेव वान्याऽपि दशमी वृत्तिर्भवति ॥

वान्या वनसम्बन्धिनी वन्यधान्यमूलफलाहारेण वृत्तिः, यामेना दशमीमित्याचक्षते साऽपि तासामेवान्यतमेत्याचार्याभिप्रायः। वन्याया पृथगुपादानमितराभ्य प्राशस्त्यप्रतिपादनार्थम् ॥ ६ ॥

आनववृत्तेः ॥ ७ ॥

नव वृत्तयो यस्य तस्यानुष्ठानं वक्ष्यत इति शेषः। आङ् अत्राभिविधौ। अतश्च दशमीमाश्रितवतो वक्ष्यमाणो विधिर्न भवति ॥ ७ ॥

केशश्मश्रुलोमनखानि वापयित्वोपकल्पयते। कृष्णाजिनं कमण्डलुं यष्टिं वीवधं कुथहारिमिति ॥ ८ ॥

उपकल्पनमार्जनम्। वीवधो दृढदारूमयतशिशक्यम्। कुथहारि वासवशासनदात्रम्। इतिशब्दः कुद्दालादेर्वक्ष्यमाणस्य उपलक्षणार्थः। एतानि नवानि भवेयुः ॥ ८ ॥

त्रैधातवीयेनेष्ट्वा प्रस्थास्यति वैश्वानर्या वा॥

प्रस्थास्यति निर्गच्छति। आहिताग्नेरेविर्यं विधिः। इतरस्यापि तद्देवत्यश्चरुरिष्यते। एतत्पूर्वेद्युरेव कार्यम् ॥ ९ ॥

अथान्येद्यु —

प्रातरुदित आदित्ये यथासूत्रमग्नीन् प्रज्वाल्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुक्स्रु-

वं निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वाऽऽहवनीये वास्तोष्पतीयं जुहोति ॥१०

यथासूत्रं आत्मीयशास्त्रानुसारेण वास्तोष्पतीयहोमो यागानुष्ठानम् । ऋज्वन्यत् ॥ १० ॥

सर्व एवाहिताग्निरित्येके ॥ ११ ॥

अधिकारिनिर्देशः । त्रैधातवीयादेरविशेषेण सर्वस्याप्याहिताग्नेः प्रयाणे निमित्त एतदित्येकीयं मतम् ॥ ११ ॥

यायावर इत्येके ॥ १२ ॥

यायावरस्याहिताग्नेश्चेत्यपरम् ॥ १२ ॥

निर्गत्य ग्रामान्ते ग्रामसीमान्ते वाऽवतिष्ठते तत्र कुटीं मठं वा करोति कृतं वा प्रविविशति ॥ १३ ॥

ग्रामान्तो वास्तुसीमा । इतरः क्षेत्रसीमा । कुटी एकस्थूणं वेश्म । मठो बहुस्थूण ॥ १३ ॥

कृष्णाजिनादीनामुपक्लृप्तानां यस्मिन्नर्थे येनयेन यत्प्रयोजनं तेनतेन तत्कुर्यात् । प्रसिद्धमग्नीनां परिचरणम् । प्रसिद्धं दर्शपूर्णमासाभ्यां यजनम् । प्रसिद्धः पञ्चानां

महतां यज्ञानामनुप्रयोगः । उत्पन्नाना-
मोषधीनां निर्वापणं दृष्टं भवति ॥ १४ ॥

उत्पन्नाना तस्मिन् काले। अभिनवानामहन्यहन्यार्जितानां वा ॥ १४

विश्वेभ्यो देवेभ्यो जुष्टं निर्वपामीति वा तू-
ष्णीं वा ताः संस्कृत्य साधयति ॥ १५ ॥

ओषधीनां संस्कारोऽवहननादि । साधनं पाकः । एवं-
भूतमोदनमग्नौ कृत्वा तच्छेषं स्वयं नाग्यतो भुञ्जीतेत्यभिप्रायः ॥

तस्याध्यापनयाजनप्रतिग्रहा निवर्तन्ते ॥ १६

द्रव्यार्जनस्य उपायान्तरविधानात् अध्यापनादीनां च निवृत्तिरुक्ता॥

अन्ये च यज्ञक्रतव इति ॥ १७ ॥

अन्यत्र दर्शपूर्णमासव्यपेक्षम् । एतेऽपि निवर्तन्ते । इतिकरणा-
त्पूर्तादयोऽपि निवर्तन्ते ॥ १७ ॥

हविष्यं च व्रतोपनीयं [1]दृष्टं भवति ॥ १८॥

व्रतोपनीयं भोज्यम् ॥ १८ ॥

तदाह—

सर्पिर्मिश्रं दधिमिश्रमक्षारलवणमपिशित-
मपर्युषितम् ॥ १९ ॥

---

[1] 'व्रतोपायनीयम्' इति पाठान्तरम्

क्षाररसः हिङ्ग्वादि । पिशितं पक्वं मांसम् । पर्युषितं पक्वमोदनमुषोऽन्तरितमतीतं च ॥ १९ ॥

**ब्रह्मचर्यमृतौ वा गच्छति ॥ २० ॥**

ब्रह्मचर्यं रेतस उत्सर्गाभावः । ऋतौ वा गच्छति कृतार्थाकृतार्थापेक्षो विकल्पः ॥ २० ॥

**पर्वणिपर्वणि केशश्मश्रुलोमनखवापनं शौचविधिश्च ॥ २१ ॥**

शौचस्य बाह्याभ्यन्तरस्य च विधिश्शौचाधिधानाध्याय एवोक्तः॥ तथाऽप्युक्तं स्मारयितुमाह—

**अथाप्युदाहरन्ति—**

**श्रूयते द्विविधं शौचं यच्छिष्टैः पर्युपासितम्।**
**बाह्यं निर्लेपनिर्गन्धमन्तश्शौचमहिंसनम्॥**

द्विविधस्याप्युदाहरणमाह—

**अद्भिश्शुद्ध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुद्ध्यति । अहिंसया च भूतात्मा मनस्सत्येन शुद्ध्यतीति ॥ २३ ॥**

व्याख्यातश्श्लोकः । अन्तश्शौचमहिंसनमित्येतद्विवानपरोऽयं प्रपञ्चः ॥ २३ ॥

इति श्रीगोविन्दस्वामिकृते बोधायनधर्मविवरणे तृतीयप्रश्ने प्रथमोऽध्यायः.

अथोक्ता वृत्तीरानुपूर्व्येणानुक्रम विवृणोति—

**यथो एतत् षण्णिवर्तनीति ॥ १ ॥**

यथो एतदिति निपात उक्तानुभाषणार्थ 'यथो एतद्धुत प्रहुत आहुत'[1] इति यथा । यथा वा 'यथो एतदेकस्य स' इति । नवाना वृत्तीना षण्णिवर्तनीति या प्रथम पठिता ता विवरिष्यामीत्यर्थ ॥ १ ॥

**षडेव निवर्तनानि निरुपहतानि करोति स्वामिने भागमुत्सृजत्यनुज्ञातं वा गृह्णाति । प्राक्प्रातराशात्कर्षी स्यादस्यूतनासिकाभ्यां समुष्काभ्यामतुदन्नारया मुहुर्मुहुरभ्युच्छन्दयन् । एतेन विधिना षण्णिवर्तनानि करोतीति षण्णिवर्तनी ॥२**

निवर्तन नाम भूम्याकर्षण कृषीवलाना प्रसिद्धम् । इयदेक निवर्तनमिति निपातकृत अपकृष्टमेत्र षट्संख्यानविशिष्टानि निवर्तनान्यकृतक्षेत्राणि स्वक्षेत्राणि समापादयन्तीत्यर्थ । तत्र निष्पन्नस्योपधेरय विशेष —स्वामिने भागमित्यादि । भूस्वामिने भागोऽश । पर क्षेत्रविषयमेतत् । सामर्थ्यात् स चेदनुजानीयात्सर्वं स्वयमेव गृह्णीयात् । स्वक्षेत्रेषु नाय विधि स्वक्षेत्रत्वात् । [दापतोपायोऽय ?] प्राक्प्रातरित्यादि व्याख्यातम् । एतेन विधानेन षण्णिवर्तनीशब्द व्युत्पादयन्नुपसहरति ॥ २ ॥

---

1 श्रा सू १ १-१

कथं कौद्दालीत्याह—

कौद्दालीति जलाभ्याशे कुद्दालेन वा फालेन वा तीक्ष्णकाष्ठेन वा खनति बीजान्यावपति कन्दमूलफलशाकौषधीर्निष्पादयति। कुद्दालेन करोतीति कौद्दाली ॥ ३ ॥

अभ्याशे समीपे अपरिग्रहे । कुद्दालमयोमुखं काष्ठम् । फालमायस्यं खनीभूतमिति यावत् । तीक्ष्णाग्रं काष्ठं प्रसिद्धम् । एतेषां सम्भवापेक्षो विकल्पः । खनति विखनति ततो बीजान्यावपति कन्दादीनाम् । कन्दमामोपयोग्यम् । मूलं पक्वोपयोग्यम् । अन्यत्प्रसिद्धम् ॥ ३ ॥

तृतीया वृत्तिः ध्रुवा । तामाह—

ध्रुवायां वर्तमानश्शुक्लेन वाससा शिरो वेष्टयति । भूत्यै त्वा शिरो वेष्टयामीति ॥ ४ ॥

प्रत्यारम्भ इति केचित् । अहरहरित्यन्ये । एवं कृष्णाजिनादानेष्वपि द्रष्टव्यम् ॥ ४ ॥

ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेति कृष्णाजिनमादत्ते। अब्लिङ्गाभिः पवित्रम् । बलमसि बलाय त्वेति कमण्डलुम् ॥ ५ ॥

आदत्त इत्यनुवर्तते ॥ ५ ॥

धान्यमसि पुष्टै त्वेति वीवधम् । सखा मा गोपायेति दण्डम् । अथोपनिष्क्रम्य व्याहृतीर्जपित्वा दिशामनुमन्त्रणं जपति । पृथिवी चान्तरिक्षं च द्यौश्च नक्षत्राणि च या दिशः । अग्निर्वायुश्च सूर्यश्च पान्तु मां पथि देवता इति । मानस्तोकीयं जपित्वा ग्रामं प्रविश्य गृहद्वारेगृहद्वार आत्मानं वीवधेन सह दर्शनात्संदर्शनीत्याचक्षते ॥

ध्रुवा हि वृत्तिर्भिक्षाटनप्राधान्यात् । भैक्षभाजनं च वीवधः । तत्र प्रतिगृहमुपनिष्क्रम्य व्याहृतीर्जपति । दिशामनुमन्त्रणम्—'पृथिवी च' इति मन्त्रः । 'मा नस्तोके'* इति गृहद्वारे । आत्मानं वीवधेन गृहचारिभ्यस्संदर्शयित्वा तूष्णीमेव गोदोहनकालमात्रं तिष्ठेत् । एतस्मादेव लिङ्गादेतस्या वृत्तेस्संदर्शनीति संज्ञान्तरमाचक्षते ॥ ६ ॥

वृत्तेर्वृत्तेरवार्तायां तयैव तस्य ध्रुवं वर्तनाद्ध्रुवेति परिकीर्तिता ॥ ७ ॥

वृत्तेरिति वीप्सादर्शनात् अवार्तायामवार्तायामित्यध्याहार्यम् । वृत्त्यवार्ताशब्दौ द्रव्यलाभालाभवचनौ । प्रथमो वृत्तिशब्दः प्राणयात्रामात्रप्रसिद्ध्यर्थद्रव्यार्जनवचनः । तयैव भिक्षया वर्तेत । तस्य ध्रुवमित्याद्युपसंहारः । ध्रुवं निश्चयेन ॥ ७ ॥

* तै. सं. ४-५-१०.

किंलक्षणा सम्प्रक्षाळनीत्यत आह—

सम्प्रक्षाळनीति । उत्पन्नानामोषधीनां प्रक्षेपणं निक्षेपणं नास्ति निचयो वा भाजनानि संप्रक्षाळ्य न्युब्जतीति संप्रक्षाळनी॥

उत्पन्नानामुत्पादयितुमङ्कुरीकर्तुं योग्यानां बीजानामित्यर्थः । ओषधीनां व्रीह्यादिबीजानां प्रक्षेपणं बीजावापनम् । यद्वा पूर्वमेवोत्पन्नानां यात्रामात्रप्रसिद्ध्यर्थमार्जनमित्यर्थः । नास्तीत्येतत्काकाक्षिवत् प्रक्षेपणनिक्षेपणनिचयेषु सम्बध्यते । निक्षेपणं निक्षेपः पाञ्चां भोजनवेळायां, निचयस्संचयः आत्मपक्षे न संचयो न कर्तव्य इत्यर्थः । किं तर्हि कुर्यात्? अहरेव भाजनानि सम्प्रक्षाळ्य न्युब्जति न्यञ्चं करोति । सेषा सम्प्रक्षाळनी वृत्तिः॥

समूहा नाम पञ्चमी । सा कीदृशीत्याह—

समूहेति । अवारितस्थानेषु पथिषु वा क्षेत्रेषु वाऽप्रतिहतावकाशेषु वा यत्रयत्रौषधयो विद्यन्ते तत्रतत्र समूहन्या समूह्य ताभिर्वर्तयतीति समूहा ॥ ९ ॥

अवारितस्थानान्यनिषिद्धानि । अप्रतिहतावकाशाः वृत्तिशून्या देशाः । समूहनी सम्मार्जनी ॥ ९ ॥

पालनीत्यहिंसिकेत्येवेदमुक्तं भवति । तुष-

**विहीनांस्तण्डुलानिच्छति सज्जनेभ्यो बीजानि वा । पालयतीति पालनी॥ १० ॥**

सज्जनेभ्यो विद्वद्भ्य । पालयति प्रयच्छति तस्मात्तण्डुग नेव स्वय गृह्णीयात् । स्वयमेव व्रीह्यग्रहण तुषाणामप्यसङ्ग्रहणार्थम् । तेषु मिश्राणा सग्रहण यत ॥ १० ॥

सिलौञ्छा पुन —

**सिलोञ्छेति । अवारितस्थानेषु पथिषु वा क्षेत्रेषु वाऽप्रतिहतावकाशेषु वा यत्रयत्रौषधयो विद्यन्ते तत्रतत्रैकैकं कणिशमुञ्छयित्वा कालेकाले सिलैर्वर्तयतीति सिलोञ्छा ॥ ११ ॥**

कणिशो धान्यस्तम्ब । उञ्छनं उत्पाटनम् । उञ्छनकालः वीप्सया सम्बोध्यते । सर्वावश्यकाल उञ्छनकाल सिलाः ग्रासविशेष । इतोऽर्वाग्भिरात्मयात्रा भवतीति । शेष पूर्ववत्॥ ११॥

कापोताऽऽष्टमिका, सेदानीमुच्यते—

**कापोतेति । अवारितस्थानेषु पथिषु वा क्षेत्रेषु वाऽप्रतिहतावकाशेषु वा यत्रयत्रौषधयो विद्यन्ते तत्रतत्राङ्गुलिभ्यामेकैकामोषधिमुञ्छयित्वा संदंशनात्कपोतवदिति कापोता ॥ १२ ॥**

संदर्शनादात्मन प्रकटीकरणात् । सदशनादिति पाठे खादनादित्यर्थ । एतदपि तथा । कपोतो द्वाभ्या चञ्चुभ्या एकस्थानानि व्यक्त गृहीत्वा भक्षयति एव कापोतामास्थाय वर्तते ॥ १२

सिद्धेच्छा तर्हि वक्तव्या—

सिद्धेच्छेति । वृत्तिभिरश्रान्तो वृद्धत्वाद्धातुक्षयाद्वा सज्जनेभ्यः सिद्धमन्नमिच्छतीति सिद्धेच्छा ॥ १३ ॥

पूर्वोक्ताभिर्वृत्तिभिः श्रान्तः परिक्षीण वृद्ध वयसा धातुक्षयेण रोगेण । सिद्ध पक्वान्नम् ॥ १३ ॥

तस्यात्मसमारोपणं विद्यते संन्यासिवदुपचारः पवित्रकाषायवासोवर्जम् ॥ १४ ॥

तस्य सिद्धेच्छावृत्तेरय नियम —अग्नीनामात्मनि समारोपणं परिव्राजकधर्माणामनुष्ठान च । किं सर्वेषाम्? नेत्याह—जलपवित्र पक्षपवित्र काषायवासश्च वर्ज्यम् ॥ १४ ॥

अथ वान्यावृत्ति —

वान्याऽपि वृक्षलतावल्ल्योषधीनां च तृणोषधीनां च श्यामाकजर्तिलादीनां वन्याभिर्वर्तयतीति वान्या ॥ १५ ॥

वृक्षलतासूत्पातित पद्मीगुल्मलतासु च । ओषध्यः फलपाकान्ता

यद्वा—द्विविधा ओषध्यः वल्ल्योषध्यः तृणौषध्यश्च । आसां छोम्य एव या गृह्यन्ते ता वल्ल्यौषध्यः । ताश्च कुलुत्थाद्याः । तृणौषध्यस्तु—'उपरिष्टादोषधयः फलं गृह्णन्ति'* इत्यत्र या उक्तास्ताश्च व्रीह्याद्याः । अत्र पुरा एवंलक्षणका एवारण्या गृह्यन्ते । अत एव श्यामाकजर्तिलादीनामित्युदाहृतम् । आदिग्रहणं समस्तानामपि सङ्ग्रहणार्थम् । एवं चोपसंहारोऽप्युपपन्नो भवति । वान्याभिर्वर्तयतीति वान्येति । षष्ठी सम्बन्धमात्रलक्षणा । वृक्षादीनां फलैरिति शेषः ॥ १९ ॥

अथाप्युदाहरन्ति—

मृगैस्सह परिस्पन्दः संवासस्तेभिरेव च ।
तैरेवसदृशीवृत्तिः प्रत्यक्षं स्वर्गलक्षणं प्रत्यक्षं स्वर्गलक्षणमिति ॥ १६ ॥

उत्क्षेपणाकुञ्चनप्रसारणानीति परिस्पन्दः । चलनात्मिका क्रियेति यावत् । तेभिरिति । ऐसो लोपश्छान्दसः । मृगसदृशवृत्तित्वमस्य स्वयंविशीर्णफलादिभक्षणाद्रवत्यामद्रव्यभक्षणाच्च ॥ १६ ॥

इति श्रीगोविन्दस्वामिकृते बोधायनधर्मविवरणे तृतीयप्रश्ने द्वितीयोऽध्यायः.



उक्ता अत्र नव वृत्तयो गृहस्थस्य—

अथ वानप्रस्थस्य द्वैविध्यम् ॥ १ ॥

वक्ष्यत इति शेषः । तच्च विशेषकृतम् ॥ १ ॥

*तै. स. ७-५-१.

तदाह—

**पचमानका अपचमानकाश्चेति ॥ २ ॥**

अग्निपक्काशिनः । अनग्निपक्काशिनश्चेति सूत्रार्थः ॥ २ ॥

अत्राप्याह—

**अत्र पचमानकाः पञ्चविधाः सर्वारण्यका वैतुषिका कन्दमूलभक्षाः फलभक्षाश्शाकभक्षाश्चेति ॥ ३ ॥**

एते पचमानकप्रभेदाः ॥ ३ ॥

**तत्र सर्वारण्यका नाम द्विविधा द्विविधमारण्यमाश्रयन्त इन्द्रावसिक्ता रेतोऽवसिक्ताश्चेति ॥ ४ ॥**

अरण्ये भवमारण्यं तच्च द्विविधं वल्ल्यादयो मृगादयश्च । तत्र वल्ल्यादिभक्षा इन्द्रावसिक्ताः इन्द्रेण देवेन पर्जन्यरूपिणा वृष्ट्या सिक्ताः वर्धिताः वल्ल्यादयः । तद्भक्षणादिन्द्रावसिक्ताः । उक्तं चाचार्येण—'अथास्य कर्मणस्सानुमदानं पितृवधो या च का च बलिभक्तिरिन्द्रकर्मैव तत्' इति। तथा रेतोऽवसिक्ताः मृगमांसाशिनः रेतसा हि हेतुभूतेनावसिक्तानि मांसानि, तदाश्रयात् सर्वारण्यकानां च द्वैविध्यम् ॥ ४ ॥

तदिदानीं प्रपञ्चयति—

**तत्रेन्द्रावसिक्ता नाम वल्लीगुल्मलतावृक्षा-**

णामानयित्वा श्रपयित्वा सायं प्रातरग्नि-
होत्रं हुत्वा यत्यतिथिव्रतिभ्यश्च दत्वाऽथे-
तरच्छेपभक्षाः ॥ ५ ॥

भवेयुरित्यध्याहार्यम् । वल्ल्यादीनां फलानि आनयित्वा आनीय । यतयो भिक्षुकाः । अतिथयः प्रसिद्धाः । व्रतिनो ब्रह्मचारिणः । वल्ल्यादिफलानामग्निहोत्रद्रव्यत्वेन विधानात् नित्यानां पयआदिद्रव्याणां निवृत्तिः । इतरद्भक्षाः शेपभक्षाश्चेति विग्रहः । इतरद्भक्षा इति वचनं अग्निहोत्रशेपे यात्रानिर्यातिशेपे च वैश्वदेवप्रा-सच्यर्थमित्युदकशेपं कृत्वा भक्षयेदित्यर्थः ॥ ५ ॥

अथेतरानाह—

रेतोऽवसिक्ता नाम मांसं व्याघ्रवृकश्येनादि-
भिरन्यतमेन वा हतमानयित्वा श्रपयि-
त्वा सायं प्रातरग्निहोत्रं हुत्वा यत्यतिथिव्र-
तिभ्यश्च दत्वाऽथेतरच्छेपभक्षाः ॥ ६ ॥

अस्यापि पूर्ववत् व्याख्या ॥ ६ ॥

अथ पचमानकानां द्वितीयानाह—

वैतुषिकास्तुषधान्यवर्जं तण्डुलानानयित्वा
श्रपयित्वा सायंप्रातरग्निहोत्रं हुत्वा यत्य-
तिथिव्रतिभ्यश्च दत्वाऽथेतरच्छेपभक्षाः ॥

तुपधान्यवर्ज्यद्रव्याहरणस्याप्रयोजनं तत्स्वीकारोपि कथं नु नाम स्यादिति ॥ ७ ॥

अथेतरान् त्रीन् समुच्चित्याह—

**कन्दमूलफलशाकभक्षाणामप्येवमेव ॥८॥**

एवमिति । आनयितेत्यादीति शेषः ॥ ८ ॥

इदानीमपचमानप्रकारभेदविधित्सयाऽऽह—

**पञ्चैवापचमानका उन्मज्जकाः प्रवृत्ताशिनो मुखेनादायिनस्तोयाहारा वायुभक्षाश्चेति॥**

एते भेदाः ॥ ९ ॥

तेषां परस्परवैलक्षण्यं प्रतिपादयन्नाह—

**तत्रोन्मज्जका नाम लोहाश्मकरणवर्जम् ॥**

लोहकरणं द्रव्यादि । अश्मकरणमप्येवमेव । अकृतकमेव किञ्चित् करणमादान इत्यर्थः ॥ १० ॥

**हस्तेनादाय प्रवृत्ताशिनः ॥ ११ ॥**

भक्षयन्तीति वाक्यसमाप्तिः ॥ ११ ॥

**मुखेनादायिनो मुखेनाददते ॥ १२ ॥**

पशुवदित्यभिप्रायः ॥ १२ ॥

**तोयाहाराः केवलं तोयाहाराः ॥ १३ ॥**

केवलशब्दादुपदंशादिस्थानेऽपि तोयस्यैव प्रवेशः कर्तव्यः॥१३॥

**वायुभक्षा निराहाराश्च ॥ वैखानसानां विहिता दश दीक्षाः ॥ यश्शास्त्रमभ्युपेत्य दण्डं च मौनं चाप्रमादं च ॥ वैखानसाश्शुद्ध्यन्ति निराहाराश्चेति ॥ १४–१७॥**

वायुभक्षा इत्येतावदेवोच्यमाने वाय्वम्बुनोः द्वयोः करणताशङ्काऽपि स्यादिति मत्वा निराहाराश्चेत्युक्तम् । मुखेनादायिप्रभृतीना त्रयाणां संज्ञासिद्धमपि सन्देहनिवृत्त्यर्थं वृत्तिविवरणमाचार्येण कृतम् । वानप्रस्थसंन्यासभेद. किमर्थमाचार्यकृत इति, असावेव प्रष्टव्यः । यद्वा—उक्तव्यतिरिक्तवृत्तिनिषेधार्थम् ॥ १४–१७ ॥

एवं भेदेपूक्तेष्विदानीं सर्वेषां संहत्याह—

**शास्त्रपरिग्रहस्सर्वेषां ब्रह्मवैखानसानाम् ॥**

वक्ष्यत इति शेषः । ब्रह्मण' दृष्ट्या वैखानसाः ब्रह्मवैखानसाः । यद्वा—ब्राह्मणाश्च त इति ॥ १८ ॥

प्रथमं तावत्—

**न द्रुह्येद्दंशमशकान् हिमवान् तापसो भवेत् । वनप्रतिष्ठस्सन्तुष्टश्चीरचर्मजलप्रियः॥**

दंशादिकानामपि हिंसां नाचरेत् । द्रुः जिघांसायां वर्तते । हिमवान् शीतसहिष्णुः । तद्ग्रहणं घर्मस्याप्युपलक्षणार्थम् । आह च—

ग्रीष्मे पञ्चतपाश्च स्याद्वर्षास्वभ्रावकाशकः ।
आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयन् तपः[1] ॥ इति ॥

वनप्रतिष्ठः ग्रामनिवेशवर्जः । सन्तुष्टो वितृष्णः । चीरचर्मप्रियः तद्वसनः । जलप्रियः कमण्डलुधारी ॥ १९ ॥

अतिथीन् पूजयेत्पूर्वं काले त्वाश्रममागतान्
देवविप्राग्निहोत्रे च युक्तस्तपसि तापसः॥२०

युक्तशब्दः काकाक्षिनिरीक्षणवत् उभयत्र सम्बध्यते । देवविप्रपूजायामग्निहोत्रे च तपसि युक्तः स्यादित्यर्थः ॥ २० ॥

कृच्छ्रां वृत्तिमसंहार्यां सामान्यां मृगपक्षिभिः
तदहर्जनसम्भारां कापायकटुकाश्रयाम्॥

परिगृह्य शुभां वृत्तिमेतां दुर्जनवर्जिताम् ।
वनवासमुपाश्रित्य ब्राह्मणो नावसीदति ॥

मृगैस्सहपरिस्पन्दः संवासस्तेभिरेव च ।
तैरेव सदृशी वृत्तिः प्रत्यक्षं स्वर्गलक्षणम् ॥
प्रत्यक्षं स्वर्गलक्षणमिति ॥ २३ ॥

---

[1] मनु. ६-२३.

कृच्छ्रां दुःखाम् । असंहार्या दुर्धरा मृगपक्षिसादृश्यमनुपदमुच्यते। तदहस्सम्भवजीविका वैखानसाः तत्सम्भारास्सम्भार्या आर्जनीया वैखानससकाशादेवाश्वस्तनिकधनमार्जयेदित्यर्थः । तदहर्जनसम्भारेति 'सुपा सुपा' इति समासः । कषायः चित्तमलः कटुकः वाचिकः मलः अप्रियभाषणं तदाश्रयः विपरीतलक्षणैषा । एषैव शुभा दुर्जनवर्जिता च वृत्तिः । दुर्जना नास्तिकाः । वनवासमुपाश्रित्य ब्राह्मणो नावसीदतीति पदार्थपाठः ॥ २१–२३ ॥

इति तृतीयप्रश्ने तृतीयोऽध्यायः



उक्तं च ब्रह्मचर्यम्—

## अथ यदि ब्रह्मचार्यव्रत्यमिव चरेत् ॥ १ ॥

व्रतं नियमस्तस्मै हितं व्रत्यं तदभावोऽव्रत्यम् । ब्रह्मचारिग्रहणं प्रदर्शनार्थम् । यस्य यस्मिन् काले ब्रह्मचर्यं चोदितमपि गृहस्थस्य । भिक्षावर्जमस्याश्रमिणो वक्ष्यमाणे कर्मण्यधिकारः ॥ १ ॥

किंकिं पुरावृत्तमित्याह—

## मांसमश्नीयात्स्त्रियं वोपेयात्सर्वास्वेवार्तिषु॥

अव्रत्यानि परिभाषाप्रपञ्चितानि—'अथोपनीतस्याव्रत्यानि भवन्ति नान्यस्योच्छिष्टं भुञ्जीत'[1] इत्यादि । अत्र तेषां दिङ्मात्रं प्रदर्शितम् । तत्र हि पुनरुपनयनं नैमित्तिकत्वेन विहितम् । इह

[1] बौ. गृह्यपरिभाषा १-१२-१.

तु होमः । अनयोरशक्तिबुद्धिपूर्वव्यपेक्षया विकल्पसमुच्चयौद्रष्टव्यौ । सर्वास्वेवार्तिपूपदेशेषु ॥ २ ॥

अन्तराऽगारेष्वग्निमुपसमाधाय सम्परिस्तीर्याऽग्निमुखात्कृत्वाऽथाज्याहुतीरुपजुहोति॥

आऽग्निमुखात्कृत्वेति दार्विहोमिकतन्त्रप्राप्त्यर्थम्, उपजुहोतीति श्रवणात् । पक्वहोमानन्तरं वक्ष्यमाणहोमादिः । पक्वहोमाश्च व्याहृतीभिरसाविव्या च ॥ ३ ॥

त एते मन्त्राः—

कामेन कृतं कामः करोति कामायैवेदं सर्वं यो मा कारयति तस्मै स्वाहा । मनसा कृतं मनः करोति मनस एवेदं सर्वं यो मा कारयति तस्मै स्वाहा । रजसा कृतं रजः करोति रजस एवेदं सर्वं यो मा कारयति तस्मै स्वाहा । तमसा कृतं तमः करोति तमस एवेदं सर्वं यो मा कारयति तस्मै स्वाहा । पाप्मना कृतं पाप्मा करोति पाप्मन एवेदं सर्वं यो मा कारयति तस्मै स्वाहा । मन्युना कृतं मन्युः करोति मन्यव एवेदं सर्वं यो मा कारयति तस्मै स्वाहेति ॥ ४ ॥

कामेन कृतं न मया । यद्यप्यात्मा कर्मकर्ता तथाऽपि कामाधीनमेतदनाचरणमनुष्यातमित्यभिप्रायः । एवं मनःप्रभृतिष्वपि यथासम्भवं तस्य हेतुभावो द्रष्टव्यः । कामः रागोऽर्थव्यतिकराव्यतिकराभिलापः । मन्युः क्रोधः तद्विघातकृत्सु । तावेवाविहिताकरणप्रतिषिद्धसेवनयोर्निदानम् । तत्सहकारीणि मनोरजस्तमांसि । पाप्मा कर्तुः पापम् । तदप्यनेकजन्मोपार्जितं कारणमेव ॥ ४ ॥

**जयप्रभृति सिद्धमाधेनुवरप्रदानात् ॥ ५ ॥**

इदमपि तन्त्रप्राप्तिद्योतकमेव ॥ ६ ॥

**अपरेणाग्निं कृष्णाजिनेन प्राचीनग्रीवेणोत्तरलोम्ना प्रावृत्य वसति ॥ ६ ॥**

अपरेणाग्निमग्नेः पश्चिमदेशे । ऋज्वन्यत्, रात्राविति शेषः ॥

**अथ व्युष्टायां जघनार्धादात्मानमपकृष्य तीर्थं गत्वा प्रसिद्धं स्नात्वाऽन्तर्जलगतोऽघमर्षणेन षोडश प्राणायामान् धारयित्वा प्रसिद्धमादित्योपस्थानात्कृत्वाऽऽचार्यस्य गृहानेति ॥ ७ ॥**

व्युष्टायां व्युष्टिसमये जघनार्धात् आत्मसम्बन्धिनो नाभेरधोभागात् पुनर्जननमिति निर्वृत्य तीर्थं नदीदेवखातादिपुण्यजलाशयः । प्रसिद्धमिति पूर्वोक्तस्नानविधिनोपस्थानपर्यन्तं करोति । अयं

विशेषः—अघमर्षणमन्त्रेण षोडश प्राणायामाः । ब्रह्मचारी वेदाचार्यस्य गृह्णीतेति । गृहस्थस्तु गृह्णन् ॥ ७ ॥

अथास्य प्रशंसा—

**यथाऽश्वमेधावभृथमेवमेवैतद्विजानीयादिति ॥**

इति तृतीयप्रश्ने चतुर्थोऽध्यायः.

---

पापनिबर्हणप्रसङ्गादघमर्षणप्रसङ्गाद्वेदमन्यदारभते—

**अथातः पवित्रातिपवित्रस्याघमर्षणस्य कल्पं व्याख्यास्यामः ॥ १ ॥**

पवित्रं पुरुषसूक्तादि । तेषां मध्ये अतिपवित्रमघमर्षणं सूक्तं तस्य कल्पः प्रयोगः ॥ १ ॥

**तीर्थं गत्वा स्नातः शुचिवासा उदकान्ते स्थण्डिलमुद्धृत्यासकृत्क्लिन्नेन वाससा सकृत्पूर्णेन पाणिनाऽऽदित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत ॥ २ ॥**

शुचिवासा इत्यस्योपसंहारः—असकृत्क्लिन्नेनेति । असकृत्प्रक्षालितमिति यावत् । इत्थंभूतलक्षणे तृतीया । स्थण्डिलमादि-

त्यमण्डलाकारम् । पूर्णेति । इयमपीत्थंभूतलक्षणायां तृतीया । सकृदेव पाणिपूरण न पुनरादानम् । एवमन्यत्रापि जपेष्वापरिसमाप्ते सोदकेन पाणिना भवितव्यम् । आदित्याभिमुखवचनात् स्थण्डिलस्य पश्चात्प्राङ्मुखस्तिष्ठन् ॥ २ ॥

प्रातश्शतं मध्याह्ने शतमपराह्णे शतमपरिमितं वा ॥ ३ ॥

प्रातश्शतमधीयीत । मध्यन्दिने दक्षिणाभिमुख उदङ्मुखो वा । अपराह्णे प्रत्यङ्मुख । अपरिमितमपराह्णेनैव सबध्यते ॥ ३ ॥

उदितेषु नक्षत्रेषु प्रसृतयावकं प्राश्नीयात् ॥

प्रसृतयावकस्वरूपमुपरितनेऽध्याये वक्ष्यति । तदन्येनैव वैश्वदेवबलिहरणादि कर्तव्य । 'यदशनीयस्य' इति प्राप्तेऽपि उत्तरत्र निषेधात् ॥ ४ ॥

ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते ॥ ५ ॥

एवमेव सप्तरात्रेण गोवधादिभ्यो विमुच्यत इत्यर्थ ॥ ५ ॥

द्वादशरात्राद्भ्रूणहननं गुरुतल्पगमनं सुवर्णस्तैन्यं सुरापानमिति च वर्जयित्वा॥६॥

अन्येभ्य पापेभ्य प्रमुच्यत इति शेष ॥ ६ ॥

एकविंशतिरात्रात्तान्यपि तरति तान्यपि जयति ॥ ७ ॥

तानि पूर्ववर्जितानि महापातकानि । तरणं क्षपणम् । जयः पुण्यफलयोग्यता ॥ ७ ॥

अथ फलार्थवादप्रपञ्चः—

सर्वं तरति सर्वं जयति सर्वक्रतुफलमवाप्नोति सर्वेषु तीर्थेषु स्नातो भवति सर्वेषु वेदेषु चीर्णव्रतो भवति सर्वैर्देवैर्ज्ञातो भवत्याचक्षुषः पङ्क्तिं पुनाति कर्माणि चास्य सिध्यन्तीति बोधायनः ॥ ८ ॥

आचक्षुषः आदृशः पथः । बोधायनसंशब्दनादस्य शिष्योऽस्य ग्रन्थस्य कर्तेति गम्यते । मनुरब्रवीदितिवत् ॥ ८ ॥

इति तृतीये प्रश्ने पञ्चमोऽध्यायः.

---

प्रसृतयावकप्रसङ्गादिदमाह—

अथ कर्मभिरात्मकृतैर्गुरुमिवात्मानं मन्येतात्मार्थे प्रसृतयावकं श्रपयेदुदितेषु नक्षत्रेषु ॥१॥

कर्मभिर्गर्हितैः गुरुमिवाजगरगीर्णमिवात्मानं मन्येत । पुत्रदारादिकृते नेति प्रत्ययार्थमात्मग्रहणम् । अत एवात्मार्थमित्युक्तम् । आत्मार्थे न परार्थे । एतस्मादेव लिङ्गादतोऽन्यत्र प्रकरणे आर्त्विज्यमस्तीति गम्यते । यद्वा—'नात्मार्थं पाचयेत्' इत्यस्य प्रतिप्रसवोऽयम् । प्रसृतयावकमात्मार्थमेव श्रपयेदिति । ततश्च वैश्वदेवातिथिभृत्यादीनां द्रव्यान्तरमन्वेष्टव्यं भवति । सति चैवमुत्तरसूत्रेण प्राप्तस्यायमनुवादः 'न ततोऽग्नौ जुहुयात्' इति । प्रसृतं गोकर्णकरपरिमितं यावको यवविकारो यवागूर्वा उदितेषु नक्षत्रेष्विति श्रपणकालः ॥ १ ॥

**न ततोऽग्नौ जुहुयान्न चात्र बलिकर्म ॥२॥**

'यदशनीयस्य' इति प्राप्तस्यायं प्रतिषेधः पर्युदासो वा ॥२

**अशृतं श्रप्यमाणं शृतं चाभिमन्त्रयेत् ॥३॥**

यवानां च धातावस्थाया पकावस्थाया चान्विष्य मन्त्रं ब्रूयादित्यर्थः ॥ ३ ॥

तदाह—

**यवोसि धान्यराजोसि वारुणो मधुसंयुतः ।**
**निर्णोदस्सर्वपापानां पवित्रमृषिभिस्स्मृतम् ॥**

धान्यराजत्वमन्येषु धान्येषु म्लायत्सु मोदमानत्वोत्थानात् । वारुणत्वं पुनरेतेषां 'वारुणं यवमयं चरुमश्वो दक्षिणा,'[1] 'वरुणाय धर्मपतये यवमयं चरुम्'[2] इत्येवमादिषु प्राचुर्येण वरुणसम्बन्धात् । मधुसंयुतत्वं तेनाभिचारितत्वात् । ऋजवन्यत् ॥ ४ ॥

[1] तै. सं. १-८-९.   [2] तै सं, १-८-१०.

घृतं यवा मधु यवा आपो यवा अमृतं यवाः
सर्वं पुनथ मे पापं यन्मया दुष्कृतं कृतम् ॥

घृतादिग्रहणं प्रदर्शनार्थम् । यवा एव सर्वपवित्रत्वेन ध्यातव्या इति तेषां प्रशंसा ॥ ५ ॥

वाचा कृतं कर्मकृतं मनसा दुर्विचिन्तितम्।
अलक्ष्मीं कालरात्रीं च सर्वं पुनथ मे यवाः॥

कालरात्रीकृताम् ॥ ६ ॥

श्वसूकरावधूतं यत्काकोच्छिष्टोपहतं च यत्।
मातापित्रोरशुश्रूषां सर्वं पुनथ मे यवाः ॥

श्वादिग्रहणमाहारदोषकृतपापोपलक्षणार्थम् ॥ ७ ॥

महापातकसंयुक्तं दारुणं राजकिल्बिषम् ।
बालवृद्धमधर्मं च सर्वं पुनथ मे यवाः ॥

दारुणं क्रूरं तत्पूर्वोत्तराभ्यां सम्बध्यते । राजकिल्बिषं राजसेवानिमित्तम् । बालकृतं अज्ञानकृतं वा । अधर्मः पापम् । स एव सर्वत्र विशेष्यभूतः ॥ ८ ॥

सुवर्णस्तैन्यमव्रत्यमयाज्यस्य च याजनम्।
ब्राह्मणानां परीवादं सर्वं पुनथ मे यवाः ॥

अव्रत्यं नियमलोपकृतम् । ऋज्वन्यत् ॥ ९ ॥

**गणान्नं गणिकान्नं च शूद्रान्नं श्राद्धसूतकम् ।**
**चोरस्यान्नं नवश्राद्धं सर्वं पुनथ मे यवा इति॥**

गणान्नं गणाय गणेन वा सङ्कल्पितम् । श्राद्धं पितृभ्यः सङ्कल्पितम् । सूतकं तत्सम्बन्धि तदन्नम् । नवश्राद्धमेकोद्दिष्टान्नं परिग्रहसङ्कल्पादिपयमभोज्यमेतत । एते मन्त्रा वामदेवार्षा अनुष्टुप्छन्दसः यवदेवत्याश्च द्रष्टव्याः ॥ १० ॥

श्रप्यमाणे त्वयं विशेषः—

**श्रप्यमाणे रक्षां कुर्यात् ॥ ११ ॥**

स्थाल्यां कृष्णायसादि प्रतिमुञ्चेदित्यर्थः ॥ ११ ॥

तत्रैते मन्त्राः—

**नमो रुद्राय भूताधिपतये द्यौरशान्ता ॥१२**

अयमेको मन्त्रः ॥ १२ ॥

**कृणुष्व पाज इत्येतेनानुवाकेन । ये देवाः पुरस्सदोऽग्निनेत्रा रक्षोहण इति पञ्चभिः पर्यायैः । मा नस्तोके । ब्रह्मा देवानामिति द्वाभ्याम् ॥ १३ ॥**

'ये देवा रक्षोहण '[1] इत्येतस्य पदत्रयस्य पञ्चस्वप्यनुषङ्गार्थं 'अग्निनेत्रा रक्षोहण ' इति पठितम् । 'नमो रुद्राय' इत्यादि 'ब्रह्मा देवानाम् '[2] इत्येव मन्त्रा रक्षामन्त्रा ॥ १३ ॥

[1] तै. स. १-८-७.
[2] तै. सं. १-४-११.

शृतं च लब्ध्वश्नीयात्प्रयतः पात्रे निषिच्य ॥

नात्र तिरोहितं किञ्चिदस्ति ॥ १४ ॥

ये देवा मनोजाता मनोयुजस्सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहेत्यात्मनि जुहुयात् ॥ १५ ॥

एते पञ्च पर्यायाः प्राणाहुतिमन्त्राः[1] । तस्मान्मन्त्रो निवर्तते । प्राशनं लब्धेव । कर्तुस्तु कालाभिनियमात् फलविशेषः ॥ १५ ॥

त्रिरात्रं मेधावी* ॥ १६ ॥

पूर्वेण विस्तृतं यावकं प्राश्नीयादित्यनुवर्तते मेधानां ग्रहीतुं तस्य तदशनम् ॥ १६ ॥

षड्रात्रं पीत्वा पापकृच्छुद्धो भवति ॥ १७ ॥

अल्पपापकृदिति शेषः ॥ १७ ॥

सप्तरात्रं पीत्वा भ्रूणहननं गुरुतल्पगमनं सुवर्णस्तैन्यं सुरापानमिति च पुनाति ॥ १८ ॥

अनात्मकृतस्याप्येनसो निर्णोदो भवतीत्याह—

एकादशरात्रं पीत्वा पूर्वपुरुषकृतमपि पापं निर्णुदति ॥ १९ ॥

---

[1] तै. सं. १-२-३.    * मेधार्थी.

पूर्वपुरुषाः पितृप्रभृतयः ॥ १९ ॥

अपि वा गोनिष्क्रान्तानां यवानामेकविंशतिरात्रं पीत्वा गणान् पश्यति गणाधिपतिं पश्यति विद्यां पश्यति विद्याधिपतिं पश्यतीत्याह भगवान् बोधायनः ॥ २० ॥

गोमयशकृद्भिस्सह निष्क्रान्तानाम् । भूयस्येषा महिमाऽस्य कर्मणः ॥ २० ॥

इति तृतीये षष्ठोऽध्यायः

—o—

अयमपि पापनिर्हरणप्रसङ्गादेवाध्याय आरभ्यते । अथ कूश्माण्डमुच्यते—

कूश्माण्डैर्जुहुयाद्योऽपूत इव मन्येत ॥ १ ॥

कूश्माण्डा वक्ष्यमाणाः यद्देवादयो मन्त्राः[1] । जुहुयादिति होमस्थानस्य ग्रहणम् । प्रायश्चित्तेऽप्यपूत इव यो मन्येत ॥ १ ॥

तमुदाहरति—

यथा स्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतस्सिञ्चति ॥ २ ॥

स्तेन इति ॥ सुवर्णस्येति शेषः । सर्वेषामपि चैतन्महापातकानाम् । महापातकप्रायश्चित्ते कृतेऽपि अपूत इव यो म-

[1] तै. आ. २-३.

न्येतेत्यर्थः । एवमेषः अपूतो भवति । अयोनौ रेतस्सेको ब्रह्महत्यासम इति तस्य निन्दास्मृतिः—

उत्सृजेदात्मनश्शुक्रमक्षेत्रे कामतो नरः ।
हतं तेन जगत्सर्वं बीजनाशेन पापिना ॥
न ब्रह्महा ब्रह्महा स्यात् ब्रह्महा वृषलीपतिः ।
यस्तस्यां गर्भमाधत्ते तेनासौ ब्रह्महा भवेत् ॥ इति ॥

अन्यदपि—

## यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यत इति ॥ ३ ॥

श्रुतिरेवार्वाचीनत्वेन परिमित्य तस्यैव साधर्म्यमाह । तस्यैव वक्ष्यते इति शेषः ॥ ३ ॥

## अयोनौ रेतस्सिक्त्वाऽन्यत्र स्वप्नात् ॥ ४ ॥

श्रुतौ ह्यश्रुतमेतत् 'अन्यत्र स्वप्नात्' इति ॥ ४ ॥

## अरेपा वा पवित्रकामो वा ॥ ५ ॥

रेप इति पापनाम । तदस्य न विद्यते सोऽरेपाः । तथा च ब्राह्मणम्—"पवित्रं नो ब्रूत येनारेपमस्यामेति',[1] 'यद्देवाः,'[2] 'यद्दीव्यन्,'[3] 'आयुष्टे,'[4] 'हुत्वोपतिष्ठते" इति । पवित्रकामो वेत्येव । 'न वै शरीरस्य सतः पापा भवन्ति' इत्यभिप्रायः ॥ ५ ॥

## अमावास्यायां पौर्णमास्यां वा केशश्मश्रु-

[1] तै. आ. २-७. [2] तै. आ. २-३. [3] तै. आ. २-४. [4] तै. आ. २-६.

**लोमनखानि वापयित्वा ब्रह्मचारिकल्पेन व्रतमुपैति ॥ ६ ॥**

पर्वण्युपक्रमः । ब्रह्मचारिकल्पो मधुमांसवर्जनम् । इत्थंभूतलक्षणे तृतीया । व्रतं सङ्कल्पः कूश्माण्डैर्होष्यामीति ॥ ६ ॥

**संवत्सरं मासं चतुर्विंशत्यहो द्वादशरात्रीः षड्‌त्रिरो वा ॥ ७ ॥**

इमे श्रुतिवेद्याः । एतेषां च व्यवस्था 'यावदेनो दीक्षामुपैति'[1] इति ॥ ७ ॥

**न मांसमश्नीयान्न स्त्रियमुपेयान्नोपर्यासीत जुगुप्सेतानृतात् ॥ ८ ॥**

अनृतौ नोपेयादिति । एवमुपर्यासननिषेधः खट्वादौ । ततश्च तृणादावुपर्यासने न दोषः । जुगुप्सा निन्दा । नानृतं वदेदित्यर्थः । ब्रह्मचारिकल्पेनेत्यनेनैव मांसभक्षणादेरभावे सिद्धे संयोगपृथक्त्वात् कर्माङ्गत्वमप्यवगम्यते । एवं च तदतिक्रमे कर्मैव निष्फलं भवति । अतश्चौषधार्थमपि मांसं न भक्षितव्यमिति गम्यते ॥ ८ ॥

अथ भक्षनियमः—

**पयो भक्ष इति प्रथमः कल्पः ॥ ९ ॥**

निगदव्याख्यानमेतत् ॥ ९ ॥

[1] तै. आ. २-८.

यावकं सोपयुञ्जानः कृच्छ्रद्वादशरात्रं चरेद्भिक्षेद्वा तद्विधेषु यवागूं राजन्यो वैश्य आमिक्षाम् ॥ १० ॥

उपयुञ्जानः जुहुयादिति शेषः । तप्ते पयसि दध्यानीते यद्घनं सा आमिक्षा भवति ॥ १० ॥

पूर्वाह्णे पाकयज्ञिकधर्मेणाग्निमुपसमाधाय सम्परिस्तीर्याग्निमुखात्कृत्वाऽथाज्याहुतीरुपजुहोति । यद्देवा देवहेडनम् । यददीव्यन्नृणमहं बभूव । आयुष्टे विश्वतो दधदित्येतैस्त्रिभिरनुवाकैः प्रत्यृचमाज्यं हुत्वा सिंहे व्याघ्र उत या पृदाकाविति चतस्रस्स्रुवाहुतीः । अग्नेऽभ्यावर्तिन् । अग्ने अङ्गिरः । पुनरूर्जा । सह रय्येति चतस्रोऽभ्यावर्तिनीर्हुत्वा समित्पाणिर्यजमानलोकेऽवस्थाय वैश्वानराय प्रतिवेदयाम इति द्वादशर्चेन सूक्तेनोपस्थाय–यन्मया मनसा वाचा कृतमेनः कदाचन । सर्वस्मात्तस्मान्मेडितो मोग्धि त्वंहि वेत्थ यथा तथं स्वाहेति समिधमाधाय वरं ददाति ॥

पात्रयज्ञधर्मग्रहणादाहवनीयो निवर्तते । आऽग्निमुखात्कृत्वा अनाम्नातया पक्वहोमं कृत्वा सौविष्टकृतं च । यद्देवादय उपहोमाः । यजमानलोके दक्षिणतोऽग्नेः । अन्यत्राप्युपस्थानचोदनायाम् । समित्पाणिना समिदभ्याधानं च द्रष्टव्यम् । यन्मया मनसा वामदेवर्षिः कण्वर्षिर्वा । अनुष्टुप्छन्दः । अग्निर्देवता । यद्वाञ्जनमाभ्या कृतमेन कस्या चिदवस्थाया तस्मात् सर्वस्मात् मिळित मा मा ईडितः स्तुतः त्वं मोग्धि मोचय हि यस्मात् वेत्थ त्वमेव सर्वं यथातथं वेत्सि परितः । वरः वरिष्ठा गौः ॥११

## जयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥१२॥

## एक एवाग्नौ परिचर्यायाम् ॥ १३ ॥

अग्नौ परिचर्याया यदुक्तं तस्यामेक एव स्वयं कर्ता स्यात् नान्यं कर्तारं वृणीते । तस्मादन्यत्रोपपन्नेषु परकर्तृकताऽपि भवतीति गम्यते । अग्नाविस्येकवचननिर्देशाच्चास्मिन्नेतत्स्वयं कर्तव्यम् न त्वाहवनीयेऽपि । तत्र ह्यनादृष्टे आध्वर्यवं होतव्यमित्येतदेव ॥१३

एवं तावत्पुरुषार्थतया होमविधिरुक्तः । अथेदानीं 'कर्मादिष्वेतैर्जुहुयात्'* इत्येतद्व्याख्यास्यन्नाह—

## अग्न्याधेये यद्देवा देवहेळनम् । यददीव्यन्नृणमहं बभूव । आयुष्टे विश्वतो दधदिति पूर्णाहुतिम् ॥ १४ ॥

जुहुयादिति शेषः ॥१४॥

---

*तै. आ. २–७

अग्निहोत्रं दर्शयितुमाह—

**हुत्वाऽग्निहोत्रमारप्स्यमानो दशहोत्रा हुत्वा दर्शपूर्णमासावारप्स्यमानश्चतुर्होत्रा हुत्वा चातुर्मास्यान्यारप्स्यमानः पञ्चहोत्रा हुत्वा पशुबन्धे षड्ढोत्रा सोमे सप्तहोत्रा ॥ १५ ॥**

दशहोता 'चित्तिस्स्रुक्'* इत्यनुवाकः । 'पृथिवी होता'* चतुर्होता । 'अग्निर्होता'* पञ्चहोता । 'वाग्घोता'* षड्ढोता । व्याख्यानेषु प्रायणीयानां च । 'सूर्यं ते',* 'महाहविः'* सप्तहोता । एते कूश्माण्डप्रदेशाः ॥ १५ ॥

**विज्ञायते कर्मादिष्वेतैर्जुहुयात् पूतो देवलोकान् समश्नुत इति हि ब्राह्मणमिति हि ब्राह्मणम् ॥ १६ ॥**

ब्राह्मणग्रहणं तु कर्मादिषु ब्राह्मणोक्तमेव कर्तव्यं, अतश्चाभिमुखवरदानादेश्च निवृत्तिः ॥ १६ ॥

इति तृतीये सप्तमोऽध्यायः.

—·:⊕:·—

अयमपि पापनिबर्हणोपाय इत्याह—

**अथातश्चान्द्रायणकल्पं व्याख्यास्यामः॥१॥**

चन्द्रस्यायनं गमनं यथा वृद्धिह्रासाभ्यां शुक्ले भवति तद्वत् ग्रासवृद्धिह्रासवशाच्चरतीति चान्द्रायणम् ॥ १ ॥

---

* तै. आ. ३, १-६.

**शुक्लचतुर्दशीमुपवसेत्केशश्मश्रुलोमनखानि वापयित्वा ॥ २ ॥**

केशानि वापयित्वोपवसेदिति क्रम । उपवसेदिति वचनात् औपवसथ्यमेतदहरिति गम्यते । अत उत्तरेद्युर्होम । तथा च लिङ्गम्—'पञ्चदश ग्रासान्' इति ॥ २ ॥

प्रायश्चित्तार्थे चान्द्रायणे एतत् । अथाभ्युदयार्थे—

**अपि वा श्मश्रूण्येव ॥ ३ ॥**

तथा च गौतम —'कृच्छ्रे वपनं व्रत चरेत्'[1] इति ॥ ३ ॥

**अहतं वासो वसानः सत्यं ब्रुवन्नावसथमभ्युपेयात् ॥ ४ ॥**

अहतं वस्त्र नव केशादिरहित प्रक्षाळितोपवात च । सत्यवचनमपि चान्द्रायणाङ्गमेव । आवसथो होमस्थानम् ॥ ४ ॥

**तस्मिन्नस्य सकृत्प्रणीतोऽग्निररण्योर्निर्मन्थ्यो वा ॥ ५ ॥**

लौकिक एवाग्नि कर्मार्थं प्रणीतो यथा न नश्येत् तथा धार्य एवमर्थं सकृद्ग्रहणम् । यावच्चान्द्रायण नित्य जागरणमित्यर्थ । तदसम्भवेऽरण्योस्समारोपणम् । चान्द्रायणापवर्गे करिष्यमाणाय होमाय मन्थन च । यस्य पुनररणी न स्तस्तस्यापि यस्मात्कस्माचित् शाब्दद्वयात् निर्मन्थ्योऽग्नि ॥ ५ ॥

---

[1] गौ ध. २७-२.

ब्रह्मचारी सुहृत्प्रैपायोपकल्पी स्यात् ॥ ६ ॥

ब्रह्मचारी अनृतौ । सुहृत् शोभनं हृदयं यस्य स तथोक्तः असहायेन न हि शक्यते एतावन्महत्कर्म कर्तुमित्यात्मनः प्रैपकरणायान्यमुपकल्पयेत इत्युपकल्पी उपकल्पितश्च । अपि यत् सुकरं कर्म तदप्येकेन दुष्करं विशेषतोऽसहायेनेति । योऽसावन्यः प्रेषितार्थकरणायोपकल्पितः असावृत्विग्धर्मेति केचिदाहुः । अन्ये लौकिकार्थधर्मार्थधर्मोऽसाविति । तत्पुनर्युक्तायुक्ततया विचारणीयम् ॥ ६ ॥

हविष्यं च व्रतोपायनम् ॥ ७ ॥

हविष्यमक्षारलवणं व्रतोपायनं प्रधानद्रव्यम् । नोपदंशादि ॥७॥

अग्निमुपसमाधाय सम्परिस्तीर्याऽग्निमुखात्कृत्वा पक्वाज्जुहोति ॥ ८ ॥

अवदानधर्मेणादायेति शेषः ॥ ८ ॥

अग्नये या तिथिस्स्यान्नक्षत्राय सदैवतायात्राह गोरमन्वतेति चान्द्रमसीं पञ्चमीं द्यावापृथिवीभ्यां षष्ठीमहोरात्राभ्यां सप्तमीं रौद्रीमष्टमीं सौरीं नवमीं वारुणीं दशमीमैन्द्रीमेकादशीं वैश्वदेवीं द्वादशीमिति ॥ ९ ॥

एत द्वादशहोमा एतस्मादेव चरोरवदाय कर्तव्या । तत्र 'अग्नये स्वाहा' इति प्रथमाऽऽहुति । या तिथिस्स्यात्तस्यै द्वितीया। प्रतिपच्चेद्वर्तते 'प्रतिपदे स्वाहा' इति। द्वितीया चेत् द्वितीयस्यै। तृतीया चेत्तृतीयस्य । इत्यादिवत् । तस्यै द्वितीयेति सूत्रयितव्ये या तिथिरिति वचन या तिथि चान्द्रायणे यथाकथञ्चिदि स्यितस्मिश्चेतद्विधानमस्तीति दर्शयति । नक्षत्राय तृतीया । यच्च नक्षत्र कृत्तिकादि वर्तते सैव तृतीयाऽऽहुति । कृत्तिकाभ्यस्स्वाहा। रोहिण्यै स्वाहेति । सदैवताय यस्य नक्षत्रस्य या देवता स्यादिन्द्रादिका तस्यै चतुर्थ्याहुति । अग्नये स्वाहा। प्रजापतये स्वाहा। सोमाय स्वाहेत्यादि। चान्द्रमसीति सास्य देवतेति तद्धित । एव रौद्रीमित्यादिषु द्रष्टव्यम् । षष्ठीप्रभृतिष्वपि तद्देवत्याभिरृग्भिर्होम इति केचित्। अपरे विधिशब्दैरेवभूतैरिति । वय तु ब्रूम —षष्ठीसप्तम्यावाहुती चतुर्थीचोदिते सत्यौ विधिशब्दमन्त्रे । अष्टम्याद्यास्तद्धितसमासादित ऋङ्मन्त्रका इति । एव च सति सूत्रवैचित्र्यच साभिप्रायमुपपादित भवति ॥ ९ ॥

किमेतावत्य एवाहुतय ? नेत्याह—

**अथापरास्समामनन्ति दिग्भ्यश्च सदेवताभ्यः उरोरन्तरिक्षाय सदैवताय। नवोनवो भवति जायमान इति सौविष्टकृतीं हुत्वाऽथैतद्धविरुच्छिष्टं कंसे वा चमसे वा व्युद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्य पञ्चदश पिण्डान् प्रकृतिस्थान् प्राश्नाति। प्रा-**

**णाय त्वेति प्रथमम् । अपानाय त्वेति द्वितीयम् । व्यानाय त्वेति तृतीयम् । उदानाय त्वेति चतुर्थम् । समानाय त्वेति पञ्चमम् ॥ १० ॥**

एता एकादश । दिग्भ्यः । चतसृभ्य । 'प्राच्यै दिशे स्वाहा दक्षिणायै दिशे'[1] इति मन्त्रकल्पना कृता । न तु चतसृभ्य पावकादिदिग्भ्यश्च इति । नन्वष्टदिक्पाला इति प्रसिद्धिरस्ति, तथा क्वचिद्दश दिश इति । सत्यम्—तथाऽपि 'दिग्भ्यस्स्वाहाऽन्तरदिशाभ्यस्स्वाहा'[2] इति व्यपदेशभेदाच्चतस्र एव दिग्ग्रहणेन गृह्यन्ते । सदेवताभ्योऽपि तावतीभ्य 'इन्द्राय स्वाहा यमाय' इत्यादि । अथ वा 'प्राची दिगग्निर्देवता' इत्यादि दर्शनात् 'अग्नय इन्द्राय' इत्यादि द्रष्टव्यम् । उरोरिति चतुर्थ्यन्तस्य ग्रहणम् । अन्तरिक्षविशेषणत्वात् । तत 'उरवेऽन्तरिक्षाय स्वाहा' इति मन्त्र । अन्तरिक्षदेवता तु वायु 'वायुरन्तरिक्षस्याधिपति'[3] इति दर्शनात् । प्राश्नाति हविरुच्छिष्ट हुतशेषं हविष्याणि व्यञ्जनानि क्षीरादीनि शाकफलादीनि च क्षारलवणरहितानि । अत्र व्यञ्जनशब्दप्रयोगात् 'हविष्य च व्रतोपायनम्' इत्यत्र प्रधानद्रव्यमेव गृह्यते । तथैव च व्याख्यातमस्माभि ॥ १० ॥

व्रतस्य ग्रासास्तु प्राशितव्या प्राग

**यदा चत्वारो द्वाभ्यां पूर्वम् ॥ ११ ॥**

प्रथमो ग्रास द्वाभ्या मन्त्राभ्या, तत उत्तरेषामेकैकेनैकैक ॥

[1] तै. स. ७ १ १५ [2] तै. आ. ३ ११ ६ [3] तै. स. ३-४-५.

**यदा त्रयो द्वाभ्यां द्वाभ्यां पूर्वौ ॥ १२ ॥**

यदा तु काले त्रयाणां प्रसन्न तदा द्वौ द्वाभ्यां द्वाभ्यां मन्त्राभ्यां प्रमनीयौ । तृतीयस्तु पञ्चमेन ॥ १२ ॥

**यदा द्वौ द्वाभ्यां पूर्वं त्रिभिरुत्तरम् ॥ १३ ॥**

**एकं सर्वैः ॥ १४ ॥**

ऋज्वर्थे सूत्रे ॥ १३–१४ ॥

'अमृतापिधानमसि'[1] इत्यस्य स्थाने—

**निग्राभ्यास्थेत्यपः पीत्वाऽथाज्याहुतीरुपजुहोति ॥ १५ ॥**

'निग्राभ्यास्थ देवश्रुतः'[2] इत्यादि 'गणा मे मा वितृषन्'[2] इत्यन्तमेकं यजुः ॥ १५ ॥

अथ होममन्त्राः—

**प्राणापानव्यानोदानसमाना मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा। वाङ्मनः शिरः पाणि त्वक् शब्द पृथिवी अन्नमय एतैस्सप्तभिरनुवाकैः ॥ १६ ॥**

प्रत्यनुवाकं होमः ॥ १६ ॥

**जयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥ १७ ॥**

---

[1] याज्ञिकी. ६९.    [2] तै. स. ३-१-८.

उत्तरं दार्विहोमिकं तन्त्रं प्रसिद्धम् ॥ १७ ॥

**सौरीभिरादित्यमुपतिष्ठते चान्द्रमसीभिश्चन्द्रमसम् ॥ १८ ॥**

सौर्यः—'उद्वयं तमसस्परि,[1] उदु त्यं,[2] चित्रम्'[2] इति तिस्र ऋचः । चान्द्रमस्यः—'नवोनवो भवति,[3] सचित्र चित्रम्,[4] अत्राह गोरमन्वत'[5] इति च ॥ १८ ॥

शर्वर्यां संवेशनकाले—

**अग्ने त्वं सुजागृहीति संविशन् जपति । त्वमग्ने व्रतपा असीति प्रबुद्धः ॥ १९ ॥**

संविशन् शयानः । प्रबुद्धः उज्जिहानः । आचम्येति शेषः ॥

**स्त्रीशूद्रैर्नाभिभाषेत मूत्रपुरीषे नावेक्षेत॥२०**

अभिभाषणं पूर्वभाषणम् ॥ २० ॥

**अमेध्यं दृष्ट्वा जपत्यबद्धं मनो दरिद्रं चक्षुस्सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीरिति ॥ २१ ॥**

व्याख्यातो मन्त्रः 'उत्तरत उपचारः' इत्यत्र । एते नियमा आ परिसमाप्तेश्चान्द्रायणस्यानुसरणीयाः ॥ २१ ॥

**प्रथमायामपरपक्षस्य चतुर्दश ग्रासान्॥२२**

---

[1] तै. सं. ४-१-६. [2] तै. सं. १-४-४३. [3] तै. सं. २-४-१४. [4] ऋ. स. ४-५-८. [5] तै. आ. १-५-८.

प्राश्नातीत्यनुवर्तते । अपरपक्षस्य न प्रतिपदि चतुर्दश ग्रासा ग्रसनीया इत्यर्थः ॥ २२ ॥

**एवमेकापचयेनामावास्यायाः ॥ २३ ॥**

एवं द्वितीयाप्रभृतिषु एकैको ग्रासोऽपचीयते । द्वितीयस्यां त्रयोदशतृतीयस्यां द्वादश इत्यादि ॥ २३ ॥

एवमाऽमावास्याया नीयमाने—

**अमावास्यायां ग्रासो न विद्यते ॥ २४ ॥**

अतस्तस्यामुपवासः ॥ २४ ॥

**प्रथमायां पूर्वपक्षस्यैकः ॥ द्वौ द्वितीयस्याम् ॥**

एवमेते अप्यूज्वर्थे ॥ २५–२६ ॥

**एवमेकोपचयेनापौर्णमास्याः ॥ २७ ॥**

उपचयो वृद्धिः । एवमा पौर्णमास्या नीयमाने चतुर्दश्यां चतुर्दश भवन्ति ॥ २७ ॥

**पौर्णमास्यां च स्थालीपाकस्य जुहोति ॥**

अप्राणितप्पष्ठ्येषा तृतीयार्थे पञ्चम्यर्थे वा द्रष्टव्या । अग्निमुपसमाधायेत्यादि प्रतिपद्यते ॥ २८ ॥

तत्रैते पक्कहोममन्त्राः—

**अग्नये या तिथिस्स्यात् ॥ २९ ॥**

व्याख्यातमेतत् ॥ २९ ॥

## नक्षत्रेभ्यश्च सदैवतेभ्यः ॥ ३० ॥

अत्र बहुवचनश्रवणात् सर्वेभ्यो नक्षत्रेभ्यः कृत्तिकादिभ्यो होतव्यमिति, तथा नक्षत्रदेवताभ्योऽपि सर्वाभ्यः । तत्र मन्त्राः नक्षत्रेष्टिहोमत्वेनाम्नाता वेदितव्याः ॥ ३० ॥

अत एवाह—

## पुरस्ताच्छ्रोणाया अभिजितस्सदैवतस्य हुत्वा गां ब्राह्मणेभ्यो दद्यात् ॥ ३१ ॥

अभिजिन्नामनक्षत्रमुपरिष्टादषाढानामधस्ताच्छ्रोणाया अस्ति । तस्य ब्रह्मा देवता । अन्यत्सर्वं प्रथमहोमवत् । अत्रापि पञ्चदश ग्रासाः ग्रसनीयाः । तथा च सति तिस्रो नीतयस्सम्पद्येरन् । पर एव तस्यास्संख्याया नियमात । यच्च पिपीलिकायवमध्ययोः पञ्चविंशत्युत्तरशतद्वयमिति, न चैतद्युक्तं, चान्द्रायणान्तरे पक्षयोश्च द्वावुपवासौ कृतौ भवतः ॥ ३१ ॥

एवं कृते—

## तदेतच्चान्द्रायणं पिपीलिकामध्यम् ॥ ३२ ॥

मध्यव्यवहारार्थं संज्ञाकरणम् । लुप्तोपमेय पिपीलिका हि तनुमध्योभयत स्थूला भवति तद्वदेतदपि ॥ ३२ ॥

## विपरीतं यवमध्यम् ॥ ३३ ॥

अमावास्योपक्रममावास्यान्तमित्यर्थ अत्र हि आद्यन्तयोश्चोपवासयोः क्रियमाणयोश्चन्द्रगतिरप्युपसृता भवति ॥ ३३ ॥

**अतोऽन्यतरच्चरित्वा सर्वेभ्यः पातकेभ्यः पापकृच्छुद्धो भवति ॥ ३४ ॥**

मुक्तोभवतीत्युक्तंभवति ॥ ३४ ॥

न केवलं प्रायश्चित्तार्थमेवान्यतरस्य चान्द्रायणस्य चरणम्, किं तर्हि—

**कामाय कामायैतदाहार्यमित्याचक्षते॥३५॥**

अत्रैकः कामशब्दः कर्मवचनः । अपरो भाववचनः । काम्यमानाय फलायेत्यर्थः । यद्वा वीप्सावचनमेतत् । अतश्च सर्वाभिमायकमेतदित्युक्तं भवति ॥ ३५ ॥

तदाह—

**यं कामं कामयते तमेतेनाप्नोति ॥ ३६ ॥**

नात्र तिरोहितमस्ति ॥ ३६ ॥

**एतेन वा ऋषय आत्मानं शोधयित्वा पुरा कर्माण्यसाधयन् ॥ ३७ ॥**

कर्माण्यग्न्याधेयादीनि । उक्तं चैतत् अग्नीनाधास्यमानः प्रयुञ्जानः कुर्वन्निति कर्मार्थमेतत् ॥ ३७ ॥

इदानींतना अपि कथं रोचेरन्, ततो नुतिरेषुरिति—

**तदेतद्धन्यं पुण्यं पुत्र्यं पौत्र्यं पशव्यमायुष्यं स्वर्ग्यं यशस्यं सार्वकामिकम् ॥३८॥**

'तस्मै हितम्' इति तद्धितान्तो विग्रहः ॥ ३८ ॥

नक्षत्राणां द्युतिं सूर्याचन्द्रमसोस्सायुज्यं सलोकतामाप्नोति ॥ ३९ ॥

फलार्थवादोऽयम् ॥ ३९ ॥

य उचैनदधीते यउचैनदधीते ॥ ४० ॥

विद्वत्प्रशंसैषा ॥ ४० ॥

इति तृतीये अष्टमोऽध्यायः.

अनश्नत्पारायणमपि पापमोचनमिति मत्वाऽऽह—

अथातोऽनश्नत्पारायणविधिं व्याख्यास्यामः

वेदस्य पारं पर्यन्तं निष्ठामयन्ते गच्छन्तीति पारायणं तच्चानश्नता कर्तव्यमित्यनश्नत्पारायणम् ॥ १ ॥

शुचिवासाः स्याच्चीरवासा वा ॥ २ ॥

चीरं निरकाल्किकं जीर्णमित्यर्थः । न चैनान्तेनोपभुक्तं वासोऽप्यनुज्ञातं भवति । 'अहतं वासो वसानश्शुचिः' इति नियमात् । समुच्चयार्थो वाशब्दः पूर्वस्मिन् । उत्तरत्र तु विकल्पार्थः ॥ २ ॥

हविष्यमन्नमिच्छेदपः फलानि वा ॥ ३ ॥

हविष्यमक्षारलवणम् । यदि मन्येतोपदस्यामीति नैतद्वेदितव्यम् । इतरथाऽनश्नत्त्वविरोधात् ॥ ३ ॥

**ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्याग्निमुपसमाधाय सम्परिस्तीर्यैताभ्यो देवताभ्यो जुहुयात् ॥ ४ ॥**

उपनिष्क्रम्य शुचौ देशे गोमयेनोपलिप्ते प्रोक्ष्य लक्षणमुल्लिख्य स्थण्डिलं कृत्वेत्यर्थः । सम्परिस्तीर्याज्यं विलाप्योत्पूय । नात्र दार्विहोमिकं तन्त्रं विद्यते ॥ ४ ॥

**अग्नये स्वाहा प्रजापतये स्वाहा सोमाय स्वाहा विश्वेभ्यो देवेभ्यः स्वयम्भुवऋग्भ्यो यजुर्भ्यः सामभ्योऽथर्वभ्यः श्रद्धायै प्रज्ञायै मेधायै श्रियै ह्रियै सवित्रे सावित्र्यै सदसस्पतयेऽनुमतये च हुत्वा वेदादिमारभेत सन्ततमधीयीत नान्तरा व्याहरेन्न चान्तरा विरमेत् ॥ ५ ॥**

व्याहरणमवैदिकशब्दोच्चारणम् । विरामोऽवसानम् । अन्तरा स्वाध्यायमध्ये । सन्ततविधानादेव सिद्धेरन्तरा विरमनिषेधात् नैमित्तिकेऽनध्यायेऽग्न्युत्पातादावध्ययने दोषो नास्तीति गम्यते । नित्याध्ययनानां सन्ध्योपासनादीना च पूर्वमेवावगन्तुं शक्यत्वात् परिहारः । नानाऽपि सङ्कल्प उपपद्यते ॥ ६ ॥

संवत्सरं भैक्षं प्रयुञ्जानो दिव्यं चक्षुर्लभते ॥

भैक्षमिति क्रियाविशेषणम् । प्रयुञ्जानः पारायणमिति शेषः । दिव्यं चक्षुर्दूरदर्शनम् ॥ १६ ॥

षण्मासान्यावकभक्षश्चतुरो मासानुदकसक्तुभक्षो द्वौ मासौ फलभक्षो मासमब्भक्षो द्वादशरात्रं वाऽप्राश्नन् क्षिप्रमन्तर्धीयते ज्ञातीन्पुनाति सप्तावरान्सप्तपूर्वानात्मानं पञ्चदशं पङ्क्तिं च पुनाति ॥ १७ ॥

प्राश्नन्नित्यत्राकारप्रश्लेषः कर्तव्यः अप्राश्नन्निति । पराचीनं वा पारायणं प्रयुञ्ज्यादित्यर्थः ॥ १७ ॥

तामेतां देवनिश्श्रेयणीत्याचक्षते ॥ १८ ॥

निश्श्रेयणी निश्श्रेयसहेतुः । निश्श्रेयसः संश्रयः सोपानमिति यावत् ॥ १८ ॥

निश्श्रेयसहेतुत्वं दर्शयति—

एतया वै देवा देवत्वमगच्छन्नृषय ऋषित्वम्

अथेदानीमनश्नत्पारायणारम्भकालत्वेनाहरवयवानाह—

तस्य ह वा एतस्य यज्ञस्य त्रिविध एवाहः प्रातस्सवने माध्यन्दिने सवने ब्राह्मे वा पररात्रे ॥ २० ॥

अतश्च होमा एतेष्वेव कालेषु कर्तव्याः ॥ २० ॥

साम्प्रतं गुरुपर्वक्रमाकारेणास्यैव प्रशंसामाह—

**तं वा एतं प्रजापतिस्सप्तऋषिभ्यः प्रोवाच सप्तर्षयो महाजह्नवे महाजह्नुः ब्राह्मणेभ्यो ब्राह्मणेभ्यः ॥ २१ ॥**

यस्मान्महाजह्नुः ब्राह्मणेभ्यः एतमनश्नत्पारायणं प्रोवाच तस्मात्तेषामेवात्राधिकारो न क्षत्रियवैश्ययोरिति ॥ २१ ॥

इति तृतीये नवमोऽध्यायः.



पञ्चविधो धर्मो व्याख्येयतया प्रक्रान्तः तत्र चतुर्विधः—,

**उक्तो वर्णधर्मश्चाश्रमधर्मश्च ॥ १ ॥**

**अथ खल्वयं पुरुषो याप्येन कर्मणा॥ २ ॥**

लिप्यत इति शेषः । अयमिति प्रत्यक्षं शरीरिणां क्षेत्रज्ञं व्यपदिशति । अतश्च परमात्मा न लिप्येत । पुरुषः पुरिशयः पूरयतेर्वा । तस्मात् स्त्रियोपि लिप्यन्ते ॥ १–२ ॥

अभव्यं पापमिति यावद्दर्शयति—

**मिथ्या वा चरत्ययाज्यं वा याजयत्यप्रतिग्राह्यस्य वा प्रतिगृह्णात्यनाश्यान्नस्य वाऽन्नमश्नात्यचरणीयेन वा चरति ॥ ३ ॥**

अत्रान्यथाकरणे प्रायश्चित्तमाह—

अथान्तरा व्याहरेदथान्तरा विरमेत्त्रीन् प्राणानायम्य वृत्तान्तादेवारभेत ॥ ६ ॥

अथ यदीत्यर्थः । आयमनमायतनं वृत्तान्तात् स्थितादुत्तरतः ॥

विरमकालेनाप्यप्रतिभायां किं कर्तव्यमित्याह—

अप्रतिभायां यावता कालेन न वेद तावन्तं कालं तदधीयीत स यज्ञानीयात् ॥ ७ ॥

व्यवहितमपि यत्प्रत्यभात्तदधीयीत इत्यर्थः ॥ ७ ॥

तत्राप्यशक्तौ कथम्—

ऋक्तो यजुष्टस्सामत इति ॥ ८ ॥

विजानीयादिति शेषः । ऋच्यप्रतिभातायामृगन्तरमधीयीतेत्यर्थः । एवं यजूंषि सामानि च ॥ ८ ॥

तत्राप्यप्रतिभायाम्—

तद्ब्राह्मणं तच्छान्दसं तद्दैवतमधीयीत ॥ ९ ॥

ऋचश्चेन्न प्रतिभान्ति तद्ब्राह्मणमधीयीत । तत्प्रतिभायां पुनर्मन्त्रमेव । तच्छान्दसं तद्दैवतं तत्तदार्षमधीयीत ॥ ९ ॥

द्वादशवेदसंहिता अधीयीत यदनेनानध्यायेऽधीयीत यद्गुरवः कोपिता यान्यकार्या-

णि कृतानि भवन्ति ताभिः पुनीते शुद्ध-
मस्य पूतं ब्रह्म भवति ॥ १० ॥

द्वादशेत्यत्र ऋग्यजुष्ष्वित्यध्याहार्यम् । संहिताग्रहणं च पदक्रमनिवृत्त्यर्थम् । तथा च शौनकः—'अथैते प्राहुरनुसंहितं तत्पारायणं प्रवचनं प्रशस्तम्' इति ताभिस्संहिताभिर्द्वादशभि पुनीते । कस्मात्? अनध्यायाध्ययननिमित्तात् गुरुकोपनिमित्तादकार्यकरणनिमित्ताच्च ॥ १० ॥

अत ऊर्ध्वं सञ्चयः ॥ ११ ॥

ब्रह्माणि हि द्वादशभि. पारायणै· पूते सञ्चयः निश्श्रेयसस्य भवति ॥ ११ ॥

अपरा द्वादशवेदसंहिता अधीत्य ताभिरुशनसो लोकमवाप्नोति ॥ १२ ॥

अपरा द्वादश वेदसंहिता अधीत्य ताभिर्बृहस्पतेर्लोकमवाप्नोति ॥ १३ ॥

अपरा द्वादश वेदसंहिता अधीत्य ताभिः प्रजापतेर्लोकमवाप्नोति ॥ १४ ॥

अनश्नत्संहितासहस्रमधीयीत ब्रह्मभूतो विरजो ब्रह्म भवति ॥ १५ ॥

संहितासहस्रं सहस्रकृत्व इत्यर्थः ॥ १२–१५ ॥

संवत्सरं भैक्षं प्रयुञ्जानो दिव्यं चक्षुर्लभते ॥

भैक्षमिति क्रियाविशेषणम् । प्रयुञ्जानः पारायणमिति शेषः । दिव्यं चक्षुर्दूरदर्शनम् ॥ १६ ॥

षण्मासान्यावकभक्षश्चतुरो मासानुदकसक्तुभक्षो द्वौ मासौ फलभक्षो मासमब्भक्षो द्वादशरात्रं वाऽप्राश्नन् क्षिप्रमन्तर्धीयते ज्ञातीन्पुनाति सप्तावरान्सप्तपूर्वानात्मानं पञ्चदशं पङ्क्तिं च पुनाति ॥ १७ ॥

प्राश्नन्नित्यत्राकारप्रश्लेषः कर्तव्यः अप्राश्नन्निति । पराचीनं वा पारायणं प्रयुञ्ज्यादित्यर्थः ॥ १७ ॥

तामेतां देवनिश्श्रेयणीत्याचक्षते ॥ १८ ॥

निश्श्रेयणी निश्श्रेयसहेतुः । निश्श्रेयस स्वश्रय सोपानमिति यावत् ॥ १८ ॥

निश्श्रेयसहेतुत्वं दर्शयति—

एतया वै देवा देवत्वमगच्छन्नृषय ऋषित्वम्

अथेदानीमनश्नत्पारायणारम्भकालत्वेनाहरवयवानाह—

तस्य ह वा एतस्य यज्ञस्य त्रिविध एवाहः प्रातस्सवने माध्यन्दिने सवने ब्राह्मे वा पररात्रे ॥ २० ॥

अतश्च होमा एतेष्वेव कालेषु कर्तव्याः ॥ २० ॥

साम्प्रत गुरुपर्वक्रमावारणास्यैव प्रशसामाह—

**तं वा एतं प्रजापतिस्सप्तऋषिभ्यः प्रोवाच सप्तर्षयो महाजज्ञवे महाजज्ञुः ब्राह्मणेभ्यो ब्राह्मणेभ्यः ॥ २१ ॥**

यस्मान्महाजज्ञु ब्राह्मणेभ्य एतमनश्नत्पारायण प्रोवाच तस्मात्तेषामेवात्राधिकारो न क्षत्रियवैश्ययोरिति ॥ २१ ॥

इति तृतीये नवमोऽध्यायः.



पञ्चविधो धर्मो व्याख्येयतया प्रक्रान्त तत्र चतुर्विध—

**उक्तो वर्णधर्मश्चाश्रमधर्मश्च ॥ १ ॥**

**अथ खल्वयं पुरुषो याप्येन कर्मणा॥ २ ॥**

लिप्यत इति शेष । अयमिति प्रत्यक्ष शरीरिणा क्षेत्रज्ञ व्यपदिशति । अतश्च परमात्मा न लिप्येत । पुरुषः पुरिशयः पूरयतेर्वा । तस्मात् स्त्रियोपि लिप्यन्ते ॥ १–२ ॥

अभव्य पापमिति यावद्दर्शयति—

**मिथ्या वा चरत्ययाज्यं वा याजयत्यप्रतिग्राह्यस्य वा प्रतिगृह्णात्यनाश्यान्नस्य वाऽन्नमश्नात्यचरणीयेन वा चरति ॥ ३ ॥**

प्रदर्शनमेतदन्येषामपि पापानाम् । मिथ्या अयथादृष्टार्थस्य कर्मण आत्मनो लाभपूजार्थं चरणमित्यादि । अचरणीयमकर्तव्यं प्रतिषिद्धमित्यर्थः । यदत्र पुनरुक्तमिव लक्ष्यते तत् दृढार्थं, स्वभावो ह्येष आचार्यस्य । अथ वा—आपद्विषयेऽनुज्ञातस्याप्ययाज्ययाजनादेः प्रायश्चित्तप्राप्त्यर्थम् । तत्रापि प्रथमकल्पितचतुर्भागः कर्तव्यः उशनसो वचनात् 'आपद्विहितैः कर्मभिरापादयन्तीत्यापदस्तेषां प्रायश्चित्तचतुर्भागं कुर्यात्' इति ॥ ३ ॥

याप्येन कर्मणा लिप्यत इत्युक्तम्—

## तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति ॥ ४ ॥

मीमांसन्ते इति शेषः । तत्र पूर्वपक्षो न कुर्यादिति ॥ ४ ॥

कुतः—

## न हि कर्म क्षीयत इति ॥ ५ ॥

इतिशब्दो हेतौ । फलप्रदानमन्तरेण पापस्य कर्मणः क्षयाभावादित्यर्थः । आत्मसमवायिकर्मणो जलसमवेतस्येव लवणस्य नाशो नास्तीति ॥ ५ ॥

## कुर्यात्त्वेव ॥ ६ ॥

तुशब्दः पक्षं व्यावर्तयति । कथम्? कर्म क्षीयत इति वदाम यथा सर्पदशनलक्षणस्य कर्मणो मरणपर्यन्तस्य मन्त्रौषधादिना विनाशो दृश्यते, तद्वदस्यापि प्रायश्चित्तेनेत्यभिप्रायः, आगमगम्यत्वादुत्पत्तेस्तन्नाशस्य च । किंचित्तत्फलभोग एवायम्, यदिदं तपः । अल्पकालपरिसमाप्तमित्येतावत् । यथा दीर्घकालोपभोग्यस्य व्याधेरल्पदुःखानुभवरूपेण भेषजादिना क्षयो भवत्येवमस्याप्यागमगम्य-

त्वादेव । तस्मात्कुर्यान्त्वेव प्रायश्चित्तम् । तत्र शुष्कतर्को न कर्तव्य इत्यभिप्रायः ॥ ६ ॥

अथ तदागमं दर्शयति—

**पुनस्सोमेनेष्ट्वा पुनस्सवनमायान्तीति ॥७॥**

**अथाप्युदाहरन्ति—**

**सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजत इति ॥ ८ ॥**

**अग्निष्टुता वाऽभिशस्यमानो यजेतेति च ॥**

विषयव्यासचर्थमनेकोदाहरणम् । पुनस्सवन पुनर्यागः । नष्टाधिकारस्य तत्समाधाने सत्येतदुपपद्यते । सर्वग्रहणाद्विहिताकरणप्रतिषिद्धसेवानिमित्तस्यापि । तरण क्षपणं प्रतीयते । उभयत्रापेऽपि जन्मान्तरकृतपापप्रदर्शनार्थमभिशस्यमान इत्युक्तम् ॥७–९॥

अधुना पापनिर्हरणोपायानाह—

**तस्य निष्क्रयणानि जपस्तपो होम उपवासो दानम् ॥ १० ॥**

निष्क्रयणं शोधन याप्यस्य कर्मण । यथा कंसादिगतस्य मलस्य भस्मादि । जपो मानसो वाचिकश्च । स च वक्ष्यमाणस्योपनिषदादे मन्त्रगणस्य । तपश्चाहिंसादि वक्ष्यते । होम आत्मीयद्रव्यस्य देवतोद्देशपूर्वकोऽग्नौ प्रक्षेप । उपवास इन्द्रियसंयम. । दानमात्मीयस्य च द्रव्यस्य पात्रेषु प्रतिपादनम् ॥१०॥

जप इत्युक्तं तत्राह—

**उपनिषदो वेदादयो वेदान्ताः सर्वच्छन्दस्सु संहिता मधून्यघमर्षणमथर्वशिरो रुद्राः पुरुषसूक्तं राजनरौहिणे बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महावैराजं महादिवाकीर्त्यं ज्येष्ठसाम्नामन्यतमद्बहिष्पवमानः कूश्माण्ड्यः सावित्री चेति पावनानि ॥ ११ ॥**

उपनिषदो वेदास्संहितारहस्यादय । ऋग्यजुषयोरनुवाक आदिः साम्ना सामको वा । वेदान्ता आर्षमन्त्रम् । अथर्वशिरोऽथर्वणा प्रसिद्धम् । रुद्राः 'नमस्ते रुद्र'[1] इति प्रश्नः । पुरुषसूक्तं प्रसिद्धम् । राजनरौहिणे सामनी 'इन्द्र नर'[2] इत्यस्यामृचि गीते । बृहत् 'त्वामिद्धि'[3] इत्यस्याम् । रथन्तर 'अभि त्वा'[4] इति । पुरुषगतिः 'अहमस्मि'[5] इत्यस्याम् । महानाम्न्यो 'विदा मघवन्'[6] इत्येता ऋच. । अस्यामुत्पन्नानि वा सामानि । महावैराजं 'पिबा सोमम्'[7] इत्यस्याम् । महादिवाकीर्त्यं 'मा नो'[8] इत्यस्याम् । ज्येष्ठसामानि 'शं नो देवी'[9] 'चित्रं देवानाम्'[10] इत्यनयो । बहिष्पवमानः 'उपास्मै'[11] इत्यासु । कूश्माण्ड्यो 'यद्देवा.'[12] आम्चित्रकोऽनुवाक । पावमान्यः 'स्वादिष्ठया'[13] इत्यृच । सावि-

[1] तै सं ४-५ १. [2] साम. पू ४-१ [3] साम. पू. ३-१.
[4] साम. पू. ३-१. [5] „ पू. ६-१. [6] महानाम्नी
[7] सा. सं. उ. ३-१. [8] सा म उ. ८-१ [9] सा. सं. पू. १-१.
[10] „ पू ६. २. [11] „ उ १ १ [12] तै. आ ३-२-१२.
[13] ऋग्. ६-१-१६.

त्री तु प्रसिद्धा । चशब्दाच्चुद्रवत्यादि । इतिशब्देन मन्त्र-रथाचिना खिलेषु पठितं शिवसङ्कल्पादि गृह्यते ॥ ११ ॥

उपसन्नयायेन पयोव्रतता शाकभक्षता फल-भक्षता मूलभक्षता प्रसृतयावको हिरण्य-प्राशनं घृतप्राशनं सोमपानमिति मे-ध्यानि ॥ १२ ॥

उपसन्नयायः आराग्रा परोवरीयसी वा । प्रसृतयावको व्याख्यातः । इतिकरणेनैवप्रकार पञ्चगव्यादि परिगृह्यते ॥१२॥

सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः सरितः पुण्या ह्रदास्तीर्थान्यृषिनिकेतनानि गोष्ठ-क्षेत्रपरिष्कन्दा इति देशाः ॥ १३ ॥

शिलोच्चयाः पर्वता इत्यर्थ । स्रवन्त्यो नद्य । ह्रदा ह्रादतेश्शब्दकर्मण ह्रादतेर्वा शीतभावकर्मण अन् पुष्पोदरादि । त्रिपुष्करादि । इत प्रभृति पुण्यानुसन्धानात् पूर्वत्रापुण्या अपि पर्वतादय अभ्यनुज्ञायन्ते । ऋषिनिकेताः ऋषिनिवासा ऋष्या-श्रमा । क्षेत्र कुरुक्षेत्रम् । परिष्कन्दाः नद्यालया गुहावासप्रदे-शा । इतिशब्दादग्रचपरादय ॥ १३ ॥

एतानि तपांसि—

अहिंसा सत्यमस्तैन्यं सवनेषूदकोपस्पर्शनं गुरुशुश्रूषा ब्रह्मचर्यमधश्शयनमेकवस्त्रता-नाशक इति तपांसि ॥ १४ ॥

तपांसि तपोहेतवः । सवनं पूर्वाह्णमध्यन्दिनापराह्णाः । इतिशब्दो देवपूजार्थः ॥ १४ ॥

किं दानमिति दानमाह—

हिरण्यं गौर्वासोऽश्वो भूमिस्तिलं घृतमन्नमिति देयानि ॥ १५ ॥

एतानि प्रसिद्धानि । इतिशब्दाद्व्रजतोपानच्छत्राण्यपि गृह्यन्ते ॥

संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो द्वादशाहष्षडहस्त्र्यहोऽहोरात्र एकाह इति कालाः ॥ १६ ॥

एकं च तदहः एकाहः केवलम् । इतिशब्दात् केवलाऽपि रात्रिः ॥ १६ ॥

आनन्त्यात् पापिनां प्रतिपापं प्रायश्चित्तोपदेशोऽप्यशक्य इति मत्वाऽऽह—

एतान्यनादेशे विकल्पेनेनस्सु गुरुषु गुरूणि लघुषु लघूनि ॥ १७ ॥

विकल्पेनेति वाक्यशेषः । एतानि जपादीन्यनादेशे । यानि प्रायश्चित्तान्यन्यतोऽनुपदिष्टानि । यथाऽऽह—'अभि कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः'[1] । तत्र विकल्पेनैतानि कर्तव्यानि क्वचिज्जपः क्वचित्तपः क्वचिद्दानं क्वचित्सर्वाणीति । गुरुत्वं चैनसोऽभिसन्ध्याद्यपेक्षया। आह चापस्तम्बः—'यः प्रमत्तो हन्ति प्राप्तं दोषफलं, सह संकल्पेन भूयः, एवमन्येष्वपि दोषवत्सु कर्मसु'[2] इत्यादि ॥ १७ ॥

[1] मनु. ११-१३३.  [2] आप. ध. १,२५,३-४.

कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तिः सर्वप्रायश्चित्तिः ॥ १८ ॥

अनादेश इत्यनुवर्तत इति केचित् । इतिकरणात्परतोऽपि । पापगुरुलघुत्वापेक्षया एतेषां व्यस्तसमस्तकल्पना ॥ १८ ॥

इति श्रीगोविन्दस्वामिकृते बोधायनधर्मविवरणे
तृतीयप्रश्ने दशमोऽध्यायः
तृतीयप्रश्नस्समाप्तः.

---

पुनरपि प्रायश्चित्तविषये कथा प्रस्तूयते—

प्रायश्चित्तानि वक्ष्यामो नानार्थानि पृथक्पृथक् ।
तेषु तेषु च दोषेषु गरीयांसि लघूनि च ॥

नानार्थानि नानाप्रयोजनानि पृथक्पृथगनुष्ठातव्यानि न पुनर्देशकालादिनियन्त्रिततया तन्त्रेणेति । न केवलं प्रयोजननानात्वेन पृथगनुष्ठानम् । किं तर्हि गरीयान् गरीयसि, न हि त्रिरात्रोपवासेनैव एकरात्रोपवासेनापि दोषो नश्यति, सोऽप्येकरात्रोपवासेनैव नाशयितव्य इत्यभिप्रायः ॥ १ ॥

यद्यत्र हि भवेद्युक्तं तद्धि तत्रैव निर्दिशेत् ।
भूयोभूयो गरीयस्सु लघुष्वल्पीयसस्तथा ॥

देशकालवयश्शक्त्यादीनपेक्ष्य क्वचिन्नानार्थाना गुरुलघूनामपि तन्त्रता भवतीत्येतदनेन कथ्यते ॥ २ ॥

लघूनीत्युक्तं तत्राह—

विधिना शास्त्रदृष्टेन प्राणायामान् समाचरेत् ॥ ३ ॥

श्रुतिस्मृतिशिष्टागमसिद्धः शास्त्रदृष्टो विधिः, स च प्राणायामेषु प्रतीक्षितव्य इत्यर्थः ॥ ३ ॥

अधुना प्रायश्चित्तविषयानाह—

यदुपस्थकृतं पापं पद्भ्यां वा यत्कृतं भवेत्।
बाहुभ्यां मनसा वाचा श्रोत्रत्वग्घ्राणचक्षुषा ॥ ४ ॥

एतेषु समसङ्ख्याकानेव प्राणायामान् चरेदित्यध्याहारः ॥ ४ ॥

ननु चक्षुश्श्रोत्रमनोभिरिति स्वसंयुक्तैरेव पापं कर्तुं शक्यते त्वक्पादबाहूपस्थघ्राणैस्त्वन्यसंयुक्तैरेव । वाचा पापमित्यन्यस्मिन् श्रुतवत्येव । अतो विषमसमीकरणमन्याय्यमिति मत्वाऽऽह—

अथ वा चक्षुश्श्रोत्रत्वग्घ्राणमनोव्यतिक्रमेषु त्रिभिः प्राणायामैश्शुद्ध्यति ॥ ५ ॥

एतेषु त्रिभिरितिवचनादुपस्थादिष्वाधिक्यं गम्यते । प्राणायामप्रवृत्तेनापि पयोव्रतनादयो नियमा अनुसरणीयाः ॥ ५ ॥

अथेमान्यपराणि प्राणायामनिमित्तानि—

शूद्रान्नस्त्रीगमनभोजनेषु केवलेषु पृथक्पृथक्सप्ताहं सप्तसप्त प्राणायामान् धारयेत्॥६

शूद्रान्नभोजने शूद्रस्त्रीगमने इति पदयोजना। शूद्रान्नशब्दश्शूद्राहृतस्य शूद्रस्पृष्टस्यान्नस्य चोपलक्षणार्थः। एवं च शूद्रस्त्रीगमने सति बहुवचनोपपत्तिः। केवलग्रहणात् प्रत्येकं प्रायश्चित्तम्। पृथग्ग्रहणादेकस्मिन्नपि प्रतिकर्माभ्यासः। ननु—'शूद्रान्नस्त्रीगमनभोजनेष्वब्लिङ्गाभिर्वारुणीभिरप उपस्पृशेत्' इत्युक्तम्। नैष दोषः—आतिदेशिकविषयत्वात्तस्य। किं तदातिदेशिकं शूद्रत्वम्? इदं तत

> योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्॥
> स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः[1]॥ इति॥

'अश्रोत्रिया अननुवाक्या अनग्नयश्शूद्रसधर्माणो भवन्ति'[2] इति च। तस्माददोषः॥ ६॥

**अभक्ष्याभोज्यापेयानाद्यप्राशनेषु तथाऽपण्यविक्रयेषु मधुमांसघृततैलक्षारलवणावरान्नवर्जेषु यच्चान्यदप्येवं युक्तं द्वादशाहं द्वादशद्वादश प्राणायामान् धारयेत्॥ ७॥**

अत्रानाद्यशब्दो ग्राम्ये अनमीये वा द्रष्टव्यः। यथाश्रुतार्थग्रहणे सत्यभक्ष्यशब्देन पुनरुक्तिप्रसङ्गात्। अपण्यान्यश्वादीनि मधुमांसादिवर्जितानि। घृतग्रहणं क्षीरादेरपि पर्युदासमाप्त्यर्थम्। एतेषु हि दोषगरिमा विद्यते।

> सद्यः पतति मांसेन लाक्षया लवणेन च।
> त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्[3]॥

[1] मनु. २-१६८. [2] वसि-ध ३-१. [3] वसि-ध २-२७.

इति वसिष्ठवचनात् । यच्चान्यदित्यप्रतिग्राह्यप्रतिग्रहादेरुपलक्षणार्थम् । एवंविधं युक्तमित्यर्थः ॥ ७ ॥

पातकपतनीयोपपातकवर्जेषु यच्चान्यदप्येवं युक्तं अर्धमासं द्वादशद्वादश प्राणायामान् धारयेत् ॥ ८ ॥ पातकपतनीयवर्जेषु यच्चान्यदप्येवं युक्तं द्वादश द्वाहशाहान् द्वादशद्वादश प्राणायामान् धारयेत् ॥ ९ ॥

पातकं ब्रह्महत्यादि । पतनीयं तत्समानमुपपातकं गोवधादि तद्वर्जेषु एतत्प्रायश्चित्तम् ॥ ८–९ ॥

पातकवर्जेषु यच्चान्यदप्येवं युक्तं द्वादशार्धमासान् द्वादशद्वादश प्राणायामान् धारयेत् ॥

यच्चानृतुगमनेनाधिकाभ्यासो गृह्यते । तच्च महापातकातिदेशिकं कर्म । द्वादशार्धमासाः षण्मासाः । सर्वत्र गुरुलघुमहोपादाने गुरुलघुनोरभ्यासापेक्षयैव निमित्तं द्रष्टव्यम् । अन्यथा विषमसमीकरणप्रसङ्गात् ॥ १० ॥

अथ पातकेषु संवत्सरं द्वादशद्वादश प्राणायामान् धारयेत् ॥ ११ ॥

योगनिष्ठस्याभ्यासान्तर्निर्गुणब्रह्मवधादावेव गोः पातकानि प्रसक्तानि । तेनैव भ्रूणहत्याऽप्यन्तर्भाति ॥ ११ ॥

ऋतुमत्या कन्याया अप्रदाने भ्रूणहत्यातुल्यदोषो भवतीत्येतद्वक्तुकाम कन्यादानप्रकरणमारभते—

दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम्॥

गुणवते विद्याचारित्रबन्धुशीलसम्पन्नाय रजोदर्शनात्प्रागेव दद्यादित्यर्थ ॥ १२ ॥

तदतिक्रमे दोषमाह—

त्रीणि वर्षाण्यृतुमतीं यः कन्यां न प्रयच्छति
स तुल्यं भ्रूणहत्यायै दोषमृच्छत्यसंशयम्॥

यतश्चैतदेव तत ऋतुमत्याया प्रागेव दद्यादित्यभिप्राय ॥ १३

किं सर्वत्रैतावत् ? नेत्याह—

न याचते चेदेवं स्याद्याचते चेत्पृथक्पृथक् ।
एकैकस्मिन्नृतौ दोषं पातकं मनुरब्रवीत् ॥

न याचते न प्रार्थयते कश्चिदपि ॥ १४ ॥

तत्र प्रसङ्गादिदमन्यदुच्यते—

त्रीणि वर्षाण्यृतुमती कांक्षेत पितृशासनम्।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्॥१५

सादृश्य जातिगुणादिभि ॥ १६ ॥

अत एवाह—

अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ॥

गुणा अभिजनादयो न जातिः ॥ १६ ॥

एवं स्वयंवरं परिसमाप्याधुनाऽन्यदानविषय एवाशङ्कानिवृत्त्यर्थमन्यदुच्यते—

बलाच्चेत्प्रहृता कन्या मन्त्रैर्यदि न संस्कृता
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा।

प्रहरणं मैथुनार्थमाकर्षणम् । न तु क्षतयोनित्वापादनं, तथा च सति संस्कार एव नास्ति ॥ १७ ॥

निसृष्टायां हुते वाऽपि यस्यै भर्ता म्रियेत सः।
सा चेदक्षतयोनिस्स्याद्गतप्रत्यागता सती ॥
पौनर्भवेन विधिना पुनस्संस्कारमर्हति ॥

निसृष्टा उदकपूर्वं प्रदत्ता हुते वाऽपि होमेऽपि निर्वृत्ते भर्ता म्रियते, सा चेत् भार्या अक्षतयोनिः असृष्टमैथुना स्यात् गतप्रत्यागता ॥

भर्तृविषय एव किञ्चिदुच्यते—

त्रीणि वर्षाण्यृतुमतीं यो भार्यां नाधिगच्छति ।
स तुल्यं भ्रूणहत्यायै दोषमृच्छत्यसंशयम् ॥

यथा गर्भप्रध्वंसने भ्रूणहत्या भवति तथा तत्प्रागभावेऽपि, अविशेषादित्यभिप्रायः ॥ १९ ॥

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।

पितरस्तस्य तन्मासं तस्मिन्रजसि शेरते ॥

ऋतुगमनातिक्रमनिन्देपा ॥ २० ॥

ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिञ्चति ॥ २१ ॥

नयोगा भ्रूणहत्यादोषस्तुल्य सत्पुत्रोत्पत्तिनिरोधात् ॥ २१ ॥

भर्तुः प्रतिनिवेशेन या भार्या स्कन्दयेदृतुम् ॥
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं नियमेद्गृहात्॥

प्रतिनिवेशः प्रतिकूलता अनिच्छा वा स्कन्दयेत् शोपयेद्वा भर्तृद्वेपाद्गर्भ औषधादिभिरशोपयतीत्यर्थ । ग्राममध्ये जनसन्निधौ नियमेत् प्रस्थापयेत् । ऋत्वतिक्रमे भर्तुर्यथा भ्रूणहत्या तथाऽस्या अपीति निन्दैषा ॥ २२ ॥

ऋतुगमनातिक्रमे प्रायश्चित्तमाह—

ऋतुस्नातां न चेद्गच्छेन्नियतां धर्मचारिणीम् ।
नियमातिक्रमे तस्य प्राणायामशतं स्मृतम् ॥

नियमातिक्रमः ऋतुगमनातिक्रम । ऋत्वतिक्रमो वा । ऋज्व न्यत् ॥ २३ ॥

प्राणायामान् पवित्राणि व्याहृतीः प्रणवं तथा।
पवित्रपाणिरासीनो ब्रह्म नैत्यकमभ्यसेत् ॥२४

पवित्राणि पुरुषसूक्तादीनि । शरीरस्याहर्निश पापसञ्चयोऽवश्य भवतीति मत्वा नैत्यक ब्रह्माभ्यसेदित्युक्तम् ॥ २४ ॥

किञ्च—

आवर्तयेत्सदा युक्तः प्राणायामान् पुनःपुनः ।
आकेशान्तान्नखाग्राच्च तपस्तप्यत उत्तमम् ॥
निरोधाज्जायते वायुर्वायोरग्निश्च जायते ।
तापेनापोऽविजायन्ते ततोऽन्तश्शुद्ध्यते त्रिभिः॥

कोष्ठे वायुर्जायते । वायोराग्निः । अग्नेरापः । तैस्त्रिभिरन्तश्शरीरं शुद्ध्यत्यत आवर्तयेत्सदा युक्त इति ॥ २५–२६ ॥

ततः प्रसङ्गादिदमाह—

योगेनावाप्यते ज्ञानं योगो धर्मस्य लक्षणम् ।
योगमूला गुणास्सर्वे तस्माद्युक्तस्सदा भवेत् ॥

तथाचोक्तम्—

प्राणायामास्तथा ध्यानं प्रत्याहारोऽथ धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ इति ॥

स एव धर्मस्य लक्षणं हेतुः धर्मोऽपूर्वम् । योगमूलाः योगकारणाः गुणाः रूपादयः ॥ २७ ॥

अथ प्राणायाम एवावयवशः प्राणस्यायामाः स्तुताः । तस्य सङ्क्षेपतो लक्षणं करोति—

सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामस्स उच्यते ॥

सव्याहृतिकास्सप्रणवाः प्राणायामास्तु षोडश
अपि भ्रूणहनं मासात्पुनन्त्यहरहर्धृताः ॥ २९ ॥
एतदाद्यं तपश्श्रेष्ठमेतद्धर्मस्य लक्षणम् ।
सर्वदोषोपघातार्थमेतदेव विशिष्यते एतदेव
विशिष्यत इति ॥ ३० ॥

दोषाः पापा° ॥ २८–३० ॥

इति चतुर्थप्रश्ने प्रथमोऽध्यायः



प्रायश्चित्तानि वक्ष्यामो नानार्थानि पृथक्पृथक् ।
तेषुतेषु च दोषेषु गरीयांसि लघूनि च ॥ १ ॥

यद्यत्र हि भवेद्युक्तं तद्धि तत्रैव निर्दिशेत् ।
भूयोभूयो गरीयस्सु लघुष्वल्पीयसस्तथा ॥

विधिना शास्त्रदृष्टेन प्रायश्चित्तानि निर्दिशेत् ॥

प्रतिग्रहीष्यमाणस्तु प्रतिगृह्य तथैव च ॥
ऋचस्तरत्समन्द्यस्तु चतस्रः परिवर्तयेत् ॥ ४ ॥

अभोज्यानां तु सर्वेषामभोज्यान्नस्य भोजने ।
ऋग्भिस्तरत्समन्दीयैर्मार्जनं पावनं स्मृतम् ॥

प्रायश्चित्तेषु भूयोविधानाद्व्याख्यातमेतत् । पुनस्सवनमिति प्रयोजनम्। पूर्वाध्यायनिर्दिष्टेषु प्रायश्चित्तेष्विह वक्ष्यमाणेषु यानि समानि तान्यविरोधीनि समुच्चीयन्ते । विरोधीनि विकल्प्यन्ते । प्रतिगृह्य अप्रतिग्राह्यमिति शेषः । परिवर्तनमावर्तनं वाचि द्रष्टव्यम् । 'तरत्समन्द्यो वाचि' इति केचित्पठन्ति । तरत्समन्दीत्यादिभिरेव . मार्जनं उदकाञ्जलिना शिरस्यभिषेकः ॥ १–५ ॥

भ्रूणहत्याविधिस्त्वन्यः तं तु वक्ष्याम्यतः परम्।
विधिना येन मुच्यन्ते पातकेभ्योऽपि सर्वशः॥

अयमन्यो भ्रूणहत्यादिविधिरित्यर्थः । तमाविष्टयति—विधिना येनेति ॥ ६ ॥

प्राणायामान् पवित्राणि व्याहृतीः प्रणवं तथा।
जपेदघमर्षणं युक्तः पयसा द्वादश क्षपाः ॥७॥

त्रिरात्रं वायुभक्षो वा क्लिन्नवासाप्लुतश्शुचिः ॥

प्रतिषिद्धांस्तथाऽऽचारानभ्यस्यापि पुनःपुनः ।
वारुणीभिरुपस्थाय सर्वपापैः प्रमुच्यते इति ॥

जपेदिति प्राणायामादिषु प्रत्येकं सम्बध्यते । ते न प्रत्येकं, न समुच्चयः । युक्तो ब्रह्मचर्यादिभि· योगयुक्तो वा ॥ ७–९ ॥

अथावकीर्ण्यमावास्यायां निश्यग्निमुपसमाधाय दार्विहोमिकीं परिचेष्टां कृत्वा द्वे आज्याहुती जुहोति । कामावकीर्णोऽस्म्यवकीर्णोऽ-

स्मि कामकामाय स्वाहा। कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहेति ॥

हुत्वा प्रयताञ्जलिः कवातिर्यङ्ङग्निमुपतिष्ठेत । सं मा सिञ्चन्तु मरुतस्समिन्द्रस्सं बृहस्पतिः। सं माऽयमग्निस्सिञ्चत्वायुषा च बलेन चायुष्मन्तं करोत मेति । प्रति हास्मै मरुतः प्राणान् दधति प्रतीन्द्रो बलं प्रति बृहस्पतिर्ब्रह्मवर्चसं प्रत्यग्निरितरत्सर्वं सर्वतनुर्भूत्वा सर्वमायुरेति । त्रिरभिमन्त्रयेत । त्रिसत्या हि देवा इति विज्ञायते ॥ ११ ॥

दार्विहोमिकीमित्याज्यसंस्कारमात्र न पुनस्स्थालीपाकप्रयोगोऽपि। प्रयताञ्जलिः सम्पुटिताञ्जलिः कवातिर्यङ् नात्यन्ताभिमुखो नापि पृष्ठतः कुर्वन्नित्येतत्कवातिर्यङ् । 'उपतिष्ठते नैन प्रत्यङ्ङ पराङ्' इति । अभिमन्त्रणमभिवीक्ष्याभिवदन, त्रिसत्या हि देवा इति विज्ञायते ॥ १०—११ ॥

योऽपूत इव मन्येत आत्मानमुपपातकैः । स हुत्वैतेन विधिना सर्वस्मात्पापात्प्रमुच्यते ॥

उपपातकप्रायश्चित्ते कृतेऽपि मनसो यद्यलाघव भवति तदाऽनेन प्रायश्चित्तेनाधिक्रियते एतेनैव विधिना सर्वस्मात्पापात्प्रमुच्यते। विधिनेत्यभिमन्त्रणान्तरमाह । वरोऽपि दक्षिणेति शेष ॥ १२ ॥

**अपि वाऽनाद्यापेयप्रतिषिद्धभोजनेषु दोषवच्च कर्म कृत्वाऽभिसन्धिपूर्वमनभिसन्धिपूर्वं वा शूद्रायां च रेतस्सिक्त्वाऽयोनौ वाऽब्लिङ्गाभिर्वारुणीभिश्चोपस्पृश्य प्रयतो भवति ॥**

अनाद्यं केशकीटादिभिरुपहतम् । अपेयं मद्यं मद्यभाण्डस्थितोदकादि । प्रतिषिद्धभोजनं निकिल्मादिषु यद्भोजन, दोषवत्कर्म दुराचारादि शूद्रायां योधादिजातौ । चशब्दात्सवर्णायामपि लुठनायाम् । अयोनिः खट्वादि । चशब्दाद्रोगाद्युपहताया, स्वभार्यायामपि पर्वणि केचिदिच्छन्ति । एतेषु निमित्तेषु पूर्वोक्तं प्रायश्चित्तम् ॥ १३ ॥

उपदर्शनेयैतदेव परमतेन द्रढयितुमाह—

**अथाप्युदाहरन्ति ।**

**अनाद्यापेयप्रतिषिद्धभोजनेऽविशुद्धधर्माचरिते च कर्मणि । मतिप्रवृत्तेऽपि च पातकोपमैः विशुद्ध्यतेऽथापि च सर्वपातकैः ॥ १४ ॥**

अविशुद्धधर्माचरिते इति पदच्छेदः । छद्मना चरित इत्यर्थः । पातकोपमानि 'अनृतं च समुत्कर्षे' इत्येवमादीन्येकविंशति । सर्वपातकैरिति प्रशसार्थमुक्तम् । न पुनः प्रायश्चित्तमेतत् ॥ १४ ॥

त्रिरात्रं वाऽप्युपवसन् त्रिरह्नोऽभ्युपेयादपः ।
प्राणानात्मनि संयम्य त्रिः पठेदघमर्षणम् ॥

अनन्तरोक्तेन विकल्पः । त्रिरात्र त्रिषवणस्नानम् ॥ १५ ॥

एतस्यैव विशेष उच्यते—

यथा श्वमेधावभृथ एवं तन्मनुरब्रवीत् ॥ १६ ॥

विज्ञायते च ।

चरणं पवित्रं विततं पुराणं
येन पूतस्तरति दुष्कृतानि ।
तेन पवित्रेण शुद्धेन पूताः
अतिपाप्मानमरातिं तरेमेति ॥ १७ ॥

चरणं चलनं पापस्य पवित्रं पावनहेतु विततं विस्तीर्णं सर्वशास्त्रेषु पुराणं पुरातनं तदेतदघमर्षणसूक्तोक्तम् । तद्विवेष्टयति— येन सूक्तेन पूतो मनुष्यस्तरति दुष्कृतानि पापानि । वयमपि तेन पूताः पाप्मानं पापं शत्रुमतितरेमेति प्रार्थना ॥ १६–१७ ॥

इति चतुर्थप्रश्ने द्वितीयोऽध्यायः



अधुना रहस्यप्रायश्चित्तान्याह—

प्रायश्चित्तानि वक्ष्यामोऽविख्यातानि विशेषतः।
समाहितानां युक्तानां प्रमादेषु कथं भवेत् ॥

अविख्यातानि अविख्यातदोषाणि । यावता विनाऽपि यत्पाप कर्तुं न शक्यते तद्व्यतिरिक्तेनाविख्यातदोषमुच्यते । यद्वा—अविख्यातानि अन्यैर्धर्मशास्त्रकारैरदृष्टानि । अथवा—प्रायश्चित्तान्येव अविख्यातानि अन्यैः पुरुषैः । आत्मनैवास्मिन्निमित्ते सत्येतत्प्रायश्चित्तमित्यवगतानि । अत एव—विशेषतः विशिष्टपुरुषाणां विदुषामित्यर्थः । तानेव विशिनष्टि—समाहितानामिति । समाहिताः अविक्षिप्तचित्तयुक्ताःशास्त्रचोदितेषु कर्मसु निरताः । प्रमादेषु अबुद्धिपूर्वकृतेषु । तथा च वसिष्ठः—

आहिताग्नेर्विनीतस्य वृद्धस्य विदुषश्च यत् ।
रहस्योक्तं प्रायश्चित्तं पूर्वोक्तमितरस्य तु[1] ॥

कथं भवेदित्याशङ्कायां वक्ष्याम इति शेषः ॥ १ ॥

**ओंपूर्वाभिर्व्याहृतीभिस्सर्वाभिस्सर्वपातकेष्वाचामेत् ॥ २ ॥**

प्रतिव्याहृति प्रणवसम्बन्धः कर्तव्यः । एकैकया वा आचमनम् । ततः परिमार्जनं च ॥ २ ॥

एवं विशिष्टं पुण्यमाचमनम्, अवयवशः प्रशस्तिमाह—

**यत्प्रथममाचामति तेनर्ग्वेदं प्रीणाति यद्द्वितीयं तेन यजुर्वेदं यत्तृतीयं तेन सामवेदम् ॥ ३ ॥ यत्प्रथमं परिमार्ष्टि तेनाथर्ववेदं यद्द्वितीयं तेने-**

[1] २५-२.

तिहासपुराणम् ॥ ४ ॥ यत्सव्यं पाणिं प्रोक्षति पादौ शिरो हृदयं नासिके चक्षुषी श्रोत्रे नाभिं चोपस्पृशति तेनौषधिवनस्पतयः सर्वाश्च देवताः प्रीणाति तस्मादाचमनादेव सर्वस्मात्पापात्प्रमुच्यते ॥ ५ ॥

'इतिहासपुराण पञ्चम वेदाना वेदम्' इति श्रुति । ऋग्वेदाद्याभिमानिन्यो देवता प्रीता भवन्त्याचमनेनैवाभीति ता देवता । ननु कथमेतदाचमन सर्वपापमोचन भवति । नाय पर्यनुयोगस्य विषय, न हि वचनस्यातिभारोऽस्तीत्युक्तत्वात् । यथाऽऽस्यगतेन सुराबिन्दुना पतितो न पयोबिन्दुना, तदपि हि वचनावगम्यमेव, तस्माददोष ॥

अष्टौ वा समिध आदध्यात्–देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽ-

[1] छा ७ १ २

वयजनमसि स्वाहेत्यैतैरष्टभिः हुत्वा सर्व-
स्मात्पापात्प्रमुच्यते ॥ ६ ॥

अवयजनं निरसनम् ॥ ६ ॥

अथाप्युदाहरन्ति ।
अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः ।
कूष्माण्ड्यः पावमान्यश्च विरजा मृत्युलाङ्गलम्।
दुर्गा व्याहृतयो रुद्रा महादोषविनाशनाः ।
महादोषविनाशना इति ॥ ७ ॥

अघमर्षणं 'ऋत च सत्य च'[1] इत्यादि । विरजा 'प्राणापान'[2] इत्यादिविरजाशब्दवन्तोऽष्टावनुवाका । मृत्युलाङ्गलं 'वेदाहमेतम्'[3] इति द्वितीय पाठ । दुर्गा 'जातवेदसे'[4] इत्येषा। 'कात्यायनाय'[5] इति च । रुद्राः 'नमस्ते रुद्र'[6] इत्येकादशानुवाका । अन्यत्प्रसिद्धम् । महापातका महादोषाः ॥ ७ ॥

इति चतुर्थप्रश्ने तृतीयोऽध्यायः



प्रायश्चित्तानि वक्ष्यामोऽविख्यातानि विशेषतः।
समाहितानां युक्तानां प्रमादेषु कथं भवेत्॥

व्याख्यातश्श्लोक । पुन पाठ पूर्वोक्तानामन्यतमेन इह वक्ष्यमाणानामन्यतमस्य समुच्चयार्थ ॥ १ ॥

---

[1] याज्ञिकी १ [2] याज्ञिकी ५१ [3] तै आ. ३-१३
[4] „ १. [5] „ १. [6] तै. स ४-५-१.

ऋतं च सत्यं चेत्येतदघमर्षणं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते ॥ २ ॥

यथाविध्यधीयीत ऋष्यादिज्ञानपूर्वकमिति । तथोत्तरेष्वपि मन्त्रेषु द्रष्टव्यम् । अघमर्षणानामानुष्टुभं वृत्तम् ॥ २ ॥

आयं गौः पृश्निरक्रमीदित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते ॥ ३ ॥

सर्पराजार्षं गायत्रं सूर्य आत्मा देवता ॥ ३ ॥

द्रुपदादिवेन्मुमुचान इत्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते ॥ ४ ॥

वामदेव काण्डर्षिर्वा अनुष्टुप्छन्द आपो देवता ॥ ४ ॥

हंसश्शुचिषदित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते ॥ ५ ॥

वामदेवजगतीसूर्या ऋषिच्छन्दोदेवता ॥ ५ ॥

अपि वा सावित्रीं गायत्रीं पच्छोऽर्धर्चशस्ततः समस्तामित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते ॥ ६ ॥

विश्वामित्रार्षं गायत्रीच्छन्दस्सविता देवता ॥ ६ ॥

**अपि वा व्याहृतीर्व्यस्ताः समस्ताश्चेति त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते ॥ ७॥ अपि वा प्रणवमेव त्रिरन्तर्जले पठन् सर्वस्मात्पापात्प्रमुच्यते ॥ ८ ॥**

विवृते एते च सूत्रे ॥ ७–८ ॥

अधुना च शास्त्रसम्बन्धसम्प्रदायनियमं करोति—

**तदेतद्धर्मशास्त्रं नापुत्राय नाशिष्याय नासंवत्सरोषिताय दद्यात् ॥ ९ ॥**

स तु शिष्यो भवति यमुपनीय वेदमध्यापयति । अन्योपि पुत्रः शिष्यः । यो धर्मशास्त्रसङ्ग्रहार्थं संवत्सरावमं शुश्रूषापुरस्सरमुषितवान् स संवत्सरोषितः । तस्मै ॥ ९ ॥

अथैतदन्यद्विधीयते—

**सहस्रं दक्षिणा ऋषभैकादशं गुरुप्रसादो वा । गुरुप्रसादो वा ॥ १० ॥**

धर्मशास्त्रोपदेष्ट्रे सहस्रं शतस्वर्णं वा ऋषभैकादशं वेत्यध्याहारः । ऋषभ एकादशो भवति यस्य गोगणस्येति विग्रहः । विनयापेक्षया शक्त्यपेक्षया वा विकल्पः । गुरुप्रसादो वा अकस्मादेव यस्मिंश्चित्प्रसादो भवति दद्यादेव तस्मै ॥ १० ॥

इति चतुर्थप्रश्ने चतुर्थोऽध्यायः.

—o—

एवं तावत्पुरुषार्थतया जपहोमेष्टियन्त्राणि प्रायश्चित्तान्युक्तानि। अथेदानीं क्रत्वर्थतया, तानि चात्र सत्त्वशुद्ध्यर्थतया वक्तव्यानि। तेषां च सारूप्यमित्यत्राह—

अथातस्संप्रवक्ष्यामि सामर्ग्यजुरथर्वणाम्।
कर्मभिर्यैरवाप्नोति क्षिप्रं कामान् मनोगतान्॥
जपहोमेष्टियन्त्राद्यैः शोधयित्वा स्वविग्रहम्।
साधयेत्सर्वकर्माणि नान्यथा सिद्धिमश्नुते॥२॥

अथशब्द आनन्तर्ये। मन्त्राशरहस्यप्रायश्चित्तानन्तरम्। यद्वा—मङ्गलार्थवाची, यस्मान्मङ्गलवाक्यानि जपादीनि अतस्तानि संप्रवक्ष्यामि। तानि विशिनष्टि—यैः जपादिभिश्शुद्धोऽनुष्ठितैः सामवेदादिविहितैः कर्मभिर्मनोगतानभिप्रेतान् कामान् फलान्यवाप्नोतीति॥

एवं च पापविशेषं समुदाहृत्य यद्विधीयते तत्रैवमुक्तम्। कर्मार्थं जपादि चिकीर्षोर्नियमानाह त्रिभिश्श्लोकैः—

जपहोमेष्टियन्त्राणि करिष्यन्नादितो द्विज।
शुक्लपुण्यदिनर्क्षेषु केशश्मश्रूणि वापयेत्॥ ३॥
स्नायात्त्रिषवणं पायादात्मानं क्रोधतोऽनृतात्।
स्त्रीशूद्रैर्नाभिभाषेत ब्रह्मचारी हविर्व्रतः॥ ४॥
गोविप्रपितृदेवेभ्यो नमस्कुर्वन् दिवाऽस्वपन्।
जपहोमेष्टियन्त्रस्थो दिवास्थानो निशासनः॥५

जपो रुद्रैकादशिन्यादेः । होमो गणहोमादिः । इष्टिः मृगारादिकः । यन्त्राणि यमनादीन्द्रियाणां कृच्छ्रादीन्युच्यन्ते । करिष्यन् कर्तुमध्यवसितः । द्विजग्रहणं यन्त्राध्यायनिर्दिष्टेषु शूद्रपर्युदासार्थम्। शुक्ले पक्षे पुण्यदिने द्वितीयादिषु च पुण्येषु च ऋक्षेषु नक्षत्रेषु रोहिण्यादिषु । श्मश्रुग्रहणं लोमनखानामपि प्रदर्शनार्थम् । वपनं च शिखावर्जं 'एवं भ्रुक्षिशिखावर्जम्' इति पर्युदासात् । यत्र पुनश्शृङ्गग्राहिकया विधीयते यथा गोघ्नप्रायश्चित्ते 'सशिखं वपनं कृत्वा' इति, तत्र भवति । न च शिखावपनात्कथमाचमनादि कर्तव्यमित्याशङ्कनीयम् । तस्य शास्त्रार्थत्वात् शिरःकपालधारणवत् । त्रिषवणं प्रातर्मध्यन्दिने सायम् । क्रोधादनृताच्चात्मानं पायाद्रक्षेद्वर्जयेदित्यर्थः । क्रोधग्रहणं हर्षलोभमोहादीनामन्येषामपि भूतदाहीयानां प्रदर्शनार्थम्, अनृतग्रहणं च पैशुन्यात्मस्तवनादीनाम् । अभिभाषणं अन्यत्र यथार्थमन्तर्भवत्येवं संवादेषु सम्भाषेत । ब्रह्मचारी अप्रस्कन्दितरेताः, अन्यत्र स्वप्नात् । तत्रापि च—

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजश्शुक्रमकामतः ।
स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्* ॥

इति द्रष्टव्यम् । हविर्व्रतः 'यदन्नेकैकं ग्रासम्' इत्यादि, तद्धविष्यं क्षारलवणवर्जं व्रतयेत् । पितृग्रहणं दण्डापूपिकान्यायेन मातुरप्युपलक्षणार्थम् । नमस्कारश्च कायप्रणतिपूर्वकं दिवाऽस्वपन् निद्रामकुर्वन् दिवास्थानः तिष्ठेदहनि । निशासनः रात्रावासीनः ॥

प्रथमं तावद्यन्त्राण्याह बहुवृत्तान्तत्वात्—

**प्राजापत्यो भवेत्कृच्छ्रो दिवा रात्रावयाचितम्।**

* मनु. २-१८१.

**क्रमशो वायुभक्षश्च द्वादशाहं त्र्यहं त्र्यहम् ॥**

प्राजापत्यस्तद्दैवत्यस्तेन आचरितो वा । स कथं भवेदित्याह— द्वादशाहं चतुर्धा कृत्वा त्र्यहं सम्पाद्य आद्ये त्र्यहे दिवाऽश्नीयात् । द्वितीये रात्रौ तृतीये अयाचितम् । चतुर्थे वायुभक्ष इति । अयाचितमिति याच्ञाप्रतिषेधः । एवं प्राजापत्यं कृच्छ्रं क्लेशात्मके नियमे न । स्मृत्यन्तरोक्तेतिकर्तव्यता नात्र प्राह्या । यथा गौतमेन प्राजापत्यायामभिहितायामभिहितं 'रौरवयौधाजये साम्नी नित्यं प्रयुञ्जीत'[1] इत्यादि । तद्यदि सर्वं, नियताध्येतृच्छन्दोगव्यतिरिक्तानामधिकारो न स्यात् । न ह्यन्यस्य सामानि सन्ति । न च प्रायश्चित्तार्थेन ग्रहणं युक्तम् । प्रतिषेधात् । स्त्रीबालादेरप्यधिकारार्थं सकलधर्मशास्त्रोक्तत्रिवर्णसाधारणलक्षण एव विधिर्द्रष्टव्य ॥ ६ ॥

**अहरेकं तथा नक्तमज्ञातं वायुभक्षणम् ।**
**त्रिवृदेष परावृत्तो बालानां कृच्छ्र उच्यते ॥ ७ ॥**

अयमपि प्राजापत्ये विशेष एव ॥ ७ ॥

कृच्छ्रातिकृच्छ्रस्तृतीय इति वक्ष्यति—

**एकैकं ग्रासमश्नीयात्पूर्वोक्तेन त्र्यहं त्र्यहम् ।**
**वायुभक्षस्त्र्यहं चान्यदतिकृच्छ्रः स उच्यते ॥ ८ ॥**

शिखण्डपरिमितो ग्रासः पाणिपूरान्नो वा । पूर्वोक्तेन 'दिवा रात्रौ' इत्यादिना । अन्यदिति प्रायश्चित्तविशेषणत्वान्नपु-

[1] गौ ध. २६-९

मत्लिङ्गमदोष । 'अतिकृच्छ्रोऽम्बुनाऽशन' इति यदोपवासस्तदोदकपान त्रिपदमभ्युपगच्छतीति गम्यते ॥ ८ ॥

**अम्बुभक्षस्त्र्यहानेतान्वायुभक्षस्ततः परम् ।**
**कृच्छ्रातिकृच्छ्रस्तृतीयो विज्ञेयस्सोऽतिपावनः॥**

अम्बुभक्षवचनादशनक्रमेणोदकपानमिष्यते । एवमन्त्ये त्र्यहे तदपि नास्तीति वायुभक्ष इत्युक्तम् । तृतीयत्वमस्य निर्देशापेक्षया 'षष्ठी चितिम्' इति यथा । प्रत्येकमेव शुद्धिहेतुत्वात् ॥ ९ ॥

**त्र्यहं त्र्यहं पिबेदुष्णं पयस्सर्पिः कुशोदकम् ।**
**वायुभक्षस्त्र्यहं चान्यत् तप्तकृच्छ्रस्स उच्यते॥**

उष्णशब्द' पयआदिभिस्त्रिभि प्रत्येकमभिसम्बध्यते । प्रति त्र्यह पयआदीनि क्रमेण भवेयु । अत्र सकृदेव स्नानम् ॥ कुत एतत्? मनुवचनात्—

तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः[1]॥ इति ॥१०

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।**
**एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥**

सप्ताहिकोऽय सान्तपन । एकैकस्मिन्नहनि गोमूत्रादीनि क्रमेण भवेयु । तेषु च दधिव्यतिरिक्तानि क्वथितानि कार्याणि ॥ तत्रायं केषा चित्पाठ —

[1] मनु. ११-२१५.

गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् । आ
प्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥
शुक्रमसि ज्योतिरसीत्याज्यं देवस्य त्वेति
कुशोदकमिति ॥ १२ ॥

तथा—

गोमूत्रभागस्तस्यार्धं शकृत्क्षीरस्य तत्त्रयम् ।
द्वयं दध्नो घृतस्यैकः एकश्च कुशवारिणः । एवं
सान्तपनः कृच्छ्रः श्वपाकमपि शोधयेत् ॥ १३ ॥

एवमुक्तं भवति—घृतं कुशोदकं च तुल्यपरिमाणम् । घृताद्द्विगुणं दधि, तस्मादेव त्रिगुणं क्षीरम् । तस्मादेव चतुर्गुणं शकृत्पञ्चगुणं गोमूत्रमिति । गोमूत्रादिपञ्चमेतेषां त्वेकस्मिन्नेवाहनि पीत्वाऽपरेद्युरुपवासेन द्विरात्रस्सान्तपनो भवेदिति । आह च याज्ञवल्क्यः—

कुशोदकं दधि क्षीरं गोमूत्रं गोशकृद्घृतम् ।
प्राश्यापरेऽह्न्युपवसेत्कृच्छ्रं सान्तपनं चरन्[1] ॥ इति । १३

अयमपरस्सान्तपनप्रकारः—

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चरात्रं तदाहारः पञ्चगव्येन शुद्ध्यति ॥ १४ ॥

1 या, ३१५

पञ्चगव्यविधानेनेति शेषः ॥ १४ ॥

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पराको नाम कृच्छ्रोऽयं सर्वपापप्रणाशनः॥१५

यतात्मा नियतेन्द्रियः आस्तिकः । स्त्रीणां रजोदर्शने च तन्निवृत्तिः । तथा दर्शने पूर्वसमाप्तिप्रसङ्गात् । तथा सतीत्युपदेशानर्थक्यमिति ॥ १५ ॥

गोमूत्रादिभिरभ्यस्तमेकैकं तं त्रिसप्तकम् ।
महासान्तपनं कृच्छ्रं वदन्ति ब्रह्मवादिनः॥ १६॥

सान्तपनस्सप्तरात्रपरिसमाप्य उक्तः । तद्दण्डकलितवदावृत्त्या त्रिरभ्यस्त एकविंशतिरात्रो महासान्तपनो नाम भवति ॥ १६ ॥

एकवृद्ध्या सिते पिण्डे एकहान्याऽसिते ततः ।
पक्षयोरुपवासौ द्वौ तद्धि चान्द्रायणं स्मृतम्॥१७

चान्द्रायणाध्यायोक्तस्यानुवादोऽयम् ॥ १७ ॥

इमे चान्द्रायणप्रकाराः—

चतुरः प्रातरश्नीयात्पिण्डान्विप्रस्समाहितः ।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम्॥१८
अष्टावष्टौ मासमेकं पिण्डान्मध्यन्दिने स्थिते ।
नियतात्मा हविष्यस्य यतिचान्द्रायणं चरेत् ॥

**यथाकथंचित्पिण्डानां द्विजस्तिस्रस्त्वशीतयः ।**
**मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम् ॥**

चत्वारिंशदधिकशतद्वयपिण्डान्यथाकथंचित् उञ्छया मासेनाश्नीयात् तिस्रोऽशीतय इति द्वितीयार्थे प्रथमा । तत्तदेव नाम चान्द्रायणम् ॥ १८–२० ॥

**यथोद्यंश्चन्द्रमा हन्ति जगतस्तमसो भयम् ।**
**तथा पापाद्भयं हन्ति द्विजश्चान्द्रायणं चरन् ॥ २१**

सर्वप्रकारस्यापि चान्द्रायणस्य प्रशंसैषा ॥ २१ ॥

**कणपिण्याकतक्राणि तथा चापोऽनिलाशनः ।**
**एकत्रिपञ्चसप्तेति पापघ्नोऽयं तुलापुमान् ॥ २२ ॥**

एकस्मिन्नहनि कणान् भक्षयेत् । त्रिषु पिण्याकमित्यादि । भक्षद्रव्यप्रमाणं च शरीरस्थितिनिबन्धनम् । एवं च सप्तदशाह्निकस्सम्पद्यते । महतीमपि तुलामारूढं पापस्य पुरुषश्शुद्धयतीति तुलापुमान् । तथा च पञ्चदशाह्निकः कोऽपि तुलापुरुषो विद्यते । तथा याज्ञवल्क्येन—

पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रस्सौम्योऽयमुच्यते[1] ॥ इत्यभिहितम् ।
एषां त्रिरात्रमभ्यासादेकैकं प्रत्यहं पिबेत् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाह्निकः ॥[1] इति ।

अत्र चोपवासस्य निवृत्तिर्वेदितव्या । पञ्चदशाह्निक इति नियमात् ॥

---

[1] ३, ३२२–३२३.

यवाना आचामो यवागू । यद्वा—आचाम । एष ब्रह्मकूर्चो नाम कृच्छ्र । अस्य विशेष स्मृत्यन्तराद्वेदितव्य । यथा हि—

पालाश पद्मपत्रं वा ताम्रं वाऽथ हिरण्मयम् ।
गृहीत्वाऽवहितो भूत्वा त्रिराचामेद्द्विजोत्तम ॥
गायत्र्या गृह्य गोमूत्र गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥
तथा शुक्रमसीत्याज्यं देवस्य त्वा कुशोदकम् ।
चतुर्दश्यामुपोष्याथ पौर्णमास्या समारभेत् ॥
गोमयाद्द्विगुण मूत्र शकृद्दद्याच्चतुर्गुणम् ।
क्षीरमष्टगुणं देय तथा दशगुणं दधि ॥
स्थापयित्वाऽथ दर्भेषु पालाशै पत्रकैरथ ।
तत्समुद्धृत्य होतव्यं देवताभ्यो यथाक्रमम् ॥
अग्नये चैव सोमाय सावित्र्या च तथैव च ।
प्रणवेन तथा कृत्वा ततश्च स्विष्टकृत्स्मृत ॥
एवं हुत्वा ततश्शेषं पापान् ध्यात्वा समाहितः ।
आलोड्य प्रणवेनैव निर्मन्थ्य प्रणवेन तु ॥
उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन च ॥ इति ॥ २५ ॥

**अमावास्यां निराहारः पौर्णमास्यां तिलाशनः ।**
**शुक्लकृष्णकृतात्पापान्मुच्यतेऽब्दस्य पर्वभिः॥२६**

यावकस्सप्तरात्रेण वृजिनं हन्ति देहिनाम्।
सप्तरात्रोपवासो वा दृष्टमेतन्मनीषिभिः ॥

यावक इति कस्यचित्कृच्छ्रस्यान्वर्थसञ्ज्ञा । सप्तरात्र यवान्नता। यवान्नकालमुपवासो वा । वृजिनं वर्जनीय पापमित्यर्थ ॥२३॥

पौषभाद्रपदज्येष्ठा आर्द्राकाशातपाश्रयात् ।
त्रीन् शुक्लान्मुच्यते पापात्पतनीयादृते द्विजः

पुष्यस्तिष्यो नक्षत्र, तेन युक्तश्चन्द्रमा यस्मिन्मासि पौर्णमास्या भवति स पौषमास । भाद्रपद प्रोष्ठपदानक्षत्र तेन सह पौर्णमास्या यस्मिन्मासि वर्तते स मासो भाद्रपदो नाम । तथा ज्येष्ठया वर्तत इति ज्येष्ठोऽपि मास एव । पौषभाद्रपदज्येष्ठा इति निर्देश प्रथमान्त । तेषु यथाक्रम आर्द्राकाशातपाश्रयात् आश्रयणात् । आश्रयशब्द आर्द्रादिषु प्रत्येक सम्बध्यते । आर्द्राश्रयत्व आर्द्रवासस्त्वम् । आकाशाश्रयत्वमातपाश्रयत्व चाभावरणताश्रयणात् । तत्तस्मिन्मासे सर्वदा कर्तव्यम् ? नेत्याह—त्रीन् शुक्लान् पक्षानिति शेष तत्र शुक्लपक्ष इत्यर्थ । 'कालाध्वनोरत्यन्तसयोगे' इति द्वितीया । अर्थतश्चाहर्निशमिति गम्यते । किमेव कृते सर्वस्मात्पापात्प्रमुच्यते ? न, पतनीयादृते । तस्य हि प्रायश्चित्तान्तरेण भवितव्यम् । द्विजग्रहणमनुवाद । 'जपहोमेष्टियन्त्राणि करिष्यन्नादितो द्विज ' इत्यधीतत्वात् ॥ २४ ॥

इदं चान्यत्—

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
यवाचामेन संयुक्तो ब्रह्मकूर्चोऽतिपावनः ॥

त्वरते कर्तुं कर्म सामर्थ्यजुरथर्वणामिति शेषः। व्युष्टः उपोऽन्तरितः। श्वोभूते अष्टौ च सहस्रं सावित्र्या जपं कुर्यात्। अत्र प्राजापत्येन तत्सममिति वचनादिदमन्यत् स्मृत्यन्तराद्वेदितव्यम्, प्राजापत्यादौ प्रवृत्तस्याशक्तस्य विप्रभोजनेनापि शुद्धिर्भवतीति। प्राजापत्ये तावदशक्यदिनेषु प्रतिदिनं विप्रान् पञ्चावरान् शुद्धान् भोजयेत्। एवं विधानेनैवातिकृच्छ्रे पञ्चदशावरानशक्यदिनेषु प्रतिदिनं वा विप्रमेकम्। एतत्सर्वत्र समानम्। कृच्छ्रातिकृच्छ्रेषु शतं, तप्तकृच्छ्रेषु चत्वारिंशतं, पराकनिर्णये पञ्चाशतं, चान्द्रायणे षड्विंशतिं, तुलापुंसि तु त्रयोविंशतिं, महासान्तपने षड्विंशतिम्, अथैकाहोपवासे पञ्च। त्रिरात्रे प्रत्यहं दशदशेत्यादि॥ ३०–३१॥

किं वाऽत्र बहुनोक्तेन—

**योऽन्नदस्सत्यवादी च भूतेषु कृपया स्थितः।**
**पूर्वोक्तयन्त्रशुद्धेभ्यस्सर्वेभ्यस्सोऽतिरिच्यते॥३२**

एवंविधवृत्तस्य इत्यभिप्रायः॥ ३२॥

इति चतुर्थप्रश्ने पञ्चमोऽध्यायः



उक्तानि यन्त्राणि, जपश्च कर्तव्य इत्याह—

**समाधुच्छन्दसा रुद्रा गायत्री प्रणवान्विता।**
**सप्तव्याहृतयश्चैव जप्याः पापविनाशनाः॥१॥**

सांवत्सरिकमेतद्व्रतं, तस्मादब्दस्य पर्वभिरसम्बन्धः । न पुनश्शुक्लकृष्णकृतादिति । एवं च तस्मिन् संवत्सरे मधुमांसवर्जमधश्शयनमित्यादि द्रष्टव्यम् ॥ २६ ॥

भैक्षाहारोऽग्निहोत्रिभ्यो मासेनैकेन शुद्ध्यति ।
यायावरवनस्थेभ्यो दशभिः पञ्चभिर्दिनैः ॥२७॥

यायावरेभ्यो भैक्षाहारो दशभिर्दिनैः, वनस्थेभ्यः पञ्चभिर्दिनैः इति । अन्यच्च व्याख्यातम् । एतेऽपि च त्रयः कृच्छ्राः ॥ २७ ॥

एकाहधनिनोऽन्नेन दिनेनैकेन शुद्ध्यति ।
कापोतवृत्तिनिष्ठस्य पीत्वाऽपश्शुद्ध्यते द्विजः ॥

एतावपि च द्वौ कृच्छ्रौ ॥ २८ ॥

ऋग्यजुस्सामवेदानां वेदस्यान्यतमस्य वा ।
पारायणं त्रिरभ्यस्येदनश्नन् सोऽतिपावनः॥२९

अन्यतमवेदपक्षे त्रिः । इतरथा सकृदेव ॥ २९ ॥

अथ चेत्त्वरते कर्तुं दिवसे मारुताशनः ।
रात्रौ जले स्थितो व्युष्टः प्राजापत्येन तत्समम्
गायत्र्याऽष्टसहस्रं तु जपं कृत्वोत्थिते रवौ ।
मुच्यते सर्वपापेभ्यो यदि न भ्रूणहा भवेत् ॥

त्वरते कर्तुं कर्म सामर्थ्यजुरथर्वणामिति शेष । व्युष्टः उपोऽन्तरित । श्वोभूते अष्टौ च सहस्र सावित्र्या जप कुर्यात् । अत्र प्राजापत्येन तत्सममिति वचनादिदमन्यत् स्मृत्यन्तराद्वेदितव्यम्, प्राजापत्यादौ प्रवृत्तस्याशक्तस्य विप्रभोजनेनापि शुद्धिर्भवतीति । प्राजापत्ये तावदशक्यदिनेषु प्रतिदिन विप्रान् पञ्चावरान् शुद्धान् भोजयेत् । एवं विधानेनैवातिकृच्छ्रे पञ्चदशावरा- नशक्यदिनेषु प्रतिदिन वा विप्रमेकम् । एतत्सर्वत्र समानम् । कृच्छ्रातिकृच्छ्रेषु शतं, तप्तकृच्छ्रेषु चत्वारिंशत, पराकनिर्णये पञ्चाशत, चान्द्रायणे षड्विंशतिं, तुलापुरुषे तु त्रयोविंशतिं, महा सान्तपने षड्विंशतिम्, अथैकाहोपवासे पञ्च । त्रिरात्रे प्रत्यह दशदशेत्यादि ॥ ३०–३१ ॥

किं बाऽत्र बहुनोक्तेन—

योऽन्नदस्सत्यवादी च भूतेषु कृपया स्थितः ।
पूर्वोक्तयन्त्रशुद्धेभ्यस्सर्वेभ्यस्सोऽतिरिच्यते॥३२

एवंविधवृत्तस्य इत्यभिप्राय ॥ ३२ ॥

इति चतुर्थप्रश्ने पञ्चमोऽध्याय



उक्तानि यन्त्राणि, जपश्च कर्तव्य इत्याह—

समाधुच्छन्दसा रुद्रा गायत्री प्रणवान्विता ।
सप्तव्याहृतयश्चैव जप्याः पापविनाशनाः ॥१॥

मधुच्छन्दा यासामृचामृषय‍ ताश्च शाकलसंहिताया आदितो दश सूक्तानि । ताभिस्सह रुद्राः 'नमस्ते रुद्र'[1] इति एकादशानुवाकाः । अन्यत्प्रसिद्धम् । जपादिभिः मतिपूरणे कर्तव्ये वेदितव्यम् । स्वातन्त्र्येण सर्वेषामुपयोग । तत्र कालगणना मन्त्रावृत्तिगणना च विशेषापेक्षया विज्ञेया ॥ १ ॥

यन्त्रजपौ वृत्तौ । का पुनस्ता इष्टय इत्याह—

**मृगारेष्टिः पवित्रेष्टिस्त्रिहविः पावमान्यपि ।**
**इष्टयः पापनाशिन्यो वैश्वानर्या समा हि ताः ॥**

मृगारं 'अग्नेर्मन्वेऽहोमुच'[2] इति दशहविरिष्टि । तथा पवित्रेष्टिरपि 'अग्नये पवमानाय'[3] इति दशहविरेव । त्रिहविस्सवनेष्टि । पावमानी पावमानेष्टि । वैश्वानरो द्वादशकपालो वैश्वानरी तया समन्विता एता पापनाशिन्य । नैकैकश ॥ २ ॥

आचार्य इदानीन्तनान् प्रत्याह—

**इदं चैवापरं गुह्यमुच्यमानं निबोधत ।**
**मुच्यते सर्वपापेभ्यः सर्वेभ्यः पातकादृते ॥३॥**

**पवित्रैर्मार्जनं कुर्वन् रुद्रैकादशिकां जपन् ।**
**पवित्राणि घृतैर्जुह्वन् प्रयच्छन् हेमगोतिलान् ॥४**

अल्पप्रयासेन बहुपापक्षयलाभात् गुह्यमित्युक्तम् । प्रथमस्सर्वशब्द एकैकस्मिन् पापाभ्यासार्थ । द्वितीय पापभेदापेक्ष । पवित्राणि

[1] तै स. ४-५-१. [2] तै. स, ४-७-१५, २-३-१३ [3] तै स २-२-४.

सुरभिमत्यादयो मन्त्राः । रुद्रैकादशिका 'नमस्ते रुद्र'[1] इत्येकादशानुवाकाः । पूर्वं जपन् जुह्वन् प्रयच्छन् मुच्यत इति सम्बन्धः । अत्रापि वक्ष्यमाणस्सप्तरात्र कालो भवति ॥ ३–४ ॥

योऽश्नीयाद्यावकं पक्वं गोमूत्रे सशकृद्रसे ।
सदधिक्षीरसर्पिष्के मुच्यते सोंऽहसः क्षणात् ॥५

प्रसूतो[2] यश्च शूद्रायां येनागम्या च लङ्घिता ।
सप्तरात्रात्प्रमुच्येते विधिनैतेन तावुभौ ॥ ६ ॥

यावकं पक्व यणयपानो[3] यवागुर्वा । शकृद्रसोपि गोरेव । तत्सहिते गोमूत्रे पक्वमित्यर्थः । तदेव दध्ना क्षीरेण सर्पिषा सयुक्त भवति । प्रसङ्गात्पाप तद्वक्ष्यमाण—प्रसूतो यश्चेत्यादि । सप्तरात्रादिति कालनिर्देशविरोधात् क्षणादित्ययमर्थवाद । सप्तरात्राभिप्रायो वा । 'क्षण क्षणोते प्रक्ष्णुत काल'[4] इति निर्वचनात् क्रमोदायामपि शूद्रायामपत्योत्पादन य करोति येन वाऽगम्या पैतृष्वसेय्यादिका लङ्घिता भवति लङ्घन गमन तावुभावेतेन पूर्वोक्तेन विधिना मुच्येते ॥ ५–६ ॥

न केवलमत्र—

रेतोमूत्रपुरीषाणां प्राशनेऽभोज्यभोजने ।
पर्याधानेज्ययोरेतत् परिवित्ते च भेषजम् ॥७॥

अभोज्यानां परिग्रहदुष्टानां भोजने । पर्याधान ज्यायसि तिष्ठत्यनाहिताग्नौ कनीयस आधानम् । आह च—

[1] तै स. ४-५-१. [2] प्रस्थितो. [3] यणयौवनौ. [4] यास्क २-७-३.

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥[1] इति ॥

अत्राग्रजशब्दस्यायमर्थः—अग्र एव यस्मिन् जाते सत्यात्मनो जननं सम्भवति स तं प्रत्यग्रज एवं च सति पितर्यनाहिताग्नौ सति पुत्रेण नाधातव्यमिति भवति। परीज्यायामपि एतदेव पूर्वोक्तं भेषजम्। इज्या यागः नित्येज्या ऐष्टिकपाशुकसौमिकाः, न नैमित्तिकाः काम्याश्च। ते पितरं ज्येष्ठं वोल्लङ्घ्य न कर्तव्याः, यदि कुर्यात्तत्रापि तदेव प्रायश्चित्तं 'योऽश्नीयाद्यावकं पक्वम्' इत्यादि ॥ ७ ॥

अपातकानि कर्माणि कृत्वैव सुबहून्यपि।
मुच्यते सर्वपापेभ्य इत्येतद्वचनं सताम् ॥८॥

पूर्वोक्तेन प्रायश्चित्तेनेति शेषः। सतां मन्वादीनाम् ॥ ८ ॥
सर्वत्रात्र हृ[दि स्थि]तं मूलभूतं प्रमाणमाह—

मन्त्रमार्गप्रमाणं तु विधानं समुदीरितम्।
भरद्वाजादयो येन ब्रह्मणस्समतां गताः ॥ ९ ॥

मन्त्राणां मार्गो मन्त्रमार्गः पाठः स एव प्रमाणं यस्य विधानस्य तदुदीरितं पाठमूलत्वं स्याच्चाद्दशानामपि धर्माणामुक्तं तत्, आप्राजापत्यादेरपि यन्त्रस्य। विधानं मन्त्रादेर्यन्त्रस्य विधानं मन्त्रादेर्मूलमिति अयं किलाचार्यो मन्त्रप्रमाणक इव लक्ष्यपक्षतयेन कल्पमवेक्षते 'तच्छन्दसा ब्राह्मणेन' इति। तच्छन्दसो मन्त्रात्मकस्य

[1] मनु. ३-१७१.

प्रथमनिर्देशं ब्रुवन्न छन्दसा न शक्नुयात् कर्तुमित्यापदर्दौर्बल्यमभ्यनुजानंश्च । ब्राह्मणस्सम्मतामिति वचनादभ्युदयार्थमित्येतद्विधानमिति गम्यते ॥ ९ ॥

तदाह—

**प्रसन्नहृदयो विप्रः प्रयोगादस्य कर्मणः ।**
**कामांस्तांस्तानवाप्नोति येये कामा हृदि स्थिताः ॥**

क्रियत इति कर्म । तच्च मार्गप्रमाणं विधानम् । सैषा प्रशंसा ॥

इति चतुर्थप्रश्ने षष्ठोऽध्यायः

---

**निवृत्तः पापकर्मभ्यः प्रवृत्तः पुण्यकर्मसु ।**
**यो विप्रस्तस्य सिध्यन्ति विना यन्त्रैरपि क्रियाः॥**

प्रतिषिद्धवर्जनस्य विहितानुष्ठानस्य च प्रशंसैषा । यदेवंविधस्य पुरुषस्य पूर्वोक्तयन्त्राभावेऽपि सामर्थ्यमुरथर्वणा कर्मण्यधिकारोऽस्तीति दर्शयति, तस्यापि वक्ष्यमाणो गणहोमो भवत्येव ॥ १ ॥

एवंविधाना ब्राह्मणाना प्रशसा—

**ब्राह्मणा ऋजवस्तस्माद्यद्यदिच्छन्ति चेतसा।**
**तत्तदा साधयन्त्याशु संशुद्धा ऋजुकर्मभिः॥२॥**

ऋजुकर्माणि विहितकरणप्रतिषिद्धवर्जनलक्षणानि ॥ २ ॥

अथेदानीं निरपेक्षानेकयन्त्रोपदेशप्रयोजनमाह—

एवमेतानि यन्त्राणि तावत्कार्याणि धीमता ।
कालेन यावतोपैति विग्रहं शुद्धिमात्मनः ॥३॥

कालेन कालपरिमितेन यन्त्रेण विग्रहं शरीरम् । उपैतिर्नयत्यर्थे । ततश्च द्विकर्मत्वाद्विग्रहमिति द्वितीयोपपत्तिः । एतस्तु गुरुषु गुरूणि लघुषु लघूनीत्ययमर्थोऽन्यत्र दर्शितः । आह च—

यस्मिन् कर्मण्यस्य कृते मनसस्स्यादलाघवम् ।
तस्मिन् तावत्ततः कुर्याद्यावत्तुष्टिकरं भवेत् ॥[1] इति ॥ ३ ॥

जपहोमेष्टियन्त्राण्युक्तान्युपसंहरति—

एभिर्यन्त्रैर्विशुद्धात्मा त्रिरात्रोपोषितस्ततः ।
तदारभेत येनर्द्धिं कर्मणा प्राप्तुमिच्छति ॥४॥

गणहोमस्यैवोपसंहाराभिधानं तस्यापि त्रिरात्रोपवासाङ्गत्वज्ञापनाय ॥ ४ ॥

अथेमे गणहोममन्त्राः—

क्षापवित्रं सहस्राक्षो मृगारोंऽहोमुचौ गणौ ।
पावमान्यश्च कूश्माण्ड्यो वैश्वानर्य ऋचश्च याः

क्षापवित्रं साशब्दवत् पवित्रं च, तच्च तैत्तिरीयाणां सूत्रपाठे 'अग्ने नय'[2] इत्यादिषड्डृचम् । अयमेको मन्त्रगणः तैत्तिरीयकपाठसिद्धः

[1] मनु. ११-२३३.

[2] तै. आ. ३-८-१.

गृहीतव्यः । सहस्राक्षस्तावत्पुरुषसूक्तं, तच्चाष्टादशर्चम् । मृगारो मृगाराया इष्टेर्याज्यानुवाक्या द्वाविंशतिरृचः 'अग्नेर्मन्वे'[1] इत्यनुवाकः । अंहोमुचौ तच्छन्दवन्तौ गणौ । तयो· 'या वामिन्द्रावरुणा'[2] इत्येकः चत्वारो मन्त्रास्सानुषङ्गाः । अपरो 'यो वामिन्द्रावरुणा'[2] इत्यष्टौ । तादृश एवांहश्शब्दोऽहोमुचवचनः । पावमान्योपि तच्छब्दवत्यः ऋचस्सप्तदश वा । ताश्च 'पवमानस्सुवर्जनः'[3] इत्यनुवाकः । कूश्माण्डचः 'यद्देवाः'[4] इत्याद्या विंशति ऋचः । वैश्वानर्यः 'वैश्वानरो न ऊत्या'[5] इत्यष्टौ । एते ह्ये मन्त्रगणाः मायशो विश्वेदेवार्षाः । सहस्राक्षस्तु नारायणार्षि. । तत्रानुक्तच्छन्दसः त्रैष्टुभा वेदितव्याः । 'सहस्राक्षः'[6] इत्याद्याः पञ्च अनुष्टुभः । मृगारयाज्यासु 'अनु नोऽद्यानुमतिः, अन्विदनुमते त्वम्,'[7] 'ये अप्रथेताम, उर्वी रोदसी'[1] इत्येता अनुष्टुभ । 'वैश्वानरो नः'[5] इति गायत्री । 'यदिदम्'[1] बृहती । अंहोमुचौ तु यजुषी एव । ततश्छन्दोविशेषानादरः 'यद्यजुषाऽऽज्यं यजुषाऽप उत्पुनीयात् । छन्दसाऽप उत्पुनाति'[8] इति यजुश्छन्दसोर्भेदनिर्देशात् । पावमानीषु पुनः प्रथमाद्वितीयाचतुर्थीपञ्चम्यष्टम्यो गायत्र्यः । तृतीया नवम्याद्या अन्त्यवर्ज्याश्चानुष्टुभः । कूश्माण्डीषु प्रथमाऽनुष्टुप् । द्वितीयं जागतम् तृतीया जगती । पञ्चम्यतिशाकरी । अष्टमी जगती । नवमीपङ्क्तिः । दशम्येकादश्यौ शाक्वर्यौ । त्रयोदश्यत्यष्टिः । चतुर्दश्यनुष्टुप् । ततो गायत्र्यः । अन्त्योऽनुष्टुप् । वैश्वानरीणामाद्ये गायत्र्यौ । सर्वा लिङ्गोक्तदेवताः । सहस्राक्षस्तु पौरुषः ॥ ९ ॥

---

[1] तै. स. ४-७-१५. [2] तै. स. २-३-१३. [3] तै. आ. १-४-८.
[4] तै. आ २-३. [5] ,, १-५-११. [6] तै. आ. ३-१२.
[7] तै. स. ३-३-११. [8] तै. आ. १-३-४.

ततः किमित्यत आह—

घृतौदनेन ता जुह्वन् सप्ताहं सवनत्रयम् ।
मौनव्रती हविष्याशी निगृहीतेन्द्रियक्रियः ॥ ६

घृताप्लुतेन ओदनेन ताः प्रतिमन्त्रं हस्तेन दर्व्या वा परिभाषासिद्धया 'दर्व्याऽन्नस्य जुहोति'[1] इति । सप्ताहमिमानि व्रतानि मौनव्रती इत्यादीनि ॥ ६ ॥

अथ व्रती सवनहोमानन्तरम्—

सिंहे म इत्यपां पूर्णे पात्रेऽवेक्ष्य चतुष्पथे ।
मुच्यते सर्वपापेभ्यो महतः पातकादपि ॥ ७ ॥

उदपात्रमादाय चतुष्पथं गत्वा प्राङ्मुख उपस्थं कृत्वा तस्मिन्नेव उदपात्रेऽवेक्ष्यमाणः पापं ध्यायन् विनयितुन् ब्रूयात् । 'सिंहे मे मन्युः' इत्यन्तमेतमनुवाकं निगद्य निनीयापो नैर्ऋत्यां दिशि परास्य पात्रमनवेक्षमाणो हस्तपादान् प्रक्षाल्य यातेनैव मार्गेण यथेतद्गमति तदेतदुक्तम् । 'सिंहे म इत्यपां पूर्णे' इत्यत्रापरे याज्ञिकाः प्रयोगज्ञंमन्यमाना दार्विहोमिकीं परिचेष्टां कुर्वते । अनाम्नातया च पक्वहोमवत्, ते च स्विष्टकृदुपहोमाः इति वदन्तः । तद्युक्तायुक्ततया विचारणीयम् ॥ ७ ॥

वृद्धत्वे यौवने बाल्ये यः कृतः पापसञ्चयः ।
पूर्वजन्मसु वा ज्ञानात्तस्मादपि विमुच्यते ॥८॥

[1] बौ. परि. १-६-११.

फलविधि फलार्थवादोऽयम् ॥ ८ ॥

भोजयित्वा द्विजानन्ते पायसेन सुसर्पिषा ।
गोभूमितिलहेमानि भुक्तवद्भ्यः प्रदाय च ॥९॥

विप्रो भवति पूतात्मा निर्दग्धवृजिनेन्धनः ।
काम्यानां कर्मणां योग्यः तथाऽऽधानादिकर्मणाम्॥

अन्ते सप्ताहस्य ततस्सप्तम एवाहन्यपराह्णिकप्रयोगान्तर भोजनादि गम्यते । द्विजास्त्र्यवरा । गवादीना समुच्चय । स च भुक्तवद्भ्यच प्रत्येक भवति । विप्रग्रहण द्विजातिप्रदर्शनार्थम् । वृजिन पापम् । तदेवेन्धनम् । तन्निर्दग्ध तेनेति विग्रह । योग्यः अधिकारी । अन्यथाऽनधिकारीति गम्यते । एषा तावद्गणहोमक्रिया ह्यात्मन एव प्रयोक्तव्या नान्यस्य ॥ ९–१० ॥

इति चतुर्थे सप्तमोऽध्याय

———※※※———

तत्र दोषमाह—

अतिलोभात्प्रमादाद्वा यः करोति क्रियामिमाम् ।
अन्यस्य सोऽहसाऽऽविष्टो गरगीरिव सीदति ॥१॥

आचार्यस्य पितुर्मातुरात्मनश्च क्रियामिमाम् ।
कुर्वन्भात्यर्कवद्विप्रस्सा कार्यैषामतः क्रिया ॥ २ ॥

यस्माद्येषां कुर्वन्नादित्यवद्भाति तस्मादेतेषाम् । मातुः पृथग्ग्रहणात् पितरि मृते पितुर्मातुरेनोनिवृत्त्यर्थमेषां पुत्रेण कर्तव्येति गम्यते । 'आत्मग्रहणं दृष्टार्थम् । पितृग्रहणं पुनः पुत्रस्यापि प्रदर्शनार्थम् ॥ १—२ ॥

तदाह—

क एतेन सहस्राक्षं पवित्रेणाकरोच्छुचिम् ।
अग्निं वायुं रविं सोमं यमादींश्च सुरेश्वरान् ॥

कः प्रजापतिस्तस्य पुत्राः सहस्राक्षाग्न्यादयः । पवित्रेण गणहोमेन ॥ ३ ॥

उक्तः क्रत्वर्थतया गणहोमः । अधुना स एव पुरुषार्थतयोच्यते—

यत्किञ्चित्पुण्यनामेह त्रिषु लोकेषु विश्रुतम् ।
विप्रादि तत्कृतं केन पवित्रक्रिययाऽनया ॥४॥
प्राजापत्यमिदं गुह्यं पापघ्नं प्रथमोद्भवम् ।
समुत्पन्नान्यतः पश्चात्पवित्राणि सहस्रशः॥५॥

इदमष्टगणहोमकर्म प्रजापतेस्सकाशात् प्रथमोद्भूतम् । अन्यानि तु यन्त्राण्यतः पश्चादुत्पन्नानि ॥ ४—६ ॥

अथास्यैव कालविकल्पाः—

योऽब्दायनर्तुपक्षाहान् जुहोत्यष्टौ गणानिमान्।
पुनाति चात्मनो वंश्यान् दश पूर्वान् दशापरान्॥

कर्तुस्तु कालाभिनियमात् फलविशेष कल्प्यते । अब्दस्संवत्सर । अयनं तदर्धं आदित्यस्य दक्षिणोत्तरायणगमनेन । ऋतु अब्द-षड्भागो वसन्तादि । तदर्धं मास । तदर्धं पक्ष शुक्ल कृष्णो वा । अहस्तु प्रसिद्धम् । एतदब्दादिभिरेव सम्बध्यत इति केचित् । कल्पान्तरमित्यपरे ॥ १ ॥

अथ—

एतानष्टौ गणान् होतुं न शक्नोति यदि द्विजः ।
एकोपि तेन होतव्यो रजस्तेनास्य नश्यति ॥

तत्राप्यशक्तौ—

सूनवो यस्य शिष्या वा जुह्वत्यष्टौ गणानिमान् ।
अध्यापनपरिक्रीतैरंहसस्सोपि मुच्यते ॥ ८ ॥

अध्यापनपरिक्रीतै तेनैवाध्ययनादिना ॥ ८ ॥

तदसम्भवेऽप्याह—

धनेनापि परिक्रीतैरात्मपापजिघांसया ।
हावनीया ह्यशक्तेन नावसाद्यश्शरीरधृक् ॥

हावनीया होम कारयितव्या । अन्येनापि कारयितव्यत्वे नावसाद्यो न क्लेशनीय । धने विद्यमाने किमित्यात्मनश्शरीर-शोषण हविष्यादिभि क्रियेतेत्यभिप्राय । एव च मौनव्रतान्यपि कर्तुरेव । न कारयितु । नावसाद्य इति वचनात् । 'गर-गीरिव सीदति' इति दोषोपि कर्तुरेव न कारयितु ॥ ९ ॥

उपरागे वर्तमाने श्राद्धे यत्किञ्चित्—

धनस्य क्रियते त्यागः कर्मणां सुकृतामपि ।
पुंसोऽनृणस्य पापस्य विमोक्षः क्रियते क्वचित्॥

अनृणस्यापि पुंसो यद्धर्मतस्त्याग उच्यते क्वचित्क्रियते । किमर्थमुक्तम्? पुण्यानामपि कर्मणां सिद्धये । गणहोमार्थं पुनः धनत्यागे क्रियमाणे पापस्यैव विमोक्षः क्रियते न धनस्येत्यभिप्रायः ॥ १० ॥

सोऽयं प्रशंसाप्रपञ्च आरभ्यते । द्विजः कथं रोचेत, ततोऽनुष्ठीयेतेति—

मुक्तो यो विधिनैतेन सर्वपापार्णसागरात् ।
आत्मानं मन्यते शुद्धं समर्थं सर्वकर्मसु॥११॥

पापसमुद्राच्चोत्तीर्णमात्मानं कर्मावश्यं मन्यते ॥ ११ ॥

किंच—

ज्ञायते चामरैः द्युस्थैः पुण्यकर्मेति भूस्थितः ।
देववन्मोदते भूयस्स्वर्गलोकेऽपि पुण्यकृत्॥१२

द्युस्थैर्देवैर्भूमिष्ठोऽपि पुण्यकर्मेति ज्ञायते । तथा च श्रुतिः—'यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वाति'[1] इति ॥ १२ ॥

[1] याज्ञिकी. ११.

सर्वपापार्णमुक्तात्मा क्रिया आरभते तु याः ।
अयत्नेनैव तास्सिद्धिं यान्ति शुद्धशरीरिणः॥१३

प्राजापत्यमिदं पुण्यमृषिभिस्समुदीरितम् ।
इदमध्यापयेन्नित्यं धारयेच्छृणुतेऽपि वा ॥१४॥

मुच्यते सर्वपापेभ्यो ब्रह्मलोके महीयते ।
इदमेतद्गणं होमं धारयेदथ वा जपेत् ॥ १५ ॥

शृणोतु वा विधिं स्मृत्वा सर्वपापैः प्रमुच्यते ।
सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते ॥ १६ ॥

इदमिति धर्मशास्त्रमुच्यते । गणहोममन्त्रमेव वेत्यर्थः । अत्राध्यापनधारणश्रवणानां पूर्वपूर्वं गरीयः ॥ १३–१६ ॥

अथ मन्त्रपुरश्चरणमाह—

यान् सिषाधयिषुर्मन्त्रान् द्वादशाहानि तान्
जपेत् ।
घृतेन पयसा दध्ना प्राश्य निश्योदतं सकृत् ॥

द्वादशाहानि सकृत्सकृत्प्राश्य जपेदिति सम्बन्धः । स च "मुखं व्यादाय स्वपिति" इतिवत् द्रष्टव्यः । सिषाधयिषुः साधयितुमिच्छन्। घृतेनेति घृतान्नेनेत्यभिप्रायः ॥ १७ ॥

ऋग्यजुस्सामवेदानामपि—

**दशावरं तथा होमः सर्पिषा सवनत्रयम् ।**
**पूर्वसेवा भवेदेषा मन्त्राणां कर्मसाधने ॥**
**मन्त्राणां कर्मसाधन इति ॥ १८ ॥**

वेदसम्बन्धिमन्त्रसम्बन्धिन्याश्च 'षष्ठा वैश्वानर्यः' इत्यस्या न सम्बन्धः । सा च वैदिकानामेव मन्त्राणामेषा पूर्वसेवा पुरश्चरणं, नेतरादिति ज्ञापनार्थम् । मन्त्राणां कर्मसाधन इति । मन्त्रैरिष्टानिष्टप्राप्तिपरिहारासिद्धावित्यर्थः । तथा च शौनकः—'पुरश्चरणमादौ मन्त्राणां सिद्धिकारणम्' इति ॥ १८ ॥

इति श्रीबोधायनीये धर्मविवरणे गोविन्दस्वामिकृते
चतुर्थप्रश्नेऽष्टमोऽध्यायः, चतुर्थप्रश्नस्समाप्तः



# बोधायनधर्मसूत्रस्थपदसूची.



## अ

## आ

## ए

## छ



## ज

## ध

## प

## फ



## ब

## स

